# KALAPA VYAKARANAM

A

SANSKRIT GRAMMAR

BY

SARVAVARMAH

WITH THE COMMENTARY,

DURGA SINGHA

EDITED AND PUBLISHED BY


PANDIT JIBANANDA VIDYASAGARA B. A.

Superintendent Free Sanskrit College,

No. 2 Ramanatha Majumdar's Street Calcutta.





CALCUTTA.

*Printed at the Ramayana Press.*

1884.

# कलापव्याकरणम्

---

श्रीदुर्गसिंहकृतवृत्तिसमेतम्

बि, ए, उपाधिधारिणा

श्रीजीवानन्द विद्यासागर भट्टाचार्य्येण

संस्कृतम्

प्रकाशितञ्च



कलिकाता-राजधान्याम्

रामायण-यन्त्रे

मुद्रितम्

इं १८८४।

अथ

श्रीदुर्गसिंहविरचितवृत्तिसहितं

# कातन्त्रम्।

॥ गणेशाय नमः ॥

देवदेवं प्रणम्यादौ सर्वज्ञं सर्वदर्शिनम्।
कातन्त्रस्य प्रवक्ष्यामि व्याख्यानं शार्ववर्मिकम्॥

## सिद्धो वर्णसमाम्नायः ॥ १ ॥

सिद्धः खलु वर्णानां समाम्नायो वेदितव्यः। न पुनरन्यथोपदेष्टव्य इत्यर्थः॥ सिद्धशब्दोऽत्र नित्यार्थो निष्पन्नार्थः प्रसिद्धार्थो वा। यथा सिद्धमाकाशम्। सिद्धमन्नम्। काम्पिल्यः सिद्ध इति। वर्णा अकारादयः। तेषां समाम्नायः पाठक्रमः॥

## तत्र चतुर्दशादौ स्वराः ॥ २ ॥

तस्मिन्वर्णसमाम्नायविषये आदौ ये चतुर्दश वर्णास्ते स्वरसंज्ञा भवन्ति। अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ। यथानुकरणे ह्रस्व ऌकारोऽस्ति तथा दीर्घोऽप्यस्तीति मतम्॥ स्वरप्रदेशाः। स्वरोऽवर्णवर्जो नामी [का० १. १. ७] इत्येवमादयः॥

दश समानाः ॥ ३ ॥

तस्मिन्वर्णसमाम्नायविषय आदौ ये दश वर्णास्ते समानसञ्ज्ञा भवन्ति। अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ॥ समानप्रदेशाः। समानः सवर्णे दीर्घी भवति परश्च लोपम् [का० १. २. १] इत्येवमादयः ॥

तेषां द्वौ द्वावन्योन्यस्य सवर्णौ ॥ ४ ॥

तेषामेव दशानां यौ द्वौ द्वौ वर्णौ तावन्योन्यस्य सवर्णसञ्ज्ञौ भवतः। अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ॥ तेषां ग्रहणं व्यत्ययार्थम्। तेन ह्रस्वयोर्द्वयोर्दीर्घयोश्च सवर्णसंज्ञा सिद्धेति ॥ सवर्णप्रदेशाः। समानः सवर्णे दीर्घी भवति परश्च लोपम् [का० १ २. १.] इत्येवमादयः ॥

पूर्वो ह्रस्वः ॥ ५ ॥

द्वयोर्द्वयोः सवर्णसञ्ज्ञयोर्यो यः पूर्वो वर्णः स स ह्रस्वसंज्ञो भवति। अ इ उ ऋ ऌ ॥ ह्रस्वप्रदेशाः। स्वरो ह्रस्वो नपुंसके [का० २. ४ ५२] इत्येवमादयः।

परो दीर्घः ॥ ६ ॥

द्वयोर्द्वयोः सवर्णसञ्ज्ञयोर्यो यः परो वर्णः स स दीर्घसञ्ज्ञो भवति। आ ई ऊ ॠ ॡ ॥ ह्रस्वो लघुर्दीर्घो गुरुरित्यचारणवशाद्गम्यते। तथा संयोगे सति ह्रस्वोऽपि गुरुः। गुरुमतोऽनृच्छ इति वर्जनाच्च ॥ दीर्घप्रदेशाः।

रो रे लोपं स्वरश्च पूर्वो दीर्घः [का० १. ५. १७] इत्येवमादय ।

## स्वरोऽवर्णवर्जो नामी ॥ ७ ॥

अवर्णवर्जः स्वरो नामिसंज्ञो भवति । इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ ॥ नामिप्रदेशाः । नामिपरो रम् [का० १. ५. १२] इत्येवमादयः ॥

## एकारादीनि सन्ध्यक्षराणि ॥ ८ ॥

एकारादीनि स्वरनामानि सन्ध्यक्षराणि भवन्ति । ए ऐ ओ औ ॥ सन्ध्यक्षरप्रदेशाः । सन्ध्यक्षरे च [का० ३. ६. २८] इत्येवमादयः ॥

## कादीनि व्यञ्जनानि ॥ ९ ॥

ककारादीनि हकारपर्यन्तानि व्यञ्जनसंज्ञकानि भवन्ति । क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह ॥ व्यञ्जनप्रदेशाः । व्यञ्जनमस्वरं परं वर्णं नयेत् [का० १. १. २१] इत्येवमादयः ॥

## ते वर्गाः पञ्च पञ्च पञ्च ॥ १० ॥

ते कादयो मावसाना वर्णाः पञ्च पञ्च भूत्वा पञ्चव ते वर्गसंज्ञा भवन्ति । क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म ॥ वर्गप्रदेशाः ।

वर्गाणां प्रथमद्वितीयाः शषसाश्चाघोषाः [ का० १. १. ११]
इत्येवमादयः ॥

## वर्गाणां प्रथमद्वितीयाः शषसाश्चाघोषाः ॥११॥

वर्गाणां प्रथमद्वितीया वर्णाः शषसाश्चाघोषसंज्ञा भवन्ति। क ख च छ ट ठ त थ प फ श ष स। अघोषप्रदेशाः। अघोषे प्रथमः [का० २. ३. ६१] इत्येवमादयः॥

## घोषवन्तोऽन्ये॥ १२ ॥

अघोषेभ्यो येऽन्येऽवशिष्टा गादयस्ते घोषवत्संज्ञा भवन्ति। ग घ ङ ज झ ञ ड ढ ण द ध न ब भ म य र ल व ह॥ घोषवत्प्रदेशाः। घोषवति लोपम् [का० १. ५. ११] इत्येवमादयः॥

## अनुनासिका ङञणनमाः॥ १३॥

ङ ञ ण न म। इत्येते वर्णा अनुनासिकसंज्ञा भवन्ति॥ अनुनासिकप्रदेशाः। धुड् व्यञ्जनमनन्तःस्थानुनासिकम् [का० २. ६. १३] इत्येवमादयः॥

## अन्तःस्था यरलवाः॥ १४ ॥

य र ल व। इत्येते वर्णा अन्तःस्थासंज्ञा भवन्ति॥ अन्तःस्थाप्रदेशाः। उवर्णस्य जान्तःस्थापवर्गपरस्यावर्णे [का० ३. ३. २७] इत्येवमादयः।

## ऊष्माणः शषसहाः॥ १५ ॥

श ष स ह। इत्येते वर्णा ऊष्मसंज्ञा भवन्ति। शिड्ति

शादयः [का० ३. ८. ३२] इति पुनर्लघुसंज्ञा एताः पूर्वाचार्य्यप्रसिद्धा अन्वर्था इह ज्ञाप्यन्ते ॥

## अः इति विसर्जनीयः ॥ १६ ॥

अकार इहोच्चारणार्थः। इति कुमारीस्तनयुगाकृतिर्वर्णो विसर्जनीयसंज्ञो भवति ॥ विसर्जनीयप्रदेशाः। विसर्जनीयश्छे वा शम् [का० १. ५. १] इत्येवमादयः ॥

## ×क इति जिह्वामूलीयः ॥ १७ ॥

ककार इहोच्चारणार्थः। इति वज्राकृतिर्वर्णो जिह्वामूलीयसंज्ञो भवति ॥ जिह्वामूलीयप्रदेशाः। कखयोर्जिह्वामूलीयं न वा [का० १. ५. ४] इत्येवमादयः ॥

## ꣵप इत्युपध्मानीयः ॥ १८ ॥

पकार इहोच्चारणार्थः। इति गजकुम्भाकृतिर्वर्ण उपध्मानीयसंज्ञो भवति ॥ उपध्मानीयप्रदेशाः। पफयोरुपध्मानीयं न वा [का० १. ५. ५] इत्येवमादयः।

## अं इत्यनुस्वारः ॥ १९ ॥

अकार इहोच्चारणार्थः। इति बिन्दुमात्रो वर्णोऽनुस्वारसंज्ञो भवति ॥ अनुस्वारप्रदेशाः। मोऽनुस्वारं व्यञ्जने [का० १. ४. १५] इत्येवमादयः ॥

## पूर्वपरयोरर्थोपलब्धौ पदम् ॥ २० ॥

पूर्वपरयोः प्रकृतिविभक्त्योरर्थोपलब्धौ सत्यां ...

पदसंज्ञो भवति । ते ऽत्र । यजन्ते ऽत्र । उपलब्धिग्रहणं त्रिभक्त्यर्थम् ॥ पदप्रदेशाः । एदोत्परः पदान्ते लोपमकारः [का० १. २. १७] इत्येवमादयः ॥

## व्यञ्जनमस्वरं परं वर्णं नयेत् ॥ २१ ॥

व्यञ्जनं परं वर्णं नयेत् । न तु स्वरम् । व्यञ्जनमन्वक् । स्वरः स्वयं राजते हि । तद्गच्छति । षडत्र । क+खनति । क‿फलतीति योगवाहत्वात् स्वरूपमेतत् ॥

## अनतिक्रमयन्विश्लेषयेत् ॥ २२ ॥

वर्णान् सघटितान् संमिलितान् अनतिक्रमयन्विश्लेष येत् । विघटयेदित्यर्थः । वैयाकरणः । उच्चकैः । असमोहार्थोऽयं योगः ॥

## लोकोपचाराद्ग्रहणसिद्धिः ॥ २३ ॥

लोकानामुपचारो व्यवहारः । तस्मादनुक्तस्यापि ग्रहणस्य सिद्धिर्वेदितव्येति । निपाताव्ययोपसर्गकारककालसंख्यालोपादयः ॥ तथा वरणा इति नगरस्यापि संज्ञा । पञ्चाला वरणा इति जनपदस्यापि । पञ्चाला वरणा इति योगो न दृश्यते । संज्ञाशब्दत्वात् ॥ हरीतक्यः फलानीति । फलेष्वपि स्त्रियां वृत्तिः ॥ एवमन्ये ऽपि संज्ञाशब्दा इव तद्धिता लोकत सिद्धाः । खलतिकं वनानीति । तेषां वनानामेकवचनान्तमेव नाम ॥ शब्दानामेकार्थेऽपि लिङ्गवचनभेदः । यथा । आपो जलम् । दाराः कलत्रं भार्य्येति ॥ वैदिका

लौकिकाश्चैव ये यथोक्तास्तथैव च। निर्णीतार्थास्तु विज्ञेया लोकात्तेषामसङ्ग्रहः ॥

॥ इति दौर्गसिंह्यां वृत्तौ सन्धौ प्रथमः पादः समाप्तः ॥

---

## समानः सवर्णे दीर्घी भवति परश्च लोपम् ॥१॥

समानसञ्ज्ञको वर्णः सवर्णे परे दीर्घी भवति परश्च लोपमापद्यते। दण्डाग्रम्। सागता। दधीदम्। नदीहते। मधूदकम्। वधूढम्। पितॄषभः। कॄकारः। ऌकारेण ॥ होतॄकार इति वक्तव्यम् ॥ समानग्रहणमश्रुतादपि दीर्घात्समानात्सवर्णस्य लोपार्थम्। तेन हृचाः ॥

## अवर्ण इवर्णे ए ॥ २ ॥

अवर्ण इवर्णे परे एर्भवति परश्च लोपमापद्यते। वर्णग्रहणे सवर्णग्रहणम्। तवेहा। सेयम् ॥ चकारोऽधिकारोऽनुक्तसमुच्चयार्थः। तेन क्वचित्पूर्वोऽपि लुप्यते। हलीषा। लाङ्गलीषा। मनस ईषा। मनीषा ॥

## उवर्णे ओ ॥ ३ ॥

अवर्ण उवर्णे परे ओर्भवति परश्च लोपमापद्यते। तवोहनम्। गङ्गोदकम् ॥

## ऋवर्णे अर् ॥ ४ ॥

अवर्ण ऋवर्णे परे अर्भवति परश्च लोपमापद्यते। तव कारः। सकारेण ॥ ऋणप्रवसनवत्सतरकम्बलदशानामृणे

क्वचिद्द्वयोऽपि दीर्घता। ऋणार्णम्। प्रार्णमित्येवमादयः॥ ऋते च तृतीयासमासे। शीतेन ऋतः। शीतार्त्तः॥ ऋति धातोरुपसर्गस्य। प्रार्छति॥ नामधातोर्वा। प्रार्षभीयति। प्रर्षभीयति॥

## लृवर्णे अल्॥ ५॥

अवर्णं लृवर्णे परे अल्भवति परश्च लोपमापद्यते। तव ल्कारः। तल्कारेण॥ उपसर्गस्य वा लृति धातोरलो दीर्घ। उपाल्कारीयति। उपल्कारीयति॥

## एकारे ऐ ऐकारे च॥ ६॥

अवर्ण एकारे ऐकारे च परे ऐर्भवति परश्च लोपमापद्यते। तवैषा। सैन्द्री॥ चकाराधिकारात् क्वचित्पूर्वोऽपि लुप्यते। एवे चानियोगे। अद्येव। इहेव॥ नियोगे तु। अद्यैव गच्छ। इहैव तिष्ठ॥ स्वस्यादेरीरिणोरपि वक्तव्यम्। स्वैरम्। स्वैरी॥

## ओकारे औ औकारे च॥ ७॥

अवर्णं ओकारे औकारे च परे और्भवति परश्च लोपमापद्यते। तवौदनम्। सौपगवी॥ चकाराधिकारादुपसर्गावर्णलोपो धातोरेदोतोः। प्रेलयति। परोखति॥ इणेधत्योर्न। उपैति। उपैधते॥ नामधातोर्वा। उपेकीयति। उपैकीयति। प्रोषधीयति। प्रौषधीयति॥ ओष्ठोत्वोः समासे वा। बिम्बोष्ठः। बिम्बौष्ठः। स्थूलोतुः। स्थूलौतुः॥ समास इति किम्। हे छात्रौष्ठं पश्य। अद्योतु पश्य॥

ओमि च नित्यम् । अद्योम् । सोमित्यवोचत् ॥ अक्षस्योहमू-
ढिन्याम् । अक्षौहिणी सेना ॥ प्रष्ठोढोढ्योष । प्रौढः ।
प्रौढिः एवैष्ययोरेत्वं लोपस्यापवादः । प्रैषः । प्रैष्यः । ईषेस्तु
प्रेषः । प्रेष्यः ॥

## इवर्णो यमसवर्णे न च परो लोप्यः ॥ ८ ॥

इवर्णो यमापद्यतेऽसवर्णे न च परो लोप्यः । दध्यत्र ।
नद्येषा इवर्ण इति किम् । पचति ॥ असवर्ण इति किम् ।
दधि ॥

## वमुवर्णः ॥ ९ ॥

उवर्णो वमापद्यतेऽसवर्णे न च परो लोप्यः । मध्वत्र ।
वध्वासनम् ॥

## रमृवर्णः ॥ १० ॥

ऋवर्णो रमापद्यतेऽसवर्णे न च परो लोप्यः । पित्रर्थः ।
क्रर्थः ॥

## लम्लृवर्णः ॥ ११ ॥

लृवर्णो लमापद्यतेऽसवर्णे न च परो लोप्यः । लनु-
बन्धः । लाकृतिः ॥

## ए अय् ॥ १२ ॥

एकारो अय् भवति न च परो लोप्यः । नयति ।
अग्नये ॥

## ऐ आय् ॥ १३

क्वचिद्ह्रस्वोऽपि दीर्घता। ऋणार्णम्। प्रार्णमित्येवमादयः॥ ऋते च तृतीयासमासे। शीतेन ऋतः। शीतार्त्तः॥ ऋति धातोरुपसर्गस्य। प्रार्च्छति॥ नामधातोर्वा। प्रार्षभीयति। प्रर्षभीयति॥

## ऌवर्णे अल्॥ ५॥

अवर्ण ऌवर्णे परे अल्भवति परश्च लोपमापद्यते। तवल्कारः। सल्कारेण॥ उपसर्गस्य वा ऌति धातोरलो दीर्घः। उपाल्कारीयति। उपल्कारीयति॥

## एकारे ऐ ऐकारे च॥ ६॥

अवर्ण एकारे ऐकारे च परे ऐर्भवति परश्च लोपमापद्यते। तवैषा। सैन्द्री॥ चकाराधिकारात् क्वचित्पूर्वोऽपि लुप्यते। एवे चानियोगे। अद्येव। इहेव॥ नियोगे तु। अद्यैव गच्छ। इहैव तिष्ठ॥ स्वस्यादेरीरिणोरपि वक्तव्यम्। स्वैरम्। स्वैरी॥

## ओकारे औ औकारे च॥ ७॥

अवर्ण ओकारे औकारे च परे और्भवति परश्च लोपमापद्यते। तवौदनम्। सौपगवी॥ चकाराधिकारादुपसर्गावर्णलोपो धातोरेदोतोः। प्रेलयति। परोखति॥ इणेधत्योर्न। उपैति। उपैधते॥ नामधातोर्वा। उपेकीयति। उपैकीयति। प्रोषधीयति। प्रौषधीयति॥ ओष्ठोत्वोः समासे वा। बिम्बोष्ठः। बिम्बौष्ठः। स्थूलोतुः॥ स्थूलौतुः॥ समास इति किम्। हे कालौष्ठ पश्य। खलौष्ठ पश्य॥

ओमि च नित्यम् । अद्योम् । सोमित्यवोचत् ॥ अक्षस्यौत्वमू-
हिन्याम् । अक्षौहिणी सेना ॥ प्रस्योढोढ्योश्च । प्रौढः ।
प्रौढिः एषैष्ययोरैत्वं लोपस्यापवादः । प्रैषः । प्रैष्यः । ईषेस्तु
प्रेषः । प्रेष्य ॥

## इवर्णो यमसवर्णे न च परो लोप्यः ॥ ८ ॥

इवर्णो यमापद्यतेऽसवर्णे न च परो लोप्यः । दध्यत्र ।
नद्येषा इवर्ण इति किम् । पचति ॥ असवर्ण इति किम् ।
दधि ॥

## वमुवर्णः ॥ ९ ॥

उवर्णो वमापद्यते ऽ सवर्णे न च परो लोप्यः । मध्वत्र ।
वध्वासनम् ॥

## रमृवर्णः ॥ १० ॥

ऋवर्णो रमापद्यतेऽसवर्णे न च परो लोप्यः । पित्रर्थः ।
ऋर्थः ॥

## लमॢवर्णः ॥ ११ ॥

ॡवर्णो लमापद्यते ऽ सवर्णे न च परो लोप्य । लनु-
बन्धः । लाकृतिः ॥

## ए अय् ॥ १२ ॥

एकारो अय् भवति न च परो लोप्य. । नयति ।
अग्नये ॥

## ऐ आय् ॥ १३

ऐकार आय् भवति न च परो लोप्यः । नायकः । रायेन्द्रौ ॥

**ओ अव् ॥ १४ ॥**

ओकारो अव् भवति न च परो लोप्यः । लवणम् । पटवोतु ॥

**औ आव् ॥ १५ ॥**

औकार आव् भवति न च परो लोप्य । गावौ । गावः ॥ एतेषु विसन्धिः पृथग्योगश्च स्पष्टार्थः । विवक्षितश्च सन्धिर्भवति । गवाजिनम् । गोऽजिनमिति स्वरे विभाषा । गवाक्षः । गवेन्द्र इति नित्यमकारवर्णागमः ॥

**अयादीनां यवलोपः पदान्ते न वा लोपे तु प्रकृतिः ॥ १६ ॥**

अय् इत्येवमादीनां पदान्ते वर्तमानानां यवयोर्लोपो भवति न वा । लोपे तु प्रकृति स्वभावो भवति । त आहुः । तयाहुः । तस्मा आसनम् । तस्मायासनम् । पट इह । पटविह । असा इन्दुः । असाविन्दुः ॥ अयादीनामिति किम् । दध्यत्र । मध्वत्र ॥ पदान्त इति किम् । नयनम् । नायकः ॥

**एदोत्परः पदान्ते लोपमकारः ॥ १७ ॥**

एदोद्भ्यां परोऽकारः पदान्ते वर्तमानो लोपमापद्यते । तेऽत्र । पटोऽत्र ॥ एदोद्भ्यामिति किम् । तावत्र ॥ पदान्तग्रहणं पदान्ताधिकारनिवृत्त्यर्थम् । तेन चितम् । सुतम् ॥

## न व्यञ्जने स्वराः संधेयाः॥ १८॥

न खलु व्यञ्जने परे स्वराः संधानीया भवन्ति। देवीगृहम्। पटुहस्तम्। मातृमण्डलम्। जले पद्मम्। रैधृतिः। वायो गतिः। नौयानम्॥ नञा निर्दिष्टमनित्यम्। तेन पित्र्यम्। गव्यूतिः। अध्वमाने सञ्ज्ञेयम्॥

॥ इति दौर्गसिंह्यां वृत्तौ सन्धौ द्वितीयः पादः समाप्तः॥

---

## ओदन्ता अ इ उ आ निपाताः स्वरे प्रकृत्या॥१॥

ओदन्ता निपाता अ इ उ आश्च केवलाः स्वरे परे प्रकृत्या तिष्ठन्ति। नो अत्र। अहो आश्चर्यम्। अथो एवम्। अ अपेहि। इ इन्द्र पश्य। उ उत्तिष्ठ। आ एवं किं मन्यसे। आ एवं नु तत्॥ एवमिति किम्। न वा उ॥ अन्तग्रहणमकारादीनां केवलार्थम्। तेन चेतीतीह नन्विति वेति॥ निपाता इति किम्। पट इह। पटविह। ईषतुः। ऊषतुः। आटतुः॥

## द्विवचनमनौ॥ २॥

द्विवचनं यदनौभूतं तत्स्वरे परे प्रकृत्या तिष्ठति। औकाररूपं परित्यज्य रूपान्तरं प्राप्तमित्यर्थः। अग्नी एतौ। पटू इमौ। शाले एते। माले इमे॥ द्विवचनमिति किम्। चित्रन्वत्र॥ पर्युदासः किम्। अयजाव ह्यावाम्। देवयोरत्र॥ अनौभूतमिति किम्। तावत्र॥

**बहुवचनममी ॥ ३ ॥**

बहुवचनं यदमीरूपं तत्स्वरे परे प्रकृत्या तिष्ठति। अमी अश्वाः। अमी एडकाः॥ बहुवचनमिति किम्। अमूत्र॥ अमीरूपमिति किम्। तयाहुः॥

**अनुपदिष्टाश्च ॥ ४ ॥**

ये चाक्षरसमाम्नायविषये व्यक्त्या नोपदिष्टा जात्या तु स्वरसंज्ञिताः प्लुतास्ते स्वरे परे प्रकृत्या तिष्ठन्ति। आ गच्छ भो देवदत्त ३ अत्र। तिष्ठ भो यज्ञदत्त ३ इह॥ दूराह्वाने गाने रोदने च प्लुतास्ते लोकतः सिद्धाः॥

॥ इति दीर्घसंज्ञायां वृत्तौ सन्धौ तृतीयः पादः समाप्तः॥

---

**वर्गप्रथमाः पदान्ताः स्वरघोषवत्सु तृतीयान्॥१॥**

वर्गप्रथमाः पदान्ताः स्वरघोषवत्सु तृतीयानापद्यन्ते। वागत्र। षड्गच्छन्ति॥ वर्गप्रथमा इति किम्। भवानाह॥ पदान्ता इति किम्। शकनीयम्॥ स्वरघोषवत्स्विति किम्। वाक् पूता। षट् कुर्वन्ति॥

**पञ्चमे पञ्चमांस्तृतीयान्न वा ॥ २ ॥**

वर्गप्रथमाः पदान्ताः पञ्चमे परे पञ्चमानापद्यन्ते तृतीयान्न वा। वाङ्मती। वाग्मती। षण्मुखानि। षड्मुखानि। तन्नयनम्। तद्नयनम्। त्रिष्टुम्मिनोति। त्रिष्टुब्मिनोति॥ पदान्ते धुटां प्रथमे सति। इगयनम्। ज्ञानभुत्कथो वा।

व्यवस्थितविभाषया प्रत्ययपञ्चमे नित्यं पञ्चमो भाषायाम्। वाङ्मयम्। चिन्मात्रम्॥

## वर्गप्रथमेभ्यः शकारः स्वरयवरपरश्छकारं न वा॥ ३॥

वर्गप्रथमेभ्यः पदान्तेभ्यः परः शकारः स्वरयवरपरश्छकारमापद्यते न वा। वाक्छूरः। वाक्शूरः। षट्छ्यामाः। षट्श्यामाः। तच्छ्वेतम्। तच्श्वेतम्। त्रिष्टुप्छ्रुतम्। त्रिष्टुप्श्रुतम्॥ वर्गप्रथमेभ्य इति किम्। प्राङ् शेते॥ स्वरयवरपर इति किम्? वाक्श्लक्ष्णः। तच्श्मशानम्॥ तालुनासिकोष्ठ्योष्मान्त्यन्ये॥

## तेभ्य एव हकारः पूर्वचतुर्थं न वा॥ ४॥

तेभ्य एव वर्गप्रथमेभ्यः पदान्तेभ्यः परो हकारः पूर्वचतुर्थमापद्यते न वा। वाग्घीनः। वाग्हीनः। अज्झलौ। अज्हलौ। षड्ढलानि। षड्हलानि। तद्धितम्। तद्हितम्। ककुब्भासः। ककुब्हासः॥ हकार इति किम्। तत्कृतम्॥ तेभ्यो ग्रहणं स्वरयवरपरनिवृत्त्यर्थम्। तेन वाग्घ्लादयति॥ एवेति तृतीयमतव्यवच्छेदार्थम्॥

## पररूपं तकारो लचटवर्गेषु॥ ५॥

तकारः पदान्तो लचटवर्गेषु परतः पररूपमापद्यते। तल्लुनाति। तच्चरति। तच्छादयति। तज्जयति। तज्झासयति। तञ्ञकारेण। तट्टीकते। तट्ठकारेण। तड्डीनम्। तड्ढौकते। तण्णकारेण॥ पदान्ते धुटां प्रथमे सति। तज्जः।

पुंस्कोकिलः । पुंस्खननम् । पुंश्चकोरः । पुंश्छत्रम् । पुंष्टि-
ट्टिभः । सुपुंश्चरति ॥ पुंसो ऽम्यघोषविषये संयोगान्त-
लोपस्यानित्यत्वात् । यथा प्राप्तमेव ॥ अम्पटीति किम् ?
पुंसरः ॥

## ले लम् ॥ ११ ॥

नकारः पदान्तो ले परे लमापद्यतेऽनुस्वारहीनम् ।
भवाँल्लुनाति । भवाँल्लिखति ॥ कारहीनत्वादनुनासिकम् ॥

## जझञशकारेषु ञकारम् ॥ १२ ॥

नकारः पदान्तो जझञशकारेषु परतो ञकारमापद्यते ।
भवाञ्जयति । भवाञ्झापयति । भवाञ्ञकारेण । भवाञ्शेते ।
इमध्ये च टवर्गादेश इति जझञेषु ञकारविधानम् ॥

## शि न्चौ वा ॥ १३ ॥

नकारः पदान्तः शि परे न्चौ वा प्राप्नोति ञकारं
। भवाञ्छूरः । भवाञ्चशूरः । भवाञ्शूरः । कुर्व-
ञ्छूरः । कुर्वञ्चशूरः । कुर्वञ्शूरः । प्रशान्च्छयनम् । प्रशा-
ञ्चशयनम् । प्रशाञ्शयनम् ॥ णत्वं शत्वं च न स्यात् । अनु-
स्वारो वर्गान्तश्च स्यादेव ॥ वाव समुच्चये ।

## डढणपरस्तु णकारम् ॥ १४ ॥

डढणाः परे ऽस्मादिति डढणपरः । डढणपरो नकारो
णमापद्यते । भवाण्डीनम् । भवाण्ढौकते । भवाण्णकारेण ॥
तग्रहो वानिवृत्त्यर्थः ॥

मोऽनुस्वारं व्यञ्जने ॥ १५ ॥

मकारः पुनरन्तो व्यञ्जने परेऽनुस्वारमापद्यते । त्वं यासि । त्वं रमसे ॥ अन्त इति किम् ? गम्यते ॥ अनुस्वार इति संज्ञापूर्वको विधिरनित्यः । तेन सम्राट् । सम्राजौ ॥

वर्गे तद्वर्गपञ्चमं वा ॥ १६ ॥

अन्तोऽनुस्वारो वर्गे परे तद्वर्गपञ्चमं वापद्यते । त्वङ्करोषि । त्वं करोषि । त्वञ्चरसि । त्वं चरसि । पुम्भ्याम् । पुंभ्याम् ॥ वर्ग इति किम् ? त्वं लुनासि ॥

इति दौर्गसिंह्यां वृत्तौ सन्धौ चतुर्थः पादः समाप्तः ॥

विसर्जनीयश्चे छे वा शम् ॥ १ ॥

विसर्जनीयश्चे वा छे वा परे शमापद्यते । कश्चरति । कश्छादयति ॥

टे ठे वा षम् ॥ २ ॥

विसर्जनीयष्टे वा ठे वा परे षमापद्यते । कष्टीकते । कष्ठकारेण ॥ प्रत्येकं वात्र समुच्चये बालावबोधार्थं ॥

ते थे वा सम् ॥ ३ ॥

विसर्जनीयस्ते वा थे वा परे समापद्यते । कस्तरति । कस्थुडति ॥ कास्कारादय इति सज्ञाशब्दा लोकतः सिद्धाः ॥

कखयोर्जिह्वामूलीयं न वा ॥ ४ ॥

विसर्जनीयः कखयोः परयोर्जिह्वामूलीयमापद्यते न वा ।

क+करोति । कः करोति । क+खनति । कः खनति ।

### पफयोरुपध्मानीयं न वा ॥ ५ ॥

विसर्जनीयः पफयोः परयोरुपध्मानीयमापद्यते न वा । क॰पचति । कः पचति । क॰फलति । कः फलति ॥ व्यवस्थितविभाषयाघोषे शिरपरे न शादयः । पुरुषः त्सरुकः । वासः क्षौमम् । अद्भिः प्सातम् ॥

### शे षे से वा वा पररूपम् ॥ ६ ॥

विसर्जनीयः शे वा षे वा से वा परे पररूपमापद्यते न वा । कश्शेते । कः शेते । कष्षण्डः । कः षण्डः । कस्साधुः । कः साधुः ॥ चटतानित्यकरणाद् विसर्जनीयादेशस्याघोषे प्रथमो न स्यात् । कश्चरतीत्यादिष्वप्येवम् ॥

### उमकारयोर्मध्ये ॥ ७ ॥

द्वयोरकारयोर्मध्ये विसर्जनीय उमापद्यते । कोऽत्र । कोऽर्थः ॥ पुनरत्रेति रप्रकृतिः [का॰ १. ५. १४] इति परत्वाद्रेफः स्यात् ॥

### अघोषवतोश्च ॥ ८ ॥

अकारघोषवतोर्मध्ये विसर्जनीय उमापद्यते । को गच्छति । को धावति । अघोषवतोरिति किम् ? । कः शेते ।

### अपरो लोप्योऽन्यस्वरे यं वा ॥ ९ ॥

अकारात्परो विसर्जनीयो लोप्यो भवति । अकारादन्यस्वरे । यं वापद्यते । क इह । कयिह । क उपरि । कयु-

परि ॥ अपर इति किम्? । अग्निरत्र ॥ वात्र समुच्चये । ईषत्स्पृष्टतरोऽत्र यकारः ॥

आभोभ्यामेवमेव स्वरे ॥ १० ॥

आकारभोशब्दाभ्यां परो विसर्जनीय एवमेव भवति स्वरे परे । देवा आहुः । देवायाहुः । भो अत्र । भोयत्र ॥ भो इत्यामन्त्रणौकारोपलक्षणं केचित् । भगो अत्र । भगोयत्र । अघो अत्र । अघोयत्र ॥ आदीषत्स्पृष्टतरश्चौकारादीषत्स्पृष्टतरोऽत्र यकारः । एवमेवग्रहणं नित्यलोपनिरासार्थम् ॥

घोषवति लोपम् ॥ ११ ॥

आकारभोशब्दाभ्यां परो विसर्जनीयो लोपमापद्यते घोषवति परे । देवा गताः । भो यासि । भगो व्रज । अघो व्रज ॥ लोपग्रहणं य वेति निवृत्त्यर्थम् ॥

नामिपरो रम् ॥ १२ ॥

नामिनः परो विसर्जनीयो रमापद्यते । निरपेक्ष । सुपीः । सुतूः । ईकरर्थं वचनमिदम् ॥

घोषवत्स्वरपरः ॥ १३ ॥

नामिनः परो विसर्जनीयो घोषवत्स्वरपरो रमापद्यते । अग्निर्गच्छति । अग्निरत्र । पटुर्वदति । पटुरत्र ॥ घोषवत्स्वरपर इति किम् । अग्निः शेते ॥

रप्रकृतिरनामिपरोऽपि ॥ १४ ॥

रेफप्रकृतिर्विसर्जनीयो नामिनः परोऽनामिनः परोऽपि

घोषवत्स्वरपरोऽघोषवत्स्वरपरोऽपि रमापद्यते । गीर्पतिः । गीः पतिर्वा । धूर्पतिः । धूः पतिर्वा ॥ स्वरघोषवतोर्नित्यम् । पितरत्र । पितर्यातः ॥ अरेफप्रकृतिरपि । हे प्रचेता राजन् । हे प्रचेतो राजन्निति वा । उपर्बुधः ॥ अह्नोऽरेफे । अहर्पतिः । अहर्गणः । अहरत्र ॥ रेफे तु । अहोरात्रम् । अहोरूपम् । अहोरथन्तरं साम ॥

## एषसपरो व्यञ्जने लोप्यः ॥ १५ ॥

एषसाभ्यां परो विसर्जनीयो लोप्यो भवति व्यञ्जने परे । एष चरति । स टीकते । एष शेते । स पचति । परत्वात्पूर्वान् बाधते । अधिकारात् स्वरूपग्रहणाद्वा । एषकः करोति । सकः करोति । अनेषो गच्छति । असो गच्छति । अकि नञ्समासे न स्यात् ॥

## न विसर्जनीयलोपे पुनः सन्धिः ॥ १६ ॥

विसर्जनीयलोपे कृते पुनः सन्धिर्न भवति । अन्यलोपे तु भवत्येव । क इह । देवा आहुः । भो अत्र ॥ विसर्जनीयाधिकारे पुनर्विसर्जनीयग्रहणमुत्तरत्र विसर्जनीयाधिकारनिवृत्त्यर्थम् । तेन । एष च्छात्रेण । द्विर्भावः सिद्धः ॥

## रो रे लोपं स्वरश्च पूर्वो दीर्घः ॥ १७ ॥

रो रे परे लोपमापद्यते । पूर्वो दीर्घो भवति । अग्नी रथेन । पुना रात्रिः । उच्चै रौति ॥

## द्विर्भावं स्वरपरश्छकारः ॥ १८ ॥

इच्छति ॥ अप्यधिकाराद्दीर्घात्पदान्ताद्वा । कुटीच्छाया । कुटीछाया ॥ आङ्माभ्यां नित्यम् । आच्छाया । माच्छिदत् ॥

॥ इति दीर्घसिद्धौ वृत्तौ सन्धौ प्रथम पादः समाप्तः ॥

---

## अथ नाम्नि चतुष्टयम् ।

### धातुविभक्तिवर्जमर्थवल्लिङ्गम् ॥ १ ॥

अर्थोऽभिधेयम् । धातुविभक्तिवर्जमर्थवल्लिङ्गसंज्ञं भवति । वृक्षः । कुण्डम् । कुमारी । डित्थः । राजपुरुषः । औपगवः । कारकः ॥ धातुविभक्तिवर्जमिति किम् । अहन् । वृक्षान् ॥ अर्थवदिति किम् । वृक्ष इति वक्षकषामेकैकशो माभूत् । राजन्निल्लुप्तवचनस्य च ॥ लिङ्गप्रदेशाः । लिङ्गान्तनकारस्य [का० २. ३. ५६] इत्येवमादयः ॥

### तस्मात्परा विभक्तयः ॥ २ ॥

तस्मादर्थवतो लिङ्गात्पराः स्यादयो विभक्तयो भवन्ति । सि औ जस् । अम् औ शस् । टा भ्याम् भिस् ॥ ङे भ्याम् भ्यस् । ङसि भ्याम् भ्यस् । ङस् ओस् आम् । ङि ओस् सुप् ॥ दृषद् ॥ दृषद् दृषदौ दृषदः । दृषदम् दृषदौ दृषदः । दृषदा । दृषद्भ्याम् । दृषद्भिरित्यादि ॥ एवं कुमारी कुमार्यौ कुमार्यः । खट्वा खट्वे खट्वाः ॥ अर्थस्य विभञ्जनाद्विभक्तय इति ॥

### पञ्चादौ घुट् ॥ ३ ॥

स्यादीनामादौ पञ्च वचनानि घुट्संज्ञकानि भवन्ति ।

सि औ जस्। अम् औ ॥ घुट्प्रदेशाः। घुटि चासंबुद्धौ [का० २. २. १७] इत्येवमादयः॥

## जस्शसौ नपुंसके ॥ ४ ॥

नपुंसकलिङ्गे जस्शसौ घुट्संज्ञकौ भवतः। सामानि तिष्ठन्ति। सामानि पश्य ॥ नपुंसके जसेव घुडिति नियमाद्वारिणी। जतुनी॥

## आमन्त्रिते सिः संबुद्धिः ॥ ५ ॥

सिद्धस्याभिमुख्यकरणमामन्त्रितम्। तस्मिन्नर्थे विहितः सिः संबुद्धिसंज्ञो भवति। हे वत्स। हे वृक्ष। संबुद्धिप्रदेशाः। संबुद्धौ च [का० २. १. ३९] इत्येवमादयः॥

## आगम उदनुबन्धः स्वरादन्त्यात्परः ॥ ६ ॥

प्रकृतिप्रत्यययोरनुपघाती। आगमः॥ आगम उदनुबन्धोऽन्त्यात्स्वरात्परः परिभाष्यते। पयांसि। पयांसि॥ आगम इति किम्। विद्वान्॥ उदनुबन्ध आगमस्य लिङ्गम्॥

## तृतीयादौ तु परादिः ॥ ७ ॥

आगम उदनुबन्धस्तृतीयादौ विभक्तौ परादिर्भवति। सर्वस्मै। सर्वेषाम्। वृक्षाणाम्॥ तुशब्दस्तृतीयाद्यधिकारनिवृत्त्यर्थः॥

## इदुदग्निः ॥ ८ ॥

इकार उकारश्चाग्निसंज्ञो भवति। अग्निम्। पटुम्।

इदुदिति किम्। सेनान्यम्। यवल्वम्॥ अग्निप्रदेशाः। अग्नेरमोऽकारः [का० २. १. ५० ]इत्येवमादयः॥

## ईदूत् स्त्र्याख्यौ नदी॥ ९॥

ईदूदित्येवं स्त्र्याख्यौ नदीसंज्ञकौ भवतः। नद्यै। वध्वै॥ तपरकरणमसन्देहार्थम्॥ स्त्र्याख्याविति किम्। सेनान्ये। यवल्वे॥ नदीप्रदेशाः। नद्या ऐ आसासाम् २. १. ४५] इत्येवमादयः॥

## आ श्रद्धा॥ १०॥

आकारो यः स्त्र्याख्यः स श्रद्धासंज्ञो भवति। श्रद्धा। माला॥ स्त्र्याख्य इति किम्। कीलालपाः॥ श्रद्धाप्रदेशाः। श्रद्धायाः सिर्लोपम् [का० २. १. २७]इत्येवमादय.॥

## अन्त्यात्पूर्वं उपधा॥ ११॥

लिङ्गस्य धातोर्वान्त्याद्वर्णाद्यः पूर्वो वर्णः स उपधासंज्ञो भवति। राजन् अकारः। भिद् इकार.। वृत् ऋकार॥ उपधाप्रदेशाः। अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचटसु [का० ३. ६. ५] इत्येवमादयः॥

## व्यञ्जनान्नोऽनुषङ्गः॥ १२॥

लिङ्गस्य धातोर्वान्त्याद्व्यञ्जनाद्यः पूर्वो नकारः सोऽनुषङ्गसंज्ञो भवति। विदुषः। अस्यते॥ न इति किम्। जग्र्मान्॥ अनुषङ्गप्रदेशाः। अनुषङ्गश्चाक्रुञ्चेत् [का० २.

### धुड् व्यञ्जनमनन्तःस्थानुनासिकम् ॥ १३ ॥

अन्तःस्थानुनासिकवर्जितं व्यञ्जनं धुट्संज्ञं भवति। पयांसि। अपक्त। अन्तःस्थानुनासिकवर्जमिति किम्। चत्वारि। अर्मस्तु॥ धुट्प्रदेशाः। धुटश्च धुटि [का० ३.६. ५१] इत्येवमादय॥

### अकारो दीर्घं घोषवति ॥ १४ ॥

अकारो लिङ्गान्तो घोषवति विभक्तौ दीर्घमापद्यते। आभ्याम्। वृक्षाय। वृक्षाभ्याम्। घोषवतीति किम्। वृक्षः॥

### जसि ॥ १५ ॥

अकारो लिङ्गान्तो जसि परे दीर्घमापद्यते। वृक्षाः॥ अकारे लोपे प्राप्ते वचनम्॥

### शसि सस्य च नः ॥ १६ ॥

अकारो लिङ्गान्तः शसि परे दीर्घमापद्यते। सस्य च नो भवति। वृक्षान्॥ स्याद्यधिकारः किम्। अल्पशः॥

### अकारे लोपम् ॥ १७ ॥

विभक्तौ लिङ्गस्याकारो लोपमापद्यते। आकारे सामान्ये। वृक्षम्। युष्मत्। यः। सः। उशना॥

### भिसैस् वा ॥ १८ ॥

अकारान्तात्लिङ्गात्परो भिस् ऐस् वा भवति। वृक्षैः॥ वाशब्दः पक्षान्तरं सूचयति। एस् ऐस् वा॥ ऐस्करणाद्-तिजरसैरिति केचित्॥

धुटि बहुत्वे त्वे ॥ १९ ॥

अकारो लिङ्गान्तो बहुत्वे धुटि परे एकारो भवति । वृक्षेषु । वृक्षेभ्यः । परत्वादेत्वं स्यात् ॥ धुटीति किम् । वृक्षाणाम् ॥ तुशब्दो विभाषानिवृत्त्यर्थः ।

ओसि च ॥ २० ॥

अकारो लिङ्गान्त ओसि परे एकारो भवति । वृक्षयोः ॥

ङसिरात् ॥ २१ ॥

अकारान्ताल्लिङ्गात्परो ङसिर् आद् भवति । वृक्षात् ॥ दीर्घोच्चारणादतिजरसात् ॥

ङस् स्य ॥ २२ ॥

अकारान्ताल्लिङ्गात्परो ङस् स्यो भवति । वृक्षस्य ॥

इन टा ॥ २३ ॥

अकारान्ताल्लिङ्गात्परष्टा इनो भवति । वृक्षेण । टेनेति सिद्धे इनोच्चारणमयत इन एव । तेन । अतिजरसिन कुलेन ॥ पृथग्योगो बालावबोधनार्थः ॥

ङेर्यः ॥ २४ ॥

अकारान्ताल्लिङ्गात्परस्य ङेवचनस्य य आदेशो भवति । वृक्षाय ॥

स्मै सर्वनाम्नः ॥ २५ ॥

अकारान्तात्सर्वनाम्नो लिङ्गात्परस्य ङेवचनस्य स्मैर्भवति । सर्वस्मै । विश्वस्मै ॥ सर्वनाम्नेति किम् । विश्वो

नाम कश्चित्। विश्वमतिक्रान्ताय विश्वाय। अतिविश्वाय॥ तीयाद्वा वक्तव्यम्। द्वितीयस्मै। द्वितीयाय। तृतीयस्मै। तृतीयाय॥ किं तत्सर्वनाम। सर्व विश्व उभ उभय अन्य अन्यतर इतर डतर डतम त्वत् त्व नेम सम सिम पूर्वा-परावर दक्षिणोत्तरपराधराणि॥ व्यवस्थायामसंज्ञायाम्॥ स्वमज्ञातिधनाख्यायाम्॥ अन्तरं बहिर्योगोपसंव्यानयोः॥ त्यत्। त्यद् तद् यद् एतद् अदस् इदम् किम् एक द्वि युष्मद् अस्मद् भवन्तः॥

## ङसिः स्मात्॥ २६॥

अकारान्तात्सर्वनाम्नो लिङ्गात्परो ङसिः स्माद्भवति। सर्वस्मात्। विश्वस्मात्॥ अकारान्तादिति किम्। भवतः॥

## ङिः स्मिन्॥ २७॥

अकारान्तात्सर्वनाम्नो लिङ्गात्परो ङिः स्मिन्भवति। सर्वस्मिन्। विश्वस्मिन्॥ सर्वेषां नामेति किम्। समे देशे यजति॥

## विभाष्येते पूर्वादेः॥ २८॥

पूर्वादेर्गणात्परयोर्ङसिङ्योः स्थाने स्मात्स्मिनौ विभाष्येते प्राप्ते विभाषा। पूर्वस्मात्। पूर्वात्। पूर्वस्मिन्। पूर्वे॥ तीयाद्वा वक्तव्यम्। द्वितीयस्मात् द्वितीयात्। द्वितीयस्मिन्। द्वितीये। तृतीयस्मात्। तृतीयात्। तृतीयस्मिन्। तृतीये॥

## सुरामि सर्वतः॥ २९॥

अकारान्तात्सर्वनाम्नो लिङ्गात्सर्वत आमि परे सु...

गमो भवति। सर्वेषाम्। विश्वेषाम्। यासाम्। तासाम्॥ उकारः परादित्वार्थः॥ प्रतिपदोक्तग्रहणात्। त्वाम्। युवाम्॥

## जस् सर्व इः॥ ३०॥

अकारान्तात्सर्वनाम्नो लिङ्गात्परो जस् सर्व इर्भवति। सर्वे। विश्वे॥ अकारान्तादिति किम्। सर्वाः॥

## अल्पादेर्वा॥ ३१॥

अल्पादेर्गणात्परो जस् सर्व इर्भवति वा। अल्पे। अल्पाः। प्रथमे। प्रथमाः॥ उभय इति नित्यं भाषायाम्॥ अल्प प्रथम चरम तय अय कतिपय नेम अर्द्ध पूर्वादयश्च॥

## द्वन्द्वस्थाच्च॥ ३२॥

द्वन्द्वस्थाच्च सर्वनाम्नो लिङ्गादकारान्तात्परो जस् सर्व इर्भवति वा॥ कतरकतमे। कतरकतमाः। द्वन्द्वकतमे। द्वन्द्वकतमाः॥

## नान्यत् सार्वनामिकम्॥ ३३॥

चकारोऽनुवर्त्तते। द्वन्द्वस्थस्य सर्वनाम्नो लिङ्गस्योक्तमन्यच्च सार्वनामिकं कार्य्यं न भवति। पूर्वापराय। पूर्वापरात्। दक्षिणोत्तरपूर्वाणाम्॥

## तृतीयासमासे च॥ ३४॥

तृतीयायाः समासेऽसमासे चोक्तमन्यच्च सार्वनामिकं कार्य्यं न भवति। मासेन पूर्वाय। मासपूर्वाय मासेनावराः।

मासावराः ॥ तुल्यार्थैर्नाम्नैव समास इह स्यादक् । त्वय-
काकृतम् । मयकाकृतम् ॥

बहुव्रीहौ ॥ ३५ ॥

बहुव्रीहौ समासे सार्वनामिकं कार्य्यं न भवति । त्वत्-
पितृको मत्पितृकः । अक् न स्यात् ॥ वस्त्रान्तरवस-
नान्तराः अप्रधानादेव द्वन्द्वस्थाच्च [का० २. १. ३२] इति
स्मा न स्यात् ॥

दिशां वा ॥ ३६ ॥

दिशां बहुव्रीहौ समासे सार्वनामिकं कार्य्यं न भवति
वा । उत्तरपूर्वस्यै उत्तरपूर्वायै ॥ दिशां बहुव्रीहाविति
किम् । दक्षिणपूर्वायै मुग्धायै ॥

श्रद्धायाः सिर्लोपम् ॥ ३७ ॥

श्रद्धासंज्ञकात्परः सिर्लोपमापद्यते । श्रद्धा । माला ।
श्रद्धाया इति किम् । कीलालपाः ॥ सिरटिति कृते जरा
जरस् स्यात् ॥

टौसोरे ॥ ३८ ॥

टौसोः परयोः श्रद्धाया एत्वं भवति । तुलया ।
तुलयोः ॥

सम्बुद्धौ च ॥ ३९ ॥

श्रद्धाया सम्बुद्धौ चैत्वं भवति । हे श्रद्धे । हे माले ।

ह्रस्वोऽम्बार्थानाम् ॥ ४० ॥

अम्बार्थानां श्रद्धासंज्ञकानां सम्बुद्धौ ह्रस्वो भवति । हे

अम्ब ! हे अक्क ! । अद्व्यार्थानामिति सिद्धे ह्रस्व इति संज्ञापूर्वकत्वात् सुखार्थम् ॥ बहुस्वरत्वाडडलकवतां न स्यात् । हे अम्बाडे ! हे अम्बाले ! हे अम्बिके ! ।

## औरीम् ॥ ४१ ॥

श्रद्धायाः पर औरीमापद्यते । श्रद्धे ! माले ! दीर्घः किम् ? जरसी इति केचित् ॥

## ङवन्ति यै यास् यास् याम् ॥ ४२ ॥

श्रद्धायाः पराणि ङवन्ति वचनानि यै यास् यास् यामिति यथासंख्यं भवन्ति । मालायै । मालायाः । मालायाः । मालायाम् ॥

## सर्वनाम्नस्तु ससवो ह्रस्वपूर्वाश्च ॥ ४३ ॥

सर्वनाम्नः श्रद्धायाः पराणि ङवन्ति वचनानि यै यास् यास् यामिति यथासंख्यं सह सुना भवन्ति । ह्रस्वपूर्वाश्च । उदनुबन्धः परादित्वार्थः । सर्वस्यै । सर्वस्याः । सर्वस्याः । सर्वस्याम् ॥ तुशब्दः स्वागमाविकारनिर्देशार्थः ॥

## द्वितीयातृतीयाभ्यां वा ॥ ४४ ॥

अप्राप्ते विभाषा । द्वितीयातृतीयाभ्यां पराणि ङवन्ति वचनानि यै यास् यास् यामिति यथासंख्यं सह सुना भवन्ति ह्रस्वपूर्वाश्च वा । द्वितीयस्यै । द्वितीयायै । तृतीयस्यै । तृतीयायै ॥ तीयादिति सिद्धे द्वितीयातृतीयाभ्यामिति स्पष्टार्थम् ॥

## नद्या ऐ आस् आस् आम् ॥ ४५ ॥

नदीसंज्ञकात्पराणि इयन्ति वचनानि ऐ । आस् । आस् । आमिति यथासंख्यं भवन्ति । वा न स्मर्यते । नद्यै । नद्याः । नद्याः । नद्याम् । वध्वै । वध्वाः । वध्वाः । वध्वाम् ॥

## सम्बुद्धौ ह्रस्वः ॥ ४६ ॥

नद्याः सम्बुद्धौ ह्रस्वो भवति । हे नदि । हे वधु ॥ नद्या इति किम् । हे ग्रामणीः । हे खलपूः ॥

## अम्शसोरादिर्लोपम् ॥ ४७ ॥

नद्याः परयोरम्शसोरादिर्लोपमापद्यते । नदीम् । नदीः । वधूम् । वधूः ।

## ईकारान्तात्सिः ॥ ४८ ॥

नदीसंज्ञकेकारान्तात्परः सिर्लोपमापद्यते । नदी ॥ ईकारोऽन्तो यस्मादिति किम् । लक्ष्मीः ॥

## व्यञ्जनाच्च ॥ ४९ ॥

व्यञ्जनसञ्ज्ञकात्परः सिर्लोपमापद्यते । वाक् । तडित् । संयोगान्तलोपे सिद्धं चेत् नादेर्धुटो लोपः स्यात् ॥ सिद्धं चानुवर्त्तते ॥

## अग्नेरमोऽकारः ॥ ५० ॥

अग्निसञ्ज्ञकात्परोऽमोऽकारो लोपमापद्यते । अग्निम् । पटुम् । बुद्धिम् । धेनुम् ॥

**औकारः पूर्वम् ॥ ५१ ॥**

अग्नेः पर औकारः पूर्वस्वरमापद्यते । अग्नी । पटू । बुद्धी । धेनू ॥

**शसोऽकारः सश्च नोऽस्त्रियाम् ॥ ५२ ॥**

अग्नेः परः शसोऽकारः पूर्वस्वरमापद्यते । सश्च नो भवति । अस्त्रियाम् । अग्नीन् । पटून् ॥ अस्त्रियामिति किम् । बुद्धीः । धेनूः ॥

**टा ना ॥ ४३ ॥**

अग्नेः परस्य टावचनस्य नादेशो भवति । अस्त्रियाम् । अग्निना । पटुना ॥ अस्त्रियामिति किम् । बुद्ध्या । धेन्वा ॥

**अदोऽमुश्च ॥ ५४ ॥**

अदसोऽमुरादेशो भवति । टावचनस्य च नादेशः । अस्त्रियाम् । अमुना ॥ अस्त्रियामिति किम् । अमुया ॥

**इरेदुरोज्जसि ॥ ५५ ॥**

लिङ्गस्य इरेद् भवति । उरोच्च । जसि परे । अग्नयः । पटवः । बुद्धयः । धेनवः ॥

**सम्बुद्धौ च ॥ ५६ ॥**

संबुद्धौ च लिङ्गस्य इरेद्भवति । उरोच्च । हे अग्ने । हे धेनो ॥ अग्ने. सम्बुद्धावित्येके । हे नदि ! हे वधु ।

**ङे ॥ ५७ ॥**

ङयि परतो लिङ्गस्य इरेद्भवति । उरोच्च । अग्नये ।

पटवे । बुद्धये । धेनवे ॥ ङे इत्यविकृतनिर्देशात् । बुद्ध्यै । धेन्वै ॥

**ङसिङसोरलोपश्च ॥ ५८ ॥**

अग्नेः परस्य ङसिङसोरकारस्य लोपो भवति । इद-ङ्गवति । उरोश्च । अग्नेः । अग्नेः । धेनोः । धेनोः ॥

**गोश्च ॥ ५९ ॥**

गोशब्दात्परस्य ङसिङसोरस्य लोपो भवति । गोः । गोः ॥

**ङिरौ सपूर्वः ॥ ६० ॥**

अग्निसञ्ज्ञकात्परो ङिः सह पूर्वेण स्वरेण और्भवति । अग्नौ । धेनौ ॥

**सखिपत्योर्ङिः ॥ ६१ ॥**

सखिपतिभ्यां परो ङिरौर्भवति । सख्यौ । पत्यौ ॥ पुन-र्ङिग्रहणं सपूर्वनिवृत्त्यर्थम् ॥

**ङसिङसोरुम् ॥ ६२ ॥**

सखिपतिभ्यां परो ङसिङसोरकार उमापद्यते । सख्युः । सख्युः । पत्युः । पत्युः ॥ अग्रहणं यथासंख्यनिवृत्त्यर्थम् ॥

**ऋदन्तात्सपूर्वः ॥ ६३ ॥**

ऋदन्ताल्लिङ्गात्परो ङसिङसोरकार उमापद्यते सह पूर्वेण स्वरेण । पितुः । पितुः । मातुः । मातुः ॥ ऋदन्ता-दिति किम् । सौ धातोः ॥

आ सौ सिलोपश्च ॥ ६४ ॥

ऋदन्तस्य लिङ्गस्य आ भवति सौ परे सिलोपश्च । पिता । माता ॥

अग्निवच्छसि ॥ ६५ ॥

ऋदन्तस्य लिङ्गस्याग्निवद्भवति शसि परे । पितॄन् ॥ तन्नास्त्रियामिति प्रतिषेधात् । मातॄः ॥

अर्ङौ ॥ ६६ ॥

ऋदन्तस्य लिङ्गस्य अर्भवति ङौ परे । पितरि । मातरि । योगविभागात् । पितरस्तर्पयामास ॥

घुटि च ॥ ६७ ॥

ऋदन्तस्य लिङ्गस्य अर्भवति घुटि परे । पितरौ । पितरः ॥ घुटीति किम् ? पितॄन् । पृथग्योग उत्तरार्थः ॥

धातोस्तृशब्दस्यार् ॥ ६८ ॥

धातोर्विहितस्य तृशब्दस्य ऋत आर्भवति घुटि परे । अरोऽपवादः । कर्त्तारौ । कर्त्तारः ॥ धातोर्विहितस्येति किम् । यातरौ । यातरः । या ऋन्दीर्घश्च ॥ तृशब्दस्येति किम् । ननान्दरौ । ननान्दरः । नञि च नन्देः ॥ क्रुशेस्तृन् घुटि स्त्रियां च नाम्न्यौणादिकत्वात् क्रोष्टा । क्रोष्टारौ । तथा सिद्धम् । शसादौ तु तृजन्तस्य तुनन्तस्य च प्रयोगः । क्रोष्टॄन् । क्रोष्टून् । क्रोष्ट्रा । क्रोष्टुना । इत्येवमादयः ॥

## स्वस्रादीनां च ॥ ६९ ॥

स्वस्रादीनां च ऋत आर्भवति घुटि परे। स्वसारौ। नप्तारौ॥ स्वसा नप्ता च नेष्टा च त्वष्टा क्षत्ता तथैव च। होता पोता प्रशास्ता च अष्टौ स्वस्रादयः स्मृताः॥

## आ च न सम्बुद्धौ ॥ ७० ॥

ऋदन्तस्य लिङ्गस्य सम्बुद्धावार आ च न भवति। अर्थादरेव। हे कर्त्तः। हे स्वसः॥

## ह्रस्वनदीश्रद्धाभ्यः सिर्लोपम् ॥ ७१ ॥

ह्रस्वनदीश्रद्धाभ्यः परः संबुद्धिः सिर्लोपमापद्यते। हे वृक्ष! हे अग्ने! हे धेनो! हे नदि! हे वधु! हे श्रद्धे! हे माले!॥ सम्बुद्धिरिति किम्। वृक्षः॥ नदीश्रद्धाग्रहणमुत्तरार्थमिहार्थं च॥

## आमि च नुः ॥ ७२ ॥

ह्रस्वनदीश्रद्धाभ्यः पर आमि परे नुरागमो भवति। वृक्षाणाम्। अग्नीनाम्। धेनूनाम्। नदीनाम्। वधूनाम्। श्रद्धानाम्। मालानाम्॥ श्रद्धासहचरितस्यामो ग्रहणादिह। नद्याम्। युवाम्॥

## त्रेस्त्रयश्च ॥ ७३ ॥

त्रेस्त्रयादेशो भवति नुरागमश्च। आमि परे। त्रयाणाम्। परमत्रयाणाम्॥

## चतुरः ॥ ७४ ॥

चत्वार् इत्येतस्य आमि परे नुरागमो भवति । चतुर्णाम् ॥ अप्रधानादेव । अतिचतुराम् ॥

## संख्यायाः ष्णान्तायाः ॥ ७५ ॥

संख्यायाः षकारनकारान्ताया आमि परे नुरागमो भवति । षण्णाम् । पञ्चानाम् ॥ अन्तग्रहणाद्भूतपूर्वनान्ताया अपि । अष्टानाम् ॥ संख्याया इति किम् । विप्रुषाम् । यज्वनाम् ॥

## कतेश्च जस्शसोर्लुक् ॥ ७६ ॥

कतेः संख्याया षकारनकारान्तायाश्च जस्शसोर्लुग्भवति । कति । कति । षट् । षट् । पञ्च । पञ्च ॥

## नियो ङिराम् ॥ ७७ ॥

नियः परो ङिराम् भवति । नियाम् । ग्रामण्याम् ॥

इति दीर्घसिंह्यां वृत्तौ नाम्नि चतुष्टये प्रथमः पादः समाप्तः ॥

---

## न सखिष्टादावग्निः ॥ १ ॥

सखिस्थः सखिष्टादौ स्वरे नाग्निर्भवति । सख्या । सख्ये ॥

## पतिरसमासे ॥ २ ॥

पतिस्थः पतिष्टादौ स्वरे नाग्निर्भवति । असमासे । पत्या । पत्ये ॥ असमास इति किम् । नरपतिना ॥

स्त्री नदीवत् ॥ ३ ॥

स्त्रीशब्दो नदीवद्भवति विभक्तौ। हे स्त्रि! स्त्रियै। स्त्रीणाम्॥ विकल्पमपि बाधते॥

स्त्राख्यावियुवौ वामि ॥ ४ ॥

स्त्र्याख्यावियुवस्थानावामि परे नदीवद्भवतो वा। स्त्रीणाम्। श्रियाम्। भ्रूणाम्। भ्रुवाम्॥ स्त्र्याख्याविति किम्। यवक्रियाम्। कटप्रुवाम्॥

ह्रस्वश्च ङवति ॥ ५ ॥

ह्रस्व इदुदेव। स्त्र्याख्यावियुवस्थानौ च ङवति परे नदीवद्भवतो वा। बुद्ध्यै। बुद्धये। धेन्वै धेनवे। श्रियै। श्रिये। भ्रुवै। भ्रुवे। पट्वै पटवे॥ स्त्रियै वेति केचित्॥ ङवतीति किम्। हे श्रीः। हे भ्रूः। अप्रमित्तमुपमेयमिति॥

नपुंसकात् स्यमोर्लोपो न च तदुक्तम् ॥ ६ ॥

नपुंसकलिङ्गात्परयोः स्यमोर्लोपो भवति। तदुक्तं च कार्यं न भवति। पयः। पयः। तत्। तत्। सुसखि। सुसखि॥ नपुंसकादिति किम्। सुपया गौः॥

अकारादसम्बुद्धौ मुश्च ॥ ७ ॥

अकारान्तान्नपुंसकलिङ्गात्परयोः स्यमोर्लोपो भवति। मुरागमश्च। असम्बुद्धौ। कुण्डम्। अतिजरसम्॥ असम्बुद्धाविति किम्। हे कुण्ड॥

अन्यादेस्तु तुः ॥ ८ ॥

अन्यादेर्गणान्नपुंसकलिङ्गात्परयोः स्यमोर्लोपो भवति तुरागमश्च । अन्यत् । अन्यतरत् । इतरत् । यतरत् । ततमत् ॥ तुशब्दोऽसम्बुद्धिनिवृत्त्यर्थः । हे अन्यत् ॥

औरीम् ॥ ९ ॥

सर्वस्मान्नपुंसकलिङ्गात्पर औरीमापद्यते । कुण्डे । पयसी ॥

जस्शसोः शिः ॥ १० ॥

सर्वस्मान्नपुंसकलिङ्गात्परयोर्जस्शसोः स्थाने शिर्भवति । पद्मानि । पयांसि ॥

धुट्स्वराद् घुटि नुः ॥ ११ ॥

धुट्पूर्वः स्वरात्परो नपुंसकलिङ्गस्य घुटि परे नुरागमो भवति । पयांसि । पद्मानि । सुकर्तृंषि । सुसखीनि ॥ कथं सुबन्धि । गोमन्ति । सुवल्गि । धुटो व्यवहितत्वात् ॥ गोरङ्गीति धुड्जातित्वादन्दोष. । बहूर्जि । बहूर्ञ्जीति वा वक्तव्यम् ॥

नामिनः स्वरे ॥ १२ ॥

नाम्यन्तान्नपुंसकलिङ्गात्स्वरे परे नुरागमो भवति । वारिणा । वारिणे ॥ नामिनः स्वर इति किम् । कुलयोः ॥

अस्थिदधिसक्थ्यक्ष्णामन्नन्तष्टादौ ॥ १३ ॥

नाम्यन्तानां नपुंसकलिङ्गानामस्थ्यादीनां टादौ स्वरे

ऽन्तोऽन् भवति। अस्थ्ना। दध्ना। सक्थ्ना। अक्ष्णा। अत्यस्थ्ना। अतिदध्ना छात्त्रेण॥ अकारोच्चारणं किम्। अस्थ्नि। अस्थनि वा स्यात्॥

## भाषितपुंस्कं पुंवद्वा॥ १४॥

भाषितपुंस्कं नाम्यन्तं नपुंसकलिङ्गं टादौ स्वरे पुंवद्भवति वा। कर्त्रा। कर्तृणा कुलेन। मृदवे। मृदुने वस्त्राय॥ नाम्यन्तमिति किम्। भाषितपुंस्कमिति किम्। वारिणे॥ नाम्यन्तमिति किम्। सोमपेन कुलेन॥ नपुंसकमिति किम्। कल्याण्यै॥ भाषितपुंस्कोऽर्थ इति किम्?। पीलुने फलाय॥

## दीर्घमामि सनौ॥ १५॥

नाम्यन्तं लिङ्गं सनावामि परे दीर्घमापद्यते। अग्नीनाम्। धेनूनाम। कर्तॄणाम्॥ सनोग्रहणमुत्तरार्थमिह करणे च न्वागमे दीर्घार्थं च॥

## नान्तस्य चोपधायाः॥ १६॥

नान्तस्य लिङ्गस्योपधाया दीर्घो भवति। सनावामि परे। पञ्चानाम्। सप्तानाम्॥ सनाविति किम्। वर्मणाम्॥

## घुटि चासम्बुद्धौ॥ १७॥

नान्तस्य लिङ्गस्योपधाया दीर्घो भवति। घुटि परे। असम्बुद्धौ। राजा। राजानौ। सामानि॥ नान्तस्येति किम्। जनम्। जनौ॥ असम्बुद्धाविति किम्। हे राजन्॥

## सान्तमहतोर्नोपधायाः ॥ १८ ॥

सान्तमहत् इत्येतयोर्नकारस्योपधाया दीर्घो भवति । घुट्यसम्बुद्धौ । श्रेयान् । श्रेयांसौ । महान् । महान्तौ ॥ असम्बुद्धाविति किम् । हे श्रेयन् । हे महन् ॥ सान्तस्येति किम् । हंसम् । हंसौ ॥ महतः साहचर्याद् धातोर्न स्यात् । सुहिन् । सुहिंसौ ॥

## अपश्च ॥ १९ ॥

अप् इत्येतस्य नोपधाया अनोपधायाश्च दीर्घो भवति । घुट्यसम्बुद्धौ । आपः । स्वाम्पि तडागानि ॥ असम्बुद्धाविति किम् ? हे स्वप् ॥

## अन्त्वसन्तस्य चाधातोः सौ ॥ २० ॥

अन्तु । अस् इत्येवमन्तस्याधातोः स्वतस्यातः सावसम्बुद्धौ दीर्घो भवति । भवान् । गोमान् । सुस्रोताः ॥ पुस्यपि दीर्घोहो निर्देशः ॥ अधातोरिति किम् । पिण्डग्रः । चर्मवः ॥ असम्बुद्धाविति किम् । हे सुस्रोतः ॥

## इन्हन्पूषार्यम्णां शौ च ॥ २१ ॥

इन् । हन् । पूषन् । अर्यमन् । इत्येतेषामुपधाया दीर्घो भवति । शौ सौ च परे । असम्बुद्धौ । सुदण्डीनि । सुवृत्रहाणि । सुपूषाणि । स्वर्यमाणि । दण्डी । वृत्रहा । पूषा । अर्यमा ॥ असम्बुद्धाविति किम् ? । हे दण्डिन् ॥ शौ सावेवेति नियमात् । दण्डिनौ । वृत्रहणौ । पूषणौ ।

अर्थमर्षौ॥ अस्मादेव हन उपधाया दीर्घात् क्विपि न दीर्घः॥

उशनः पुरुदंसोऽनेहसां सावनन्तः॥२२॥

उशनस्। पुरुदंसस्। अनेहस्। इत्येषामन्तोऽन् भवति सावसम्बुद्धौ। उशना। पुरुदंसा। अनेहा॥ असम्बुद्धाविति। किम्?। हे उशनः। हे पुरुदंसः। हे अनेहः॥ कथं हे उशनन्। हे उशन। नत्वोऽनित्यत्वात् अकार उत्तरार्थः॥

सख्युश्च॥ २३॥

सख्युरन्तोऽन् भवति। सावसंबुद्धौ। सखा॥ असंबुद्धाविति किम्?। हे सखे!॥

घुटि त्वै॥ २४॥

सख्युरन्त ऐर्भवति घुटि परे। सखायौ। सखायः। सखायम्। सखायौ॥ घुटीति किम्। सखीन्॥ तुशब्द उत्तरत्राम्बुद्धिनिवृत्त्यर्थः॥

दिव उद् व्यञ्जने॥ २५॥

दिवो वकारस्य उद् भवति व्यञ्जने परे। द्युभ्याम्। द्युषु। द्युगतः। द्युत्वम्॥ ये न स्यात्। दिव्यम्॥

औ सौ॥ २६॥

दिवो वकारस्य और्भवति सौ परे द्यौः। हे द्यौः॥

वाम्या॥ २७॥

दिवो वकारस्य आ भवति वा । अमि परे । द्याम् । दिवम् । अतिद्याम् । अतिदिवम् ॥

## युजेरसमासे नुर्घुटि ॥ २८ ॥

युजिरः क्विबन्तस्यासमासे नुर्भवति घुटि परे । युङ् । युञ्जौ । युञ्जः ॥ असमास इति किम् । अश्वयुक् ॥

## अभ्यस्तादन्तिरनकारः ॥ २९ ॥

इयमभ्यस्त जक्षादिश्चेति वक्ष्यति ॥ अभ्यस्तात्परोऽन्तिरनकारको भवति घुटि परे । ददत् । दधत् । जक्षत् । जाग्रत् ॥ अभ्यस्तादिति किम् । लिहन् ॥

## वा नपुंसके ॥ ३० ॥

अभ्यस्तात्परोऽन्तिरनकारको भवति वा । नपुंसके घुटि परे । ददति । ददन्ति । जाग्रति । जाग्रन्ति कुलानि ॥

## तुदभादिभ्य ईकारे ॥ ३१ ॥

तुद इत्यदन्तोऽनुक्रियते । तुदभादिभ्यः परोऽन्तिर नकारको भवति वा । ईकारे परे । तुदती । तुदन्ती स्त्री । तुदती । तुदन्ती कुले । भाती । भान्ती स्त्री । भाती । भान्ती कुले ॥ तुदभादिभ्य इति किम् । पचन्ती । दीव्यन्ती ॥

## हन्तेर्घिरुपधालोपे ॥ ३२ ॥

हन्तेरुपधाया लोपे सति हेः स्थाने घिर्भवति । वृत्रघ्नः । वृत्रघ्ना ॥ उपधालोप इति किम् । वृत्रहणौ ॥

## गोरौ घुटि ॥ ३३ ॥

गोर्घुट्यस्य और्भवति घुटि परे। गौः। गावौ। गावः॥
गोर्घुटीति किम्। हे चित्रगो। हे चित्रगवः॥

## अमूशसोरा॥ ३४॥

गोशब्दस्यान्त आ भवति। अम्शसोः परयोः। गाम्।
गाः॥ दीर्घः किम्। पुंसि स्त्रियाम् आद् आ न स्यात्॥

## पन्थिमन्थ्यृभुक्षीणां सौ॥ ३५॥

पथ्यादीनामन्त आ भवति सौ परे। पन्थाः। हे पन्थाः।
मन्थाः। हे मन्थाः। ऋभुक्षाः। हे ऋभुक्षाः॥

## अनन्तो घुटि॥ ३६॥

पथ्यादीनामन्तोऽन् भवति घुटि परे। पन्थानौ। मन्थानौ। ऋभुक्षाणौ॥

## अघुट्स्वरे लोपम्॥ ३७॥

पथ्यादीनामन्तोऽघुट्स्वरे लोपमापद्यते। पथः।
पथा। मथः। मथा। ऋभुक्षः। ऋभुक्षा॥

## व्यञ्जने चैषां निः॥ ३८॥

एषां पथ्यादीनाम् अघुट्स्वरे व्यञ्जने च निर्लोपमापद्यते। पथः। पथिकः। पथयति। मथः। मथिकः। मथयति। पथिभ्याम्। पथित्वम्। मथिभ्याम्। मथित्वम्॥
एषां ग्रहणमघुट्स्वरव्यञ्जनमात्रे निर्लोपार्थम्। तेन पथिगतः। पथ्युत्तमः। मथिगतः। मथ्युत्तमः॥

## अनुषङ्गश्चाक्रुञ्चेत्॥ ३९॥

क्रुञ्च । इस इति क्वसेदिति लुप्तविभक्तिकं पदम् ॥ अनुषङ्गसंज्ञको नकारो लोपमापद्यते । अघुट्स्वरव्यञ्जनयोः । क्वसेरिदनुबन्धस्य च न भवति । विदुषः । विदुषा । विदुषी । वैदुष्यम् । महतः । महता । महद्भ्याम् । महत्सु । महत्ता ॥ अक्वसेरिति किम् । क्रुञ्चः । क्रुड्भ्याम् । सुकंसः । सुकन्भ्याम् ॥

## पुंसोऽन्शब्दलोपः ॥ ४० ॥

पुमन्स् इत्येतस्य अन्शब्दस्य लोपो भवति । अघुट्स्वरव्यञ्जनयोः । पुंसः । पुंसा । पुंभ्याम् । पुंस्त्वम् । पौंस्नम् ॥ अघुट्स्वरव्यञ्जनयोरिति किम् ? । पुमांसौ ॥

## चतुरो वाशब्दस्योत्वम् ॥ ४१ ॥

चत्वार् इत्येतस्य वाशब्दस्य उत्वं भवति । अघुट्स्वरव्यञ्जनयोः । चतुरः । चातुरिकः । चतुर्थः । प्रियचतयति । चतुर्भिः । चातुर्यम् ॥

## अनडुहश्च ॥ ४२ ॥

अनड्वाह् इत्येतस्य वाशब्दस्य उत्वं भवति । अघुट्स्वरव्यञ्जनयोः । अनडुहः । अनडुहा । आनडुहिकः । अनडुद्भ्याम् । अनडुत्त्वम् । अनडुही । अनड्वाही । स्त्रीचेन्ङी ॥

## सौ नुः ॥ ४३ ॥

अनड्वाह् इत्येतस्य सौ परे नुरागमो भवति । अनड्वान् । साविति किम् । अनड्वाहौ ॥

सम्बुद्धावुभयोर्ह्रस्वः ॥ ४४ ॥

उभयोश्चतुरनडुहोः संबुद्धौ ह्रस्वो भवति। हे प्रियचत्वः। हे अनड्वन्॥

अदसः पदे मः ॥ ४५ ॥

अदसः पदे सति दस्य मो भवति विभक्तौ। अमुष्मात्। अमुष्मिन्॥ विभक्ताविति किम्। अदस्यति। अदस्त्वम्। अदः पुत्रः॥ अदमुयङ्। अमुद्र्यङ्। अमुमुयङ्। अदद्र्यङिति वक्तव्यम्॥

अघुट्स्वरादौ सेट्कस्यापि वन्सेर्वशब्दस्योत्वम् ॥ ४६ ॥

अघुट्स्वरादौ प्रत्यये परे सेट्कस्याप्यसेट्कस्यापि वन्सेर्वशब्दस्य उत्वं भवति। पेचुषः। पेचुषा। पेचुषी। पैचुषम्। विदुषः। विदुषा। विदुषी। वैदुषम्। ये च वक्तव्यम्। पैचुष्यम्। वैदुष्यम्॥

श्वयुवमघोनां च ॥ ४७ ॥

श्वन् युवन् मघवन् इत्येतेषां वमन्तस्य उत्वं भवति। अघुट्स्वरादौ प्रत्यये परे। शुनः। शुना। शुनी। यूनः। यूना। यूनी। मघोनः। मघोना। मघोनी॥ अव्यभिचारात्। शौवनं मांसम्। यौवनं वर्तते। माघवनः स्थालीपाकः। तद्धिते लघतः। उपशुनम्। श्वनः सङ्कोचः। शौवः॥

वाहेर्वाशब्दस्यौ ॥ ४८ ॥

वाहेर्वाशब्दस्यौर्भवति । अघुट्स्वरादौ । प्रष्ठौहः । प्रष्ठौहा । प्रष्ठौही । प्राष्ठौह्यम् ॥

## अनूचेरलोपः पूर्वस्य च दीर्घः ॥ ४९ ॥

अनूचेरकारस्य लोपो भवति पूर्वस्य च दीर्घः । आन्तरतम्यात् । अघुट्स्वरादौ । प्रतीचः । प्रतीचा । प्रतीची । प्रातीच्यम् । गोचः । गोचा । गोची । गौच्यम् ॥

## तिर्यङ् तिरश्चिः ॥ ५० ॥

तिर्यन्च् इत्ययं तिरश्चिर्भवति । अघुट्स्वरादौ । तिरश्चः तिरश्चा । तिरश्ची । तैरश्च्यम् ॥

## उदङ् उदीचिः ॥ ५१ ॥

उदन्च् इत्ययम् उदीचिर्भवति । अघुट्स्वरादौ । उदीचः । उदीचा । उदीची । औदीच्यम् ॥

## पात्पदं समासान्तः ॥ ५२ ॥

समासस्यान्तः पाच्छब्दः पदमापद्यते । अघुट्स्वरादौ । व्याघ्रपदः । व्याघ्रपदा । व्याघ्रपदी । वैयाघ्रपद्यम् । एकपदः । सुपदः । कुम्भपदी ॥ असमासान्त इत्यपि । पदः पश्य । पादसमानार्थः पाद्प्यस्तीति मतम् ॥

## अवमसंयोगादनोऽलोपोऽलुप्तवच्च पूर्वविधौ ॥ ५३ ॥

अनोऽकारस्य लोपो भवति । अघुट्स्वरादौ । स चेद्वमन्तात्संयोगात्परो न भवति । स चालुप्तवद्भवति । पूर्वस्य

वर्णस्य विधौ कर्त्तव्ये। राज्ञः। राज्ञा। दध्नः। दध्ना।
प्रतिदीव्नः। प्रतिदीव्ना॥ अवमसंयोगादिति किम्।
पर्वणः। चर्मणः॥

## ईङ्योर्वा॥ ५४॥

ईङी इत्येतयोः परयोरवमसंयोगात्परस्यानोऽकारस्य लोपो भवति वा। स चानुषवद्भवति पूर्वस्य वर्णस्य विधौ कर्त्तव्ये। साम्नी। सामनी। राज्ञि। राजनि॥ ङेः साहचर्याद् राज्ञीति नित्यम्॥ अवमसंयोगादिति किम्।
पर्वणी। चर्मणी॥

## आ धातोरघुट्स्वरे॥ ५५॥

धातोराकारस्य लोपो भवति। अघुट्स्वरे। कीलालपः। कीलालपा॥ पुनरघुट्स्वरग्रहणं सम्बुद्ध्यधिकारनिवृत्त्यर्थम्। तेन शङ्खध्मः। शङ्खध्मा॥

## ईदूतोरियुवौ स्वरे॥ ५६॥

धातोरीदूतोरियुवौ भवतः। विभक्तिस्वरे। यथासंख्यम्।
नियौ। नियः। लुवौ। लुवः॥ विभक्तिस्वर इति किम्।
न्यर्थः। ल्वर्थः॥ स्वायम्भुवमिति वक्तव्यम्॥

## सुधीः॥ ५७॥

सुधीशब्द इय प्राप्नोति विभक्तिस्वरे। सुधियौ। सुधियः॥ सुधीरिति किम्। प्रध्यौ। प्रध्यः॥

## भूरवर्षाभूरपुनर्भूः॥ ५८॥

भूरुवं प्राप्नोति विभक्तिस्वरे। अवर्षाभूरपुनर्भूः। मित्रभुवौ। मित्रभुवः। अतिभुवौ। अतिभुवः॥ अवर्षाभूरपुनर्भूरिति किम्। वर्षाभ्वौ। पुनर्भ्वौ॥

## अनेकाक्षरयोस्त्वसंयोगाद्यवौ॥ ५९॥

अनेकाक्षरयोर्लिङ्गयोर्यावीदूतौ तयोर्धातोरसंयोगात्परयोर् यवौ भवतः। विभक्तिस्वरे। यथासंख्यम्। ग्रामण्यौ। ग्रामण्यः। यवल्वौ। यवल्वः। अनेकाक्षरयोरिति किम्। नियौ। लुवौ। असंयोगादिति किम्। यवक्रियौ। कटप्रुवौ॥ अध्ययकारकाभ्यामेवायं विधिः।

## भ्रूधातुवत्॥ ६०॥

भ्रूशब्दो धातुवद्भवति विभक्तिस्वरे। भ्रुवौ। भ्रुवः॥ अतिदेशोऽयम्॥

## स्त्री च॥ ६१॥

स्त्रीशब्दो धातुवद्भवति विभक्तिस्वरे। स्त्रियौ। स्त्रियः॥

## वामूशसोः॥ ६२॥

स्त्रीशब्दोऽमशसोः परयोर्धातुवद्भवति वा। स्त्रियम्। स्त्रीम्। स्त्रियः। स्त्रीः।

## भवतो वादेरुत्वं संबुद्धौ॥ ६३॥

भवतोऽवयवस्य वादेरुत्वं भवति वा सम्बुद्धौ। हे भोः। हे भवन्॥ सन्निपातलक्षणात् संबुद्धेर्लोपो न स्यात्।

**अव्ययसर्वनाम्नः स्वरादन्त्यात्पूर्वोऽक् कः ॥६४॥**

अव्ययानां सर्वनाम्नां चान्त्यात्स्वरात् पूर्वोऽक्प्रत्ययो भवति वा। कप्रत्ययश्च बहुलम्। उच्चकैः। उच्चैः। नीचकैः। नीचैः। सर्वकः। सर्वः। विश्वकः। विश्वः। युष्मकाभिः। युष्माभिः। अस्मकाभिः। अस्माभिः॥ विभक्तेश्च पूर्वं दृश्यते। त्वयका। मयका॥ आख्यातस्य च। पचतकि। पचति भिन्दकि। भिन्दि॥ कप्रत्ययश्च। यावकः। मणिकः॥ अज्ञाने कुत्सायां च। अश्वकः॥ दयायाम्। वत्सकः। एहकि। एहि। इह नु ते धानाकाः॥ गृहाद्दूरं मा गाः॥ अल्पे। तैलकम्॥ ह्रस्वे। वृक्षकः॥ सञ्ज्ञायाम्। देवदत्तकः॥

**के प्रत्यये स्त्रीकृताकारपरे पूर्वोऽकार इकारम् ॥ ६५ ॥**

के प्रत्यये स्त्रीकृताकारपरे पूर्वोऽकार इकारमापद्यते। सर्विका। उष्ट्रिका। पाचिका। पाठिका॥ क इति किम्। चेतना॥ प्रत्यय इति किम्। तका॥ स्त्रीति किम्। पाचकाभ्याम्। कृत इति किम्? पुत्रकाम्या॥ बहुलाधिकारात्। यका। सका। जीवका। नन्दका। आशिषकः॥

इति दौर्गसिंह्यां वृत्तौ नाम्नि चतुष्टये द्वितीयः पादः समाप्तः॥

## युष्मदस्मदोः पदं पदात् षष्ठीचतुर्थीद्वितीयासु वस्नसौ ॥ १ ॥

युष्मदस्मदो. पदं पदात्परं षष्ठीचतुर्थीद्वितीयासु बहुत्वे निष्पन्नं यथासंख्यं वस्नसौ प्राप्नोति वा । पुत्रो युष्माकम् । पुत्रोऽस्माकम् । पुत्रो वः । पुत्रो नः । पुत्रो युष्मभ्यम् । पुत्रोऽस्मभ्यम् । पुत्रो वः । पुत्रो नः । पुत्रो युष्मान् । पुत्रो ऽस्मान् । पुत्रो वः । पुत्रो नः ॥ युष्मदस्मदोरिति किम् । पुत्रस्तेषाम् ॥ पदादिति किम् । युष्माकम् । अस्माकम् ।

## वाम्नौ द्वित्वे ॥ २ ॥

युष्मदस्मदो' पदं पदात्परं षष्ठीचतुर्थीद्वितीयासु द्वित्वे निष्पन्नं यथासंख्यं वाम्नावित्येतौ प्राप्नोति वा । ग्रामो युवयोः । ग्राम आवयोः । ग्रामो वाम् । ग्रामो नौ । एव दीयते । पातु ॥ पदादिति किम् ? भद्रौ युवाम् । भद्रा वावाम् ॥

## त्वन्मदोरेकत्वे ते मे त्वा मा तु द्वितीयायाम् ॥ ३ ॥

एकत्वे वर्तमानयोर्युष्मदस्मदोस्त्वन्मदू तयोः पदं पदात्परं षष्ठीचतुर्थीद्वितीयास्वेकत्वे निष्पन्नं यथासंख्यं ते मे इत्येतौ प्राप्नोति वा । त्वा मा तु द्वितीयायाम् । पुत्रस्तव । पुत्रो मम । पुत्रस्ते । पुत्रो मे । एव दास्यति । पुत्रस्त्वा । पुत्रो मा पातु ॥

## न पादादौ ॥ ४ ॥

पादस्यादौ वर्त्तमानानां युष्मदस्मदादीनां पदमेतान्नादेशान्न प्राप्नोति। रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता। स एव नाथो भगवानस्माकं पापनाशनः॥ पादादाविति किम्। पान्तु वो नरसिंहस्येत्यादि॥

## चादियोगे च॥ ५॥

चादिना योगवर्त्तमानानां युष्मदस्मदादीनां पदमेतान्नादेशान्न प्राप्नोति। पुत्रो युष्माकं च। पुत्रोऽस्माकं च। एवमादि॥ च। वा। ह। अह। एव॥ गौण्ययोगे न स्यात्। ग्रामश्च ते स्वम्। नगरं च मे स्वम्॥

## एषां विभक्तावन्तलोपः॥ ६॥

विभक्तौ परतो वर्त्तमानानामेषामन्तस्य लोपो भवति। युष्मभ्यम्। अस्मभ्यम्। अतित्वान्। अतिमान्। त्वयि। मयि॥ विभक्ताविति किम्। युष्मत्पुत्रः। त्वदीयः।

## युवावौ द्विवाचिषु॥ ७॥

युष्मदस्मदोर्द्विवाचिषु परतो युवावौ भवतः। यथार्थं त्वम्। युवाभ्याम्। आवाभ्याम्। अतियुवाभिः। अत्यावाभिः॥ अनयोर्द्विवाचिष्विति किम्। त्वां युष्मानतिक्रान्तौ। अतित्वाम्। अतियुष्माम्॥ युवयोः पुत्रः। युष्मत्पुत्रः। युवयोरयम्। युष्मदीयः। प्रत्ययलोपलक्षणेनान्तलोपात्॥

## अमौ चाम्॥ ८॥

युष्मदस्मदादिभ्यः परोऽम् औ च आम् भवति। त्वाम्।

भ्याम्। युवाभ्याम्। आवाभ्याम्। द्विवाद्यधिकाराद्वा साहचर्यं न स्यात्॥

## आन् शस्॥ ९॥

युष्मदस्मद्भ्यां परः शस् आन् भवति। युष्मान्। अस्मान्। अतित्वान्। अतिमान्॥

## त्वमहम् सौ सविभक्त्योः॥ १०॥

त्वमदोर्युष्मदस्मदोश्च सौ सविभक्त्योस्त्वमहमित्येतौ भवतः। यथासंख्यम्। त्वम्। अहम्। अतित्वम्। अत्यहम्॥ सविभक्त्योरिति किम्? अधित्वत्। अधिमत्। लुक्॥

## यूयम् वयम् जसि॥ ११॥

त्वमदोर्युष्मदस्मदोश्च जसि सविभक्त्योर्यूयम् वयमित्येतौ भवतः। यथासंख्यम्। यूयम्। वयम्। अतियूयम्। अतिवयम्।

## तुभ्यम् मह्यम् ङयि॥ १२॥

त्वमदोर्युष्मदस्मदोश्च ङयि सविभक्त्योस्तुभ्यम् मह्यमित्येतौ भवतः। यथासंख्यम्। तुभ्यम्। मह्यम्। अतितुभ्यम्। अतिमह्यम्॥

## तव मम ङसि॥ १३॥

त्वमदोर्युष्मदस्मदोश्च ङसि सविभक्त्योस्तव ममेत्येतौ भवतः। यथासंख्यम्। तव। मम। अतितव।

अतिमम॥ युवावादिषु क्वतेषु पर्यादक्। युवकाभ्याम्। आवकाभ्याम्॥

## अत् पञ्चम्यद्वित्वे ॥ १४ ॥

युष्मदस्मदादिभ्योऽद्वित्वे वर्त्तमाना पञ्चम्यद् भवति। त्वत्। मत्। युष्मत्। अस्मत्। अतियुष्मत्। अत्यावत्॥ अद्वित्व इति किम्। युवाभ्याम्। आवाभ्याम्।

## भ्यसभ्यम् ॥ १५ ॥

युष्मदस्मदादिभ्यः। परो भ्यस् अभ्यम् भवति। युष्मभ्यम्। अस्मभ्यम्। अतित्वभ्यम्। अत्यस्मभ्यम्॥ अकारोच्चारणं किम्। एत्वं माभूत्॥

## साम आकम् ॥ १६ ॥

आभ्यां परः स्वागमस्य साम् आकम्भवति। युष्माकम्। अस्माकम्॥ सामिति किम्। प्रिययुष्मयाम्। अतित्वयाम्॥

## एत्वमस्थानिनि ॥ १७

स्थानं प्रसङ्गो वा॥ अस्थानिन्यप्रसङ्गिन्यनादेशिनि स्यादावेषामन्तस्य एत्वं भवति। त्वया। मया युवयोः। आवयोः। त्वयि। मयि। अतित्वयि अतिमयि॥ अस्थानिनीति किम्। युष्मान्। अस्मान्॥

## आत्वं व्यञ्जनादौ ॥ १८ ॥

एषामन्तस्यात्वं भवति। अस्थानिनि व्यञ्जनादौ

व्यादौ । युवाभ्याम् । आवाभ्याम् । अतियुवाभिः । अत्यावाभिः । अतित्वासु । अतिमासु । व्यादिग्रहणं साक्षात्प्रतिपत्त्यर्थम् । तेन युष्मत्पुत्रः । अस्मत्पुत्रः । अधित्वत् । अधिमत् । त्वक् ॥

## रैः ॥ १९ ॥

रैशब्द आत्वं प्राप्नोति । व्यञ्जनादौ स्यादौ । राः । राभ्याम् । अतिराभ्यां कुलाभ्याम् ॥ स्यादाविति किम् । अतिरि कुलम् ॥

## अष्टनः सर्वासु ॥ २० ॥

अष्टनोऽन्तस्य आत्वं भवति । सर्वासु विभक्तिषु । अष्टाभिः । अष्टाभ्यः । अष्टासु । प्रियाष्टाः । प्रियाष्टौ ॥

## औ तस्माज्जस्शसोः ॥ २१ ॥

तस्मादष्टनः कृताकारात्परयोः सर्वयोर्जस्शसोः स्थाने और्भवति । अष्टौ । अष्टौ ॥ तस्माद्ग्रहणमात्वस्यानित्यार्थम् । तेन । अष्टभिः । अष्टसु । वा स्यात् ॥

## अर्वन्नर्वन्तिरसावनञ् ॥ २२ ॥

अर्वन्शब्दोऽर्वन्तिर्भवति । असौ प्रत्यये परे । स चेदनञ् । अर्वन्तौ । अर्वन्तः । अर्वन्तम् । आर्वन्तम् । आर्वन्त्यम् । अर्वती ॥ असाविति किम् । अर्वा ॥ अनञिति किम् । अनर्वाणौ ॥

## सौ च मघवान् मघवा वा ॥ २३ ॥

विभक्तौ सौ च परतो मघवन्शब्दो मघवन्तुर्भवति वा । मघवान् । मघवन्तौ । मघवन्तः । मघवन्तम् । तद्धिते स्वरे ये च स्त्रीकारे । माघवतम् । माघवत्यम् । मघवती ॥ पक्षे मघवा । मघवानौ ॥

## जरा जरस् स्वरे वा ॥ २४ ॥

जराशब्दो जरस् भवति वा । विभक्तिस्वरे । जरे । जरसौ । जराः । जरसः ॥ गणपाठाच्च । उपजरसमिति नित्यम् ॥

## त्रिचतुरोः स्त्रियां तिसृ चतसृ विभक्तौ ॥ २५ ॥

स्त्रियां वर्त्तमानयोस्त्रिचतुरोः तिसृ चतसृ इत्येतौ भवतः । विभक्तौ यथासंख्यम् । तिस्रः । चतस्रः । तिसृभिः । चतसृभिः । प्रियतिसृ । प्रियचतसृ कुलं वा ॥

## तौ रं स्वरे ॥ २६ ॥

तौ तिसृचतसृ रं प्राप्नुतः । विभक्तिस्वरे । तिस्रः । चतस्रः ॥ बाधकबाधनार्थोऽयं योगः ॥

## न नामि दीर्घम् ॥ २७ ॥

तौ तिसृचतसृ दीर्घं न प्राप्नुतः । कृतनामि परे । तिसृणाम् । चतसृणाम् ॥

## नृ वा ॥ २८ ॥

नृशब्दो दीर्घं प्राप्नोति वा । कृतनामि परे । नृणाम् । नृणाम् ॥

## त्यदादीनाम विभक्तौ ॥ २९ ॥

त्यदादीनामन्तस्य अकारो भवति विभक्तौ । स्य । त्यौ । स । तौ । यत्र । तत्र ॥ सर्वनामान्तर्गणो द्विपर्यन्त इह त्यदादि ॥ विभक्ताविति किम । त्यदीय ॥

## किम् कः ॥ ३० ॥

किम्शब्द. को भवति विभक्तौ । क । कौ । कदा ॥ विभक्ताविति किम् । किवान् ॥

## दोऽद्वेर्मः ॥ ३१ ॥

त्यदादीना दकारस्य मो भवति विभक्तावद्वे । इमौ । इमकौ ॥ अद्वेरिति किम । द्वौ ॥

## सौ सः ॥ ३२ ॥

त्यदादीना दकारस्य सो भवति सौ विभक्तौ । असौ । असकौ ॥ साचात्साविति किम । असौ पुत्रोऽस्येति । अद पुत्रः ॥

## तस्य च ॥ ३३ ॥

त्यदादीना तकारस्य सो भवति सौ विभक्तौ । स्यः । स्यकः । स । सकः ॥ साक्षात्साविति किम । तत्पुत्र ॥

## इदमियमयम् पुंसि ॥ ३४ ॥

इदम् इयम् भवति । अयम् च पुंसि । सौ विभक्तौ । इय स्त्री । अय पुमान् ॥ इद कुलमिति तदुक्तप्रतिषेधात् ॥ साक्षात्साविति किम् । इदपुत्र ॥

## अद् व्यञ्जनेऽनक् ॥ ३५ ॥

इदमोऽव्वर्जितोऽद्भवति व्यञ्जनादौ विभक्तौ । आभ्याम् । एभिः ॥ अनगिति किम् । इमकैः ॥ साद्याविभक्ताविति किम् । अस्य पुत्रः । इदंपुत्रः ॥

## टौसोरन ॥ ३६ ॥

इदमोऽव्वर्जितस्य टौसोर्विभक्त्योरनादेशो भवति । अनेन । अनयोः ॥ अनगिति किम् । इमकेन । इमकयोः ॥

## एतस्य चान्वादेशे द्वितीयायां चैन ॥ ३७ ॥

एतस्येदमश्च टौसोर्विभक्त्योर्द्वितीयायां च कथितस्यैवानुकथनविषय एनादेशो भवति । एतं व्याकरणमध्यापय । अथो एनं वेदमध्यापय ॥ इमं घटमानय । अथो एनं परिवर्त्तय ॥ एतेन रात्रिरधीता । अथो एनेनाहरप्यधीतम् ॥ एतयोः शोभनं शीलम् । अथो एनयोश्च प्रभूतं स्वमित्यादि योज्यम् ॥

## तस्माद् भिस् भिर् ॥ ३८ ॥

तस्मादिदमः कृताकारात्परो भिस् भिर्भवति । एभिः ॥ केचित्तस्मादिति किम् । इमैर्गुणैः सत्यैः स्वर्गं गताः ॥

## अदसश्च ॥ ३९ ॥

अदसोऽग्वर्जितात् परो भिस् भिर्भवति । अमीभिः ॥ अनगिति किम् । अमुकैः ॥ चकार उत्तरत्रानिवृत्त्यर्थः ॥

## सावौ सिलोपश्च ॥ ४० ॥

अदसोऽन्तस्य और्भवति सौ परे। सिलोपश्च। असौ। असकौ॥

उत्वं मात्॥ ४१॥

अदसो मात्परस्य वर्णमात्रस्य उत्वं भवति। अमुम्। अमू। अमून्॥ मादिति किम्?। अमुकाभ्याम्॥

एद् बहुत्वे त्वी॥ ४२॥

अदसो मात्परस्य बहुत्वे निष्पन्न एत ईर्भवति। अमी। अमीभ्यः। बहुत्वं इति किम्। अमू॥ मादिति किम्?। अमुकेभ्यः॥ तुशब्द उत्तरत्र बहुत्वनिवृत्त्यर्थः॥

अपां भे दः॥ ४३॥

अपां विभक्तौ भे दो भवति। अद्भिः। अद्भ्याम्॥ विभक्ताविति किम्। अब्भारः॥

विरामव्यञ्जनादिष्वनडुन्नहिवन्सीनां च॥ ४४॥

विरामे व्यञ्जनादिषु चानडुन्नहिवन्सीनां च निष्पन्नानामन्तस्य दो भवति। अनडुत्। अनडुद्भ्याम्। उपानत्। उपानद्भ्याम्। सुविद्वत्। विद्वद्भ्याम्॥ व्यञ्जनमिह सामान्यम्। अनडुत्त्वम्। उपानत्त्वम्। विद्वत्ता। येनेष्यते। अनडुत्त्वम्। उपानत्त्वम्॥

स्रंसिध्वंसोश्च॥ ४५॥

स्रंसिध्वंसोर्निष्पन्नयोरन्तस्य विरामे व्यञ्जनादिषु च दो

भवति। उखास्रत्। उखास्रद्भ्याम्। उखास्रत्कल्पः। पर्णध्वत्। पर्णध्वद्भ्याम्। पर्णध्वद्भिः॥

### हशषछान्तेजादीनां डः ॥ ४६ ॥

हशषछान्तानां यजादीनां च लिङ्गानामन्तस्य विरामे व्यञ्जनादिषु च डो भवति। मधुलिट्। मधुलिड्भ्याम्। मधुलिट्पाशः। सुविट्। सुविड्भ्याम्। सुविट्तरः। षट्। षड्भ्याम्। षड्भ्यः। षट्त्वम्। शब्दप्राट्। शब्दप्राड्भ्याम्। शब्दप्राट्त्वम्। देवेट्। देवेड्भ्याम्। देवेट्त्वम्। रज्जुसृट्। रज्जुसृड्भ्याम्। रज्जुसृट्त्वम्। यज्। सृज्। मृज्। राज्। भ्राज्। व्रश्च्। भ्रस्ज्। परिव्राज्। एते यजादयः॥

### दादेर्हस्य गः ॥ ४७ ॥

लिङ्गस्य हस्य दादेर्विरामे व्यञ्जनादिषु च गो भवति। गोधुक्। गोधुग्भ्याम्। गोधुक्षु।

### चवर्गदृगादीनां च ॥ ४८ ॥

चवर्गान्तस्य दृश दृग्वमादीनां च लिङ्गानामन्तस्य विरामे व्यञ्जनादिषु च गो भवति। वाक्। वाग्भ्याम्। वाक्कल्पः। तृणक्। तृणग्भ्याम्। तृणक्षु। दृक्। दृग्भ्याम्। दृक्षु॥ दृश्। स्पृश्। क्रुश्। दधृष्। दिश्। उष्णिह्। ऋत्विज्। स्रज्। मस्ज्। एते दृगादयः॥

### मुहादीनां वा ॥ ४९ ॥

मुहादीनां लिङ्गानामन्तस्य विरामे व्यञ्जनादिषु च गो

भवति वा। मुक। मुग्भ्याम्। मुक्षु। मुट्। मुड्भ्याम्। मुट्त्सु॥ मुह्। द्रुह्। ष्णुह्। ष्णिह्। नश्। एते मुहादय॥

## हचतुर्थान्तस्य धातोस्तृतीयादेरादिचतुर्थत्वमकृतवत्॥ ५०॥

धातोरवयवस्य हचतुर्थान्तस्य तृतीयादेरादिचतुर्थत्वं भवति। विरामे व्यञ्जनादिषु च। तच्चाकृतवत्। निघुट्। निघुड्भ्याम्। निघुट्त्सु। ग्रामभुत्। ग्रामभुद्भ्याम्। ग्रामभुत्सु॥ गर्दभयतेः क्विप्। गर्धप्। गर्धब्भ्याम्। गर्धप्सु॥ धातोरिति किम्। दामलिट्॥ तृतीयादेरिति किम्। चित्रगु॥ अकृतवदिति किम्। गोधुक्॥

## सजुषाशिषो रः॥ ५१॥

सजुषाशिषोरन्तस्य विरामे व्यञ्जनादिषु च रो भवति। सजूः। सजूर्भ्याम्। सजूःषु। सजूष्षु। आशीः। आशीर्भ्याम्। आशीःषु। आशीष्षु॥

## इरुरोरीरूरौ॥ ५२॥

इरुरोर्धात्वोर्विरामे व्यञ्जनादिषु च यथासंख्यमीरूरौ भवतः। गीः। गीर्भ्याम्। गीर्षु। गीष्षु। धूः। धूर्भ्याम्। धूर्षु। धूष्षु॥

## अह्नः सः॥ ५३॥

अहन् इत्येतस्य विरामे व्यञ्जनादिषु च सो भवति। अहः। अहोभ्याम्। अहस्सु॥

## इसुसुदोषां घोषवति रः ॥ ५९ ॥

इसन्तस्य । उसन्तस्य । दोस्शब्दस्य च घोषवति परे रो भवति । सर्पिर्भ्याम् । धनुर्भ्याम् । दोर्भ्याम् ॥ घोषवतीति किम् । सर्पिःषु । धनुःषु । दोःषु ॥ भे र इति सिद्धे घोषवतीत्युत्तरार्थं च ॥

## धुटां तृतीयः ॥ ६० ॥

धुटां वर्णानां तृतीयो भवति । घोषवति सामान्ये । योषिद्ग्राम् । चित्रलिग्भिः । मज्जति । लज्जते । भृज्जति ॥

## अघोषे प्रथमः ॥ ६१ ॥

अघोषे परे धुटां वर्णानां प्रथमो भवति । पट्सु । प्रान्भुक्षु । इच्छति । गच्छति ॥

## वा विरामे ॥ ६२ ॥

विरामे धुटां वर्णानां प्रथमस्तृतीयो भवति वा । विधप् । विधब् । वाक् । वाग् ।

## रेफसोर्विसर्जनीयः ॥ ६३ ॥

रेफसकारयोर्विसर्जनीयो भवति । विरामे शब्दच्छेदे घोषवत्यघोषे च । गीः । धूः । वृक्षः । पयोभ्याम् । पयःसु ॥ वाधिकाराद्विभक्तिव्यञ्जने रेफस्य न स्यात् । गीर्षु । धूर्षु । भवति च सजूःषु । आशीःषु ॥

## विरामव्यञ्जनादावुक्तं नपुंसकात्स्यमोर्लोपेऽपि ॥ ६४ ॥

विरामे व्यञ्जनादौ च यदुक्तं नपुंसकलिङ्गात्परयोः स्यमोर्निवृत्तावपि तद्भवति। तस्यैव सुगत्वात्। सुवाक्। सुवाग्। सुपथि। सुविद्वत्। सुपुम्। सुचतुः। सुद्यु॥ एवम् उखास्रत्। देवेडित्यादयः॥ अविग्रहार्थं व्यभिचारार्थम्। तेनेदमत्र न स्यात्॥

इति दौर्गसिंह्यां वृत्तौ नाम्नि चतुष्टये

तृतीयः पादः समाप्तः॥

---

## अव्ययीभावादकारान्ताद्विभक्तीनाममप-ञ्चम्याः॥ १॥

अव्ययीभावसमासादकारान्ताद्विभक्तीनां स्थानेऽम् भवति। अपञ्चम्याः। उपकुम्भम्॥ अव्ययीभावादिति किम्। कष्टश्रितः॥ विभक्तीनामिति किम्। उपकुम्भता। अपञ्चम्या इति किम्। उपकुम्भात्॥

## वा तृतीयासप्तम्योः॥ २॥

अव्ययीभावसमासादकारान्तात्परयोस्तृतीयासप्तम्योः स्थानेऽम् भवति वा। उपकुम्भम्। उपकुम्भेन। उपकुम्भम्। उपकुम्भे॥

## अन्यस्माल्लुक्॥ ३॥

अकारान्तादन्योऽव्ययीभावसमासस्तस्माद्विभक्तेर्लुग्भवति। उपवधु। उपकर्तृ॥

अव्ययाच्च ॥ ४ ॥

अव्ययमसंख्यम् । अव्ययाच्च विभक्तीनां लुग्भवति । स्व । प्रातः । च वा । ह । अह । एवमन्येऽपि ॥ पदसंज्ञार्थमिदम् ॥

रूढानां बहुत्वेऽस्त्रियामपत्यप्रत्ययस्य ॥ ५ ॥

जनपदसमानशब्दानां क्षत्रियाणां रूढसंज्ञा । रूढानां बहुत्वे विहितस्यापत्यप्रत्ययस्यास्त्र्यभिधेयस्य लुग्भवति । पञ्चालस्यापत्यानि पञ्चालाः । एवं विदेहाः । अङ्गाः । वङ्गाः । कलिङ्गाः । मगधाः । सूरमसाः । अणो लुक् ॥ प्रत्यग्रथाः । कलकूटाः । अश्मकाः । इञो लुक् ॥ बहुत्व इति किम् । आङ्गः । आङ्गौ । प्रियवाङ्गा इति समासोऽत्र बहुत्वे न प्रत्ययः ॥ अस्त्रियामिति किम् । कालिङ्ग्यः ॥ अपत्यप्रत्ययस्येति किम् । पञ्चालानामिमे भृत्याः । पाञ्चालाः ॥

गर्गयस्कविदादीनां च ॥ ६ ॥

गर्गादीनां यस्कादीनां विदादीनां च बहुत्वे विहितस्यापत्यप्रत्ययस्यास्त्र्यभिधेयस्य लुग्भवति । गर्गाः । वत्साः । यञो लुक् ॥ यस्काः । लह्याः । अणो लुक् ॥ विदाः । उर्वाः । अत्राप्यणो लुक् ॥ यस्कादयो नानापत्यप्रत्ययान्ताः । विदादयोऽपि पौत्राद्यपत्याः । प्रियगार्ग्याः । प्रियवात्स्याः । प्रियविदः । प्रत्ययोऽत्र बहुत्वे लुक् स्यादेव ॥ गार्ग्यकुलम् । गर्गकुलमिति गार्ग्यस्य हि यत्कुलं गर्गस्य गार्ग्याणामपि तत्कुलमित्यभेदेनोच्यते ॥

## भृग्वत्र्यङ्गिरस्कुत्सवसिष्ठगोतमेभ्यश्च ॥७॥

भृग्वादिभ्यो बहुत्वे विहितस्यापत्यप्रत्ययस्यास्त्र्यभिधेयस्य लुग्भवति। अत्रेरेयण्। इतरेभ्य ऋषिभ्योऽण्। भृगवः। अत्रयः। अङ्गिरसः। कुत्साः। वसिष्ठाः। गोतमाः। अस्त्रियामिति किम्। भार्गव्यः॥

## यतोऽपैति भयमादत्ते वा तदपादानम् ॥८॥

यस्मादपैति यस्माद्भयं भवति यस्मादादत्ते वा तत्कारकमपादानसंज्ञं भवति। वृक्षात्पर्णं पतति। व्याघ्राद्बिभेति। चौरादुद्विजते। उपाध्यायादधीते। उपाध्यायादागमयति॥ यत इत्यवधिमात्रार्थम्। तेन धावतोऽश्वात्पतितः। तथा। अधर्माज्जुगुप्सते। अधर्माद्विरमति। धर्मात्प्रमाद्यति। अध्ययनात्पराजयते। उपाध्यायादन्तर्धत्ते। शृङ्गाच्छरो जायते। हिमवतो गङ्गा प्रभवति। प्रासादात्प्रेक्षते। आसनात्प्रेक्षते। कुतो भवान्। पाटलिपुत्रात्॥

## ईप्सितं च रक्षार्थानाम् ॥९॥

रक्षार्थानां धातूनां प्रयोगे यदीप्सितमनीप्सितं च तत्कारकमपादानसंज्ञं भवति। यवेभ्यो गां रक्षति। यवेभ्यो गां निषेधति। शालिभ्यः शृगालान्वारयति। अहिभ्य आत्मानं रक्षति। कूपादन्धं वारयत्यपि॥ ईप्सिते कर्मसंज्ञां बाधते॥ अपादानप्रदेशाः। अपादाने पञ्चमीत्येवमादयः॥

यस्मै दित्सा रोचते धारयते वा तत् सम्प्रदानम् ॥ १० ॥

यस्मै दातुमिच्छा यस्मै रोचते धारयते वा तत्कारकं सम्प्रदानसंज्ञं भवति । ब्राह्मणाय गां ददाति । देवदत्ताय रोचते मोदकः । यज्ञदत्ताय स्वदते दधि । विष्णुमित्राय गां धारयते । कथं देवदत्ताय श्लाघते । छात्राय ह्नुते । छात्राय तिष्ठते कुमारी । छात्राय शपते । पुष्पेभ्यः स्पृहयति । छात्राय राध्यति । छात्रायेक्षते । छात्राय प्रतिशृणोति । छात्राय शृणोतीति तादर्थ्ये चतुर्थी सिद्धा । छात्राय क्रुध्यति । मित्राय द्रुह्यति । मित्रायेर्ष्यति मित्रायासूयति ॥ यस्मै कुप्यतीति वक्तव्यम् ॥ दातुमिच्छेति किम् । राज्ञो दण्डं ददाति ॥ सम्प्रदानप्रदेशाः । सम्प्रदाने चतुर्थीत्येवमादयः ॥

य आधारस्तदधिकरणम् ॥ ११ ॥

आध्रियन्ते क्रिया यस्मिन्नित्याधारः ॥ आधारो यस्तदधिकरणसंज्ञं भवति । कटे आस्ते । तिलेषु तैलम् । दिवि देवाः । तथा गङ्गायां घोषः । अङ्गुल्यग्रे करिशतम् ॥ अधिकरणप्रदेशाः । अधिकरणे सप्तमीत्येवमादयः ॥

येन क्रियते तत् करणम् ॥ १२ ॥

कर्त्रा येन क्रियते तत्कारकं करणसंज्ञं भवति । दात्रेण धान्यं लुनाति । गन्त्र्या गच्छति । तथा पशुना रुद्रं यजते । प्रकृत्याभिरूपः । प्रायेण याज्ञिकः ।

आमन्त्रणे चार्थे प्रथमा विभक्तिर्भवति । हे पुत्र । अपुत्र । धिक् पुत्रौ । हे पुत्राः । षष्ठ्यपवादोऽयम् ॥

**शेषाः कर्मकरणसम्प्रदानापादानस्वाम्याद्यधिकरणेषु ॥ १९ ॥**

शेषा द्वितीयाद्याः षड्विभक्तयः कर्मादिष्वर्थेषु षट्सु यथासङ्ख्यं भवन्ति । कर्मणि । कटं करोति ॥ करणे । परशुना छिनत्ति ॥ सम्प्रदाने । गुरवे गां ददाति ॥ अपादाने । वृकाद्भयम् ॥ स्वाम्यादौ । देवदत्तस्य स्वामी । यज्ञदत्तस्य स्वम् । विष्णुमित्रस्य सम्बन्धः ॥ अधिकरणे । कटे आस्ते । अधीती व्याकरणे । तथा । साधुर्मातरि । असाधुः पितरीत्येवमादयः ॥ निमित्तात्कर्मसंयोगे सप्तमी वाच्या । चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥

**पर्यपाङ्योगे पञ्चमी ॥ २० ॥**

परि । अप । आङ् । एभिर्योगे लिङ्गात्पञ्चमी भवति ॥ इहापपरी वर्जने । आङ् मर्यादाभिविध्योः ॥ परि त्रिगर्तेभ्यो वृष्टो देवः । अप पाटलिपुत्राद्वृष्टो देवः । आ पाटलिपुत्राद्वृष्टो देवः ॥

**दिगितरर्तेऽन्यैश्च ॥ २१ ॥**

दिक् । इतर । ऋते । अन्य । एभिर्योगे लिङ्गात्पञ्चमी भवति । पूर्वो ग्रामात् । उत्तरो ग्रामात् । पूर्वो ग्रीष्माद्वसन्तः । इयमस्याः पूर्वा दिक् । इतरो देवदत्तात् । ऋते

देवदत्तात् ॥ ऋते देवदत्तमिति द्वितीयापीष्टा ॥ अन्यो देवदत्तात् । भिन्नो देवदत्तात् ॥

## द्वितीयैनेन ॥ २२ ॥

एनप्रत्ययान्तेन योगे लिङ्गाद् द्वितीया भवति । दक्षिणेन ग्रामम् । उत्तरेण हिमवन्तम् । अदूर एनोऽपञ्चम्याः ॥ चकाराधिकाराद् निकषासमयाहाधिगन्तरान्तरेण युक्ता द्वितीया । निकषा ग्रामम् । समया ग्रामम् । हा देवदत्तम् । धिग्देवदत्तम् । अन्तरा गार्हपत्यमाहवनीयं च वेदिः । अन्तरेण पुरुषकारं न किञ्चिल्लभ्यते ॥

## कर्मप्रवचनीयैश्च ॥ २३ ॥

कर्मप्रवचनीयैर्योगे लिङ्गाद् द्वितीया भवति । वृक्षमभि विद्योतते विद्युत् । वृक्षं वृक्षमभि तिष्ठति । साधुर्देवदत्तो मातरमभि । यदत्र मा परि स्यात् । यदत्र मां प्रति स्यात् । वृक्षमनु विद्योतते विद्युत् । पर्वतमनु वसिता सेना । अन्वर्जुन योद्धार । उपार्जुनं योद्धार. ॥ लक्षणवीप्सेत्थम्भूतेऽभिभागे च परिप्रती । अनुरेषु सहार्थे च हीन उपश्च कथ्यते ॥ आधिक्यार्थोपशब्दयोगे सप्तमी वाच्या । उपखार्यां द्रोणः ॥ स्वाम्यर्थाधियोगे च । अधि ब्रह्मदत्ते पञ्चालाः । अधि पञ्चालेषु ब्रह्मदत्त इति ॥

## गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥ २४ ॥

गत्यर्थानां धातूनां चेष्टाक्रियाणां कर्मण्यध्वर्जिते द्वि

गोत्रेण गार्ग्यः। समेन धावति। विषमेण धावति। द्विद्रोणेन धान्यं क्रीणाति। पञ्चकेन पशून् क्रीणाति। शतेन परिक्रीतः। शताय परिक्रीतस्त्वं मासं कर्म करिष्यसीति प्रधानक्रियापेक्षं तादर्थ्यम्॥ करणप्रदेशाः करणे तृतीयेत्येवमादयः॥

## यत् क्रियते तत् कर्म॥ १३॥

कर्त्रा यत्क्रियते तत्कारकं कर्मसंज्ञं भवति। कटं करोति। ओदनं पचति। आदित्यं पश्यति। तथा। अहिं लङ्घयति। ग्रामं गच्छन्वृक्षमूलान्युपसर्पति। तथा। स्तोकं पचति। गां दोग्धि पयः। पौरवं गां याचते। गामवरुणद्धि व्रजम्। छात्रं पन्थानं पृच्छति। पौरवं गां भिक्षते। वृक्षमवचिनोति फलानि। शिष्यं धर्मं ब्रूते। शिष्यं धर्म्ममनुशास्ति। अजां नयति ग्रामम्। ग्रामं वहति भारम्। हरते कुम्भं भारम्। ग्रामं छागमजां जयति। गर्गाञ्शतं दण्डयति। ग्राममधिशेते। ग्राममधितिष्ठति। वृक्षमध्यास्ते। धर्म्ममभिनिविशते। त्रिरात्रमुपवसति। ग्राममनुवसति। पर्वतमधिवसति। आवसथमावसति। अक्षान्दीव्यति। अक्षैर्दीव्यतीति करणविवक्षा। मास गुडधानाः। क्रोशं कुटिला नदी। भवतेर्गम्यमानत्वात्॥ कर्म्मप्रदेशाः। कर्मणि द्वितीयेत्येवमादयः॥

## यः करोति स कर्ता॥ १४॥

यः क्रियां करोति स कर्तृसंज्ञो भवति। दात्रेण ह्न्यते। चैत्रेण कृतम्॥

## कारयति यः स हेतुश्च ॥ १५ ॥

तमेव कर्तारं यः कारयति स हेतुसंज्ञो भवति। चकारात्कर्तृसंज्ञकश्च। कारयति। पाचयति। हेतुकर्तृप्रदेशाः। धातोश्च हेतौ [का० ३. २. १०] इत्येवमादयः। क्रियानिमित्तं कारकं लोकतः सिद्धम्।

## तेषां परमुभयप्राप्तौ ॥ १६ ॥

तेषां कारकाणामुभयप्राप्तौ सत्यां यत्परं तद्भवति। धामाय धनं दत्त्वा तीर्थं गतः। सम्प्रदानमेव। कांस्यपात्र्यां भुङ्क्ते। अधिकरणमेव। पटुना धनुषा शरान् क्षिपति। करणमेव। तरुं त्यजति खगः। कर्मैव। तथा गां दोग्धि पयः। त्यजति दण्डं दण्डीति कर्तैव। एवमन्येऽपि।

## प्रथमा विभक्तिर्लिङ्गार्थवचने ॥ १७ ॥

अव्यतिरिक्तलिङ्गार्थवचने प्रथमा विभक्तिर्भवति। उच्चैः। नीचैः। वृक्षः। कुण्डम्। कुमारी। द्रोणः। खारी। आढकः। तपः। वितस्तिः। दीर्घम्। काष्ठम्। हस्तम्। धनम्। एकः। द्वौ। बहवः। सर्वेऽप्यमी लिङ्गार्था अव्यभिचारात्। एकमर्थं द्वौ बहून्वा वक्तीत्यर्थसंख्यया। एकस्मिन्नर्थे एकवचनं द्वयोर्द्विवचनम्। बहुषु बहुवचनम्। सम्पन्नो यव इति जात्यैकवचनम्। सम्पन्ना यवा इति व्यक्तिभेदेषु बहुवचनम्। दृषदिति शास्त्राश्रितेषु भावेषु। दाराः। गृहेषु दारा इति पुमानपि द्विवचनाधिकवचनम्।

## आमन्त्रणे च ॥ १८ ॥

तीयाचतुर्थ्यौ भवतः। ग्रामं गच्छति। ग्रामाय गच्छति। ग्रामं व्रजति। ग्रामाय व्रजति॥ चेष्टायामिति किम्। मनसा मेरुं गच्छति॥ अनध्वनीति किम्। अध्वानं गच्छति। पन्थानं गच्छति। पन्थानं व्रजति। मुख्योऽवाध्वा गृह्यते।

## मन्यकर्मणि चानादरेऽप्राणिनि॥ २५॥

मन्यतेः कर्मणि प्राणिवर्जिते द्वितीयाचतुर्थ्यौ भवतः। अनादरे गम्यमाने न त्वा तृणं मन्ये। न त्वा तृणाय मन्ये। न त्वा बुसं मन्ये। न त्वा बुसाय मन्ये॥ अनादर इति किम्। अश्मानं दृषदं मन्ये॥ प्राणिष्वप्रनावादिष्विति। न त्वा नावं मन्ये। न त्वा काकं मन्ये। न त्वान्नं मन्ये। न त्वा शृगालं मन्ये। इह स्यादेव। न त्वा श्वानं मन्ये। न त्वा शुने मन्ये। यदि द्वितीया स्याच्चतुर्थी तदानादरो न गम्यते॥

## नमःस्वस्तिस्वाहास्वधालंवषड्योगे चतुर्थी॥ २६॥

नम आदिभिर्योगे लिङ्गाच्चतुर्थी भवति। नमो देवेभ्यः। स्वस्ति प्रजाभ्यः। स्वाहाग्नये। स्वधा पितृभ्यः। अलं मल्लो मल्लाय। समर्थो मल्लो मल्लाय। वषडिन्द्राय॥

## तादर्थ्ये॥ २७॥

सोऽर्थोऽस्येति तस्मा इदमिति वा तदर्थः॥ तदर्थभावे द्योत्ये लिङ्गाच्चतुर्थी भवति। यूपाय दारु। रन्धनाय स्थाली। आतुराय निगच्छति। दुहाय गच्छति। पत्नी

शेते। तथा मूत्राय सम्पद्यते यवागूः। मूत्राय सङ्कल्पते। वाताय कपिलिका विद्युत्।

## तुमर्थाच्च भाववाचिनः ॥ २८ ॥

तुमा समानार्थभाववाचिनः प्रत्ययान्ताल्लिङ्गाच्चतुर्थी भवति। भाववाचिनश्चेति वक्ष्यति। पाकाय व्रजति। पक्तये व्रजति॥ तुमर्थादिति किम्। पाकस्य। त्यागस्य। एधेभ्यो व्रजति। फलेभ्यो व्रजति। तादर्थ्यविवक्षा॥

## तृतीया सहयोगे ॥ २९ ॥

सहार्थेन योगे लिङ्गात्तृतीया भवति। पुत्रेण सहागत। पुत्रेण सह स्थूल। पुत्रेण सह गोमान्। पुत्रेण साकम्। पुत्रेण सार्द्धम्। पुत्रेण समम्। तथा पुत्रेणागत स्थूलो गोमानिति तृतीयापि षष्ठीवदप्रधानादेव॥

## हेत्वर्थे ॥ ३० ॥

हेत्वर्थे वर्त्तमानाल्लिङ्गात्तृतीया भवति। धनेन कुलम्। अन्नेन वसति॥ योग्यताभावविवक्षया करणेन सिध्यति॥

## कुत्सितेऽङ्गे ॥ ३१ ॥

कुत्सितेऽङ्गे वर्त्तमानाल्लिङ्गात्तृतीया भवति। अक्ष्णा काणः। पादेन खञ्जः। पृष्ठेन कुब्जः। अक्षि काणमस्येति प्रधानत्वात्प्रथमैव॥

## विशेषणे ॥ ३२ ॥

विशेषणे वर्त्तमानाल्लिङ्गात्तृतीया भवति। जटाभिस्ता

पक्षमश्राषीत्। शिखया परिव्राजकमपश्यत्॥ विशेषण इति किम्। वृक्षं प्रति विद्योतनम्॥ लक्षणभावे न स्यात्। कोलमुत्पन्नमिति। लिङ्गार्थमात्रे प्रथमैव॥

**कर्त्तरि च॥ ३३॥**

कर्त्तरि च कारके वर्त्तमानाल्लिङ्गात्तृतीया भवति। देवदत्तेन कृतम्। चैत्रेण क्रियते॥

**कालभावयोः सप्तमी॥ ३४॥**

कालभावयोर्विशेषणभूतयोर्वर्त्तमानाल्लिङ्गात्सप्तमी भवति। शरदि पुष्यन्ति सप्तच्छदाः। गोषु दुह्यमानास्वागतः। दुग्धास्वागतः। कालभावयोरिति किम्। यो जटाभिः स भुङ्क्ते। यो भोक्ता स देवदत्त इति। साहचर्याद्धि प्रसिद्धा क्रियैव हि विशेषणम्। वस्तुतः प्रात्राजीदिति सम्बन्धविवचापि॥

**स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः षष्ठी च॥३५॥**

स्वामिन्। ईश्वर। अधिपति। दायाद। साक्षिन्। प्रतिभू। प्रसूत। एभिर्योगे लिङ्गात् षष्ठी भवति सप्तमी च। गवां स्वामी। गोषु स्वामी। गवामीश्वरः। गोष्वीश्वरः। गवामधिपतिः। गोष्वधिपतिः। गवां दायादः। गोषु दायादः। गवां साक्षी। गोषु साक्षी। गवां प्रतिभूः। गोषु प्रतिभूः। गवां प्रसूतः। गोषु प्रसूतः। सम्बन्धोऽत्र स्फुट इति वचनम्॥

शेते। तथा मूत्राय सम्पद्यते यवागूः। मूत्राय सङ्कल्पते। वाताय कपिलिका विद्युत्।

## तुमर्थाच्च भाववाचिनः ॥ २८ ॥

तुमा समानार्थाद्भाववाचिनः प्रत्ययान्ताल्लिङ्गाच्चतुर्थी भवति। भाववाचिनश्चेति वक्ष्यति। पाकाय व्रजति। पक्तये व्रजति॥ तुमर्थादिति किम्। पाकस्य। त्यागस्य॥ एधेभ्यो व्रजति। फलेभ्यो व्रजति। तादर्थ्यविवक्षा॥

## तृतीया सहयोगे ॥ २९ ॥

सहार्थेन योगे लिङ्गात्तृतीया भवति। पुत्रेण सहागतः। पुत्रेण सह स्थूलः। पुत्रेण सह गोमान्। पुत्रेण साकम्। पुत्रेण सार्द्धम्। पुत्रेण समम्। तथा पुत्रेणागतः स्थूलो गोमानिति तृतीयापि षष्ठीवदप्रधानादेव॥

## हेत्वर्थे ॥ ३० ॥

हेत्वर्थे वर्त्तमानाल्लिङ्गात्तृतीया भवति। धनेन कुलम्। धनेन वसति॥ योग्यतामात्रविवक्षया करणेन सिध्यति॥

## कुत्सितेऽङ्गे ॥ ३१ ॥

कुत्सितेऽङ्गे वर्त्तमानाल्लिङ्गात्तृतीया भवति। अक्ष्णा काणः। पादेन खञ्जः। पृष्ठेन कुब्जः। अयि कायमप्येति प्रधानत्वात्प्रथमैव॥

## विशेषणे ॥ ३२ ॥

विशेषणे वर्त्तमानाल्लिङ्गात्तृतीया भवति। जटाभिस्ता

यसमद्राक्षीत्। भिक्षुणा परिव्राजकमपश्यत्॥ विशेषण इति किम्। वृक्षं प्रति विद्योतनम्॥ लक्षणमात्रे न स्यात्। नोतमुत्पलमिति। लिङ्गार्थमात्रे प्रथमैव॥

## कर्तरि च॥ ३३॥

कर्त्तरि च कारके वर्त्तमानाल्लिङ्गात्तृतीया भवति। देवदत्तेन कृतम्। चैत्रेण हन्यते॥

## कालभावयोः सप्तमी॥ ३४॥

कालभावयोर्विशेषणभूतयोर्वर्त्तमानाल्लिङ्गात्सप्तमी भवति। शरदि पुष्यन्ति सप्तच्छदाः। गोषु दुह्यमानासु आगतः। दुग्धास्वागतः। कालभावयोरिति किम्। यो जटाभिः स भुङ्क्ते। यो भोक्ता स देवदत्त इति। साहचर्याद्धि प्रसिद्धा क्रियैव हि विशेषणम्। कृत्तप्राव्राजीदिति सम्बन्धविवक्षापि॥

## स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः षष्ठी च॥३५॥

स्वामिन्। ईश्वर। अधिपति। दायाद। साक्षिन्। प्रतिभू। प्रसूत। एभिर्योगे लिङ्गात् षष्ठी भवति सप्तमी च। गवां स्वामी। गोषु स्वामी। गवामीश्वरः। गोष्वीश्वरः। गवामधिपतिः। गोष्वधिपतिः। गवां दायादः। गोषु दायादः। गवां साक्षी। गोषु साक्षी। गवां प्रतिभूः। गोषु प्रतिभूः। गवां प्रसूतः। गोषु प्रसूतः। सम्बन्धोऽत्र स्फुट इति वचनम्।

निर्धारणे च ॥ ३६ ॥

निर्धारणे चार्थे वर्त्तमानाल्लिङ्गात् षष्ठी भवति सप्तमी च । पुरुषाणां क्षत्रियः शूरः । पुरुषेषु क्षत्रियः शूरः । गवां कृष्णा सम्पन्नक्षीरा । गोषु कृष्णा सम्पन्नक्षीरा । गच्छतां धावन्तः शीघ्राः । गच्छत्सु धावन्तः शीघ्राः ॥

षष्ठी हेतुप्रयोगे ॥ ३७ ॥

हेतौ प्रयोगे वर्त्तमानाल्लिङ्गात् षष्ठी भवति । अन्नस्य हेतोर्वसति ॥ हेत्वर्थे तृतीयाप्राप्ते वचनम् ॥

स्मृत्यर्थकर्मणि ॥ ३८ ॥

स्मरणार्थानां धातूनां प्रयोगे कर्मणि षष्ठी भवति । मातुः स्मरति । पितुरध्येति ॥ उत्तरत्र नित्यग्रहणात् नित्यमपि प्रकरणेऽस्मिन् । मातरं स्मरति ॥ कथं माता स्मर्यते । कारकत्वात् प्रथमैव । मातुः स्मर्यत इति यदि सम्बन्धोऽत्र विवक्ष्यते । तथा सर्पिषो दयते । मधुन ईष्टे । सर्पिषो जानीते । मधुनो जानीते । सम्भ्रान्तिज्ञाने सर्पिषोऽसतः करणत्वाभावात्सम्बन्ध एव षष्ठी । एवमन्येऽपि ॥

करोतेः प्रतियत्ने ॥ ३९ ॥

सतो गुणान्तराधानं प्रतियत्नः ॥ करोतेः कर्मणि प्रतियत्ने गम्यमाने षष्ठी भवति । एधोदकस्योपस्कुरुते । एधोदकमुपस्कुरुते ॥

## हिंसार्थानामज्वरे: ॥ ४० ॥

हिंसार्थानां धातूनां ज्वरिवर्जितानां प्रयोगे कर्मणि षष्ठी भवति। चौरस्य रुजति। दास्या आमयति। चौरस्योज्जासयति। चौरस्य निहन्ति। चौरस्य प्रहन्ति। चौरस्य प्रणिहन्ति। चौरस्योत्पाटयति। चौरस्योत्क्राथयति। चौरस्य पिनष्टि। अनित्यमपि। चौरं रुजतीत्यादि॥ हिंसार्थानामिति किम्? धाना: पिनष्टि॥ अज्वरेरिति किम्? चौरं ज्वरयति। चौरस्य सन्तापयतीतीष्यत एव॥

## कर्तृकर्मणो: कृति नित्यम् ॥ ४१ ॥

कर्तृकर्मणो: कृत्प्रयोगे नित्यं षष्ठी भवति। भवत: शायिका। भवत आसिका॥ कर्मणि च। अपां स्रष्टा। पुरां भेत्ता॥ कृतीति किम्। तद्धितप्रयोगे माभूत्। कृतपूर्वी कटम्॥

## न निष्ठादिषु ॥ ४२ ॥

कर्तृकर्मणोर्निष्ठादिषु षष्ठी न भवति। देवदत्तेन कृतम्। ओदनं भुक्तवान्। ओदनं पचन्। ओदनं पचमान.॥ तत्र निष्ठादय:। क्त। क्तवन्तु। शन्तृङ्। आन। वनस्। कि। उदन्त। उकञ्। अव्ययखलर्थतृण्। द्विष: शतो वा वक्तव्यम्। चौरं द्विषन्। चौरस्य द्विषन्।

## षष्ठी यो ने ॥ ४३ ॥

षडो णो भवति। विभक्तौ नै परे। षण्णाम्॥ विभक्ताविति किम्। षड्नयनम्॥

## मनोरनुस्वारो धुटि॥ ४४॥

मनोरनन्त्ययोरनुस्वारो भवति धुटि परे। पुंस। शान्ति.। उञ्छिता। युञ्जौ। स्वाम्मि॥ अनन्त्ययोरिति किम्? प्रशान् करोति॥ स्यादि धुटि पदान्तवत्। पुभ्याम्। पुंभ्याम्। प्रशान्भ्याम्। सुकन्भ्याम्॥ धुटीति किम्? गम्यते। हन्यते॥

## वर्गे वर्गान्तः॥ ४५॥

अनन्त्योऽनुस्वारो वर्गे परे वर्गान्तो भवति। शङ्कि ता। उञ्छिता। षञ्जिता॥ युञ्जौ। स्वाम्मि॥ वर्ग इति किम्? आक्रंस्यते॥

## तवर्गश्चटवर्गयोगे चटवर्गौ॥ ४६॥

तवर्गोऽनन्त्यश्चटवर्गयोगे चटवर्गौ प्राप्नोति। आन्तरतम्यात्। मज्जति। लज्जते। भ्रज्जति। यज्ञः। याञ्चा। राज्ञः॥ टवर्गयोगे च। षण्णाम्। अड्डति। अट्टति। अट्टते॥ चटवर्गयोग इति किम्?। विश्नः। प्रश्नः॥ अनन्त्य इति किम्? मधुलिट् तरति॥

## नामिकरपरः प्रत्ययविकारागमस्थः सिः षं नुविसर्जनीयषान्तरोऽपि॥ ४७॥

नामिकरेभ्यः परः प्रत्ययविकारागमस्थोऽनन्त्यः सिः

षत्वमापद्यते । नुविसर्जनीयषान्तरः । अपिशब्दादनन्तरोऽपि । नामिपरस्तावत् । अग्निषु । वायुषु ॥ कपरः । दिक्षु ॥ रपरः । गीर्षु । धूर्षु ॥ विकारस्थः । एषः ॥ आगमस्थः । सर्पिषाम् ॥ नुविसर्जनीयषान्तरः । सर्पींषि । धनूंषि । सुपीःषु । सुतूःषु ॥ रप्रकृतिरनामिपरोऽपीति वले वा षत्वादेशौ । सर्पिष्षु । धनुष्षु ॥ अपिशब्दस्य बहुलार्थत्वात् समासे । अङ्गुलेः सङ्गस्य । अङ्गुलिषङ्गः । तथा भीरोः स्थानस्य । भीरुष्ठानम् । अग्नेः स्तुतः । अग्निष्टुत् । दीर्घात्सोमस्य । अग्नीषोमौ । ज्योतिरायुर्भ्यां च स्तोमस्य । ज्योतिष्टोमः । आयुष्टोमः । अग्निष्टोमः ॥ समास इत्येव । ज्योतिः स्तोमं दर्शयतीत्येवमादयः ॥

**रषृवर्णेभ्यो नो णमनन्त्यः स्वरहयवकवर्गपवर्गान्तरोऽपि ॥ ४८ ॥**

रेफषकार ऋवर्णेभ्यः परोऽनन्त्यो नकारो णत्वमापद्यते । स्वरहयवकवर्गपवर्गान्तरोऽपि ॥ स्वरान्तरस्तावत् । चरणम् । पुरुषेण । मातृकेण ॥ हान्तरः । अर्हेण ॥ यान्तरः । आर्येण ॥ वान्तरः । पर्वणा ॥ कवर्गान्तरः । अर्केण । मूर्खेण ॥ पवर्गान्तरः । दर्पेण । रेफेण ॥ अनन्तरोऽपि । शीर्णम् । तिसृणाम् ॥ स्वरत्वादनुस्वारविसर्गाभ्यामपि । बृंहणम् । उरःकेण । उरःपेण ॥ विसर्जनीयोपचाराद् जिह्वामूलीयोपध्मानीयाभ्यामपि । उरᳵकेण । उरᳶपेण ॥ अनन्त्य इति किम् ? वृक्षान् ॥ कथम् अग्निर्नयति । यस्यैवानन्त्यो नकारस्तस्यैव रषृवर्णा गृह्यन्ते । श्रुतत्वात् ॥

अपिशब्दस्य बहुलार्थत्वात् पूर्वपदस्थेभ्यः संज्ञायाम् । शूर्पणखेत्यादयः ॥

## स्त्रियामादा ॥ ४९ ॥

स्त्रियां वर्त्तमानाल्लिङ्गादकारान्ताद् आप्रत्ययो भवति । स्त्रीपुंनपुंसकानि लोकलिङ्गानुशासनगम्यानि । अजा एडका । चटका । मूषिका ॥

## नदाद्यन्चिवाह्वन्स्यन्तृसखिनान्तेभ्य ई ॥५०॥

नदादि । अन्चि । वाह् । ऊ । अन्सि । अन्त् । ऋ । सखि । नान्तेभ्यः स्त्रियां वर्त्तमानेभ्य ईप्रत्ययो भवति । नदी । मही । भषी । प्लवी ॥ अन्चि । प्राची । प्रतीची । वाह् । प्रष्ठौही ॥ उदन्त । पट्वी ॥ ऊदन्त । दाची ॥ अन्स्यन्त । विदुषी । अतिविदुषी ॥ अन्तन्त । पचन्ती । अतिपचन्ती भवती । मघवती ॥ ऋदन्त । कर्त्री । अतिकर्त्री ॥ सखि । सखी ॥ नान्त । दण्डिनी ॥ उतो गुणवचनादखरुसंयोगोपधाद्वा । पटुः । पट्वी ॥ बहुरित्यपि स्यात् ॥ खरुरियम् । पाण्डुरियमित्यत्र न स्यात् ॥ इनश्च क्विवर्जिताद्वा । धूनिः । धूनी ॥ केषु न स्यात् । पङ्क्तिः ॥ स्वसा । दुहिता ननान्दा । याता । माता । तिस्रः । चतस्र इति प्रत्ययेन विना स्त्रीत्वाभिधानात् । पञ्च सप्तेति स्त्रीत्वाभावादेव न भवति ॥ सखीति नित्यार्थम् ॥ नदादिराकृतिगणः ॥

## ईकारे स्त्रीकृतोऽलोप्यः ॥ ५१ ॥

ईकारे स्त्रियां कृतेऽकारो लोप्यो भवति। नदी। मही॥ स्त्रियामिति किम्? कुण्डे॥ कृत इति किम्? कुण्डेषा।

## स्वरो ह्रस्वो नपुंसके ॥ ५२ ॥

नपुंसके वर्त्तमानः स्वरान्तो ह्रस्वो भवति। सोमपम्। सेनानि। यवलु। अतिरि। अतिनु कुलम्॥ स्वरो ह्रस्व इति योगविभागाद् गौणप्रधानस्यान्तस्य स्त्रियामादादीनां चेति ह्रस्वः। चित्रगुः। अतिखट्वः। निष्कौशाम्बिः। अतिकरभोरुः॥

इति दौर्गसिंह्यां वृत्तौ नाम्नि चतुष्टये
कारकपादः समाप्तः॥

---

## नाम्नां समासो युक्तार्थः ॥ १ ॥

वस्तुवाचीनि नामानि॥ मिलितं युक्तमुच्यते॥ नाम्नां युक्तार्थः समाससंज्ञो भवति। ततोऽन्यद्वाक्यमिति स्फुटम्। संज्ञयैव वा विधिरन्वाख्यातः। स पुनरभिधानात् क्वचिद्विकल्पः क्वचिन्नित्यः क्वचिन्न स्यात्। तथा च वक्ष्यति॥

## तत्स्था लोप्या विभक्तयः ॥ २ ॥

तत्स्था युक्तार्थमात्रस्था विभक्तयो लोप्या भवन्ति। नीलोत्पलम्। राजपुरुषः। राजता। पुत्रीयति॥ क्वचिन्न लुप्यन्तेऽभिधानात्। कण्ठेकालः। उरसिलोमा। त्वचिसारः॥

## प्रकृतिश्च स्वरान्तस्य ॥ ३ ॥

स्वरान्तस्य लिङ्गस्य युक्तार्थस्य लुप्तासु विभक्तिषु प्रकृतिश्च भवति । सखा प्रियोऽस्येति सखिप्रियः ॥ सखायं प्राप्तः । सखिप्राप्तः ॥ पितरि साधुः । पितृसाधुः ॥ गां गतः । गोगतः ॥ चकारो लोपमपेक्ष्य । देवेन्द्रः । खट्वोढः । इति सन्धिः स्यादेव ॥

## व्यञ्जनान्तस्य यत्सुभोः ॥ ४ ॥

व्यञ्जनान्तस्य लिङ्गस्य युक्तार्थस्य लुप्तासु विभक्तिषु सुभोर्यदुक्तं तद्भवति । सुपि मुख्यं कार्यं नास्तीति सुभोर्युगपदुक्तं स्यात् । विद्वद्गमनम् । दिग्गतः । षडाकृतिः । ज्ञानभुदाश्रयः ॥ अतिदेशोऽयम् ॥

## पदे तुल्याधिकरणे विज्ञेयः कर्मधारयः ॥ ५ ॥

यत्र समासे द्वे पदे तुल्याधिकरणे भवतः स कर्मधारयो विज्ञेयः । नीलं च तदुत्पलं चेति नीलोत्पलम् ॥ क्वचिन्नित्यसमासः । कृष्णसर्पः । लोहितशालिः ॥ क्वचिदसमासः । दीर्घचारायणः । रामो जामदग्न्यः । व्यासः पाराशर्यः । अर्जुनः कार्त्तवीर्यः ॥ तत्रैकाधिकरणत्वात् । कृष्टसमीकृतः । छिन्नप्ररूढः । एकपुरुषः । सर्वान्नम् । जरद्धस्ती । पुराणधान्यम् । नवोदकम् । केवलान्नम् ॥ तथा पूर्वमुकाभसमी । मध्येयम् ॥ सङ्ख्यापूर्वपदेऽपि । सप्तर्षयः । पञ्चाम्राः ॥ तथा याज्ञिककितवः । एवं पापकुलालः । मनकनापितः ॥ क्वचिदुपमानभूतं विशेषणम् । शस्त्रीव श्यामा । शस्त्रीश्यामा ॥ क्वचिदुपमानभूतं विशेषणं परं स्यात् ।

पुरुषो व्याघ्र इव । पुरुषव्याघ्रः । एव पुरुषसिंहः ॥ तथा पूर्वपुरुषः । अपरपुरुषः । प्रथमपुरुषः । चरमपुरुषः । जघन्यपुरुषः । समानपुरुषः । मध्यपुरुषः । मध्यमपुरुषः । वीरपुरुषः । एवमश्रेणयः श्रेणयः कृता. । श्रेणीकृताः ॥ तथा कृताकृतम् । भुक्तापभुक्तम् । गतप्रत्यागतम् । यातानुयातम् । अशितानशितम् । क्लिष्टाक्लिशितम् । क्रयाक्रयिका । फलाफलिका । पुटापुटिका । मानोन्मानिका ॥ तथा सत्पुरुषः । महापुरुषः ॥ परमपुरुषः । उत्तमपुरुषः । पुरुषोत्तम इति विशेषणं वा परं स्यात् । उत्कृष्टपुरुष. ॥ तथा गोवृन्दारकः । गोनागः । अश्वकुञ्जरः ॥ कतरकठः । कतमकठः ॥ किं राजा ॥ इभ्यपोटा । इभ्ययुवतिः । अग्निस्तोक इति विशेषणं वा परं स्यात् ॥ एवं दधिकतिपयानि । गोगृष्टिः । गोधेनुः । गोवशा । गोवेहत् । गोवष्कयणी । कठप्रवक्ता । कठश्रोत्रियः । कठाध्यापकः । कठधूर्त्तः ॥ गोप्रकाण्डम् । अश्वमतल्लिका ॥ युवखलतिः । युवखलती । युवपलितः । युवपलिता । युववलिनः । युववलिना । युवजरन् । युवजरती ॥ भोज्योष्णम् । तुल्यश्वेतः । सदृशश्वेतः । शुक्लकृष्णः । शुक्लशुक्लः ॥ कुमारी च सा श्रवणा चेति कुमारश्रवणा । कुमारप्रव्रजितः । कुमारप्रव्रजिता । कुमारपण्डितः । कुमारपण्डिता ॥ गोगर्भिणी । अजगर्भिणी ॥ मयूर इव व्यंसकः । मयूरव्यंसकः । मयूरस्येव विगतावंसावस्येति विग्रहः । एव छात्रव्यंसकः ॥ कम्बोज इव मुण्डः । कम्बोजमुण्डः । उच्चं च तदवचं चेत्युच्चावचम् । एवमुच्चनीचम. । न किञ्चन । अकिञ्चनम् ।

नान्यथा किञ्चनास्तीत्यकिञ्चनम् ॥ पूर्वश्चासौ कायश्चेति पूर्वकायः । कायैकदेशे कायः । एवम् अपरकायः । अधरकायः । उत्तरकायः । मध्यकाय । मध्यमकायः । मध्याह्नः ॥ अर्धं च तत्पिप्पली चेत्यर्धपिप्पली । पिप्पल्यर्धमिति षष्ठीसमासोऽपि दृश्यते हि । वेदार्धं दक्षिणं मेरोः । शरार्धम् । चापार्धम । धूलिकार्धमिति । असमप्रविभागेऽपि । नदीदमर्धंजरतीयं नभ्यमिति ॥ एव द्वितीयभिक्षा । भिक्षाद्वितीयम् । तृतीयभिक्षा । भिक्षातृतीयम् । चतुर्थभिक्षा । भिक्षाचतुर्थम् । तुरीयभिक्षा । भिक्षातुरीयम । तुर्यभिक्षा । भिक्षातुर्यम ॥ मासजातः । संवत्सरजातः । इति बहुव्रीहिणा सिद्धम् ॥ न ब्राह्मणः । अब्राह्मणः ॥ कर्मधारयप्रदेशः । कर्मधारयसंज्ञे तु पुंवद्भावो विधीयते [का० २. ५.२०] इत्येवमादयः ॥

## संख्यापूर्वो द्विगुरिति ज्ञेयः ॥ ६ ॥

कर्मधारय इति सम्बन्धः । पञ्चसु कपालेषु संस्कृत ओदनः पञ्चकपाल ओदनः । पञ्च गावो धनमस्येति पञ्चगवधनम् । पञ्चानां पूलानां समाहारः पञ्चपूली । तद्धितार्थोत्तरपदसमाहारेषु चायम् ॥

## तत्पुरुषावुभौ ॥ ७ ॥

उभौ द्विगुकर्मधारयौ तत्पुरुषसंज्ञौ स्तः ॥ तत्पुरुषप्रदेशाः । नञ् तत्पुरुषे लोप्यः [का० २. ५. २२] इत्यधिकारे ॥ कुद इति कद्रार्थो बहुव्रीहौ न स्यात् ॥

**विभक्तयो द्वितीयाद्या नाम्ना परपदेन तु ।**
**समस्यन्ते समासो हि ज्ञेयस्तत्पुरुषः स च ॥८॥**

कष्टं श्रितः । कष्टश्रितः । एवं कान्तारातीतः । नरकपतितः । ग्रामगतः । तरङ्गात्यस्तः । सुखप्राप्तः । दुःखापन्नः । ग्रामगमी । ग्रामागामी । ओदनबुभुक्षुः । खट्वारूढो जाल्मः । अहरतिसृता मुहूर्ताः । अहःसंक्रान्ताः । रात्र्यारूढाः । मासप्रमितश्चन्द्रमाः । मुहूर्त्तसुखम् । सर्वरात्रकल्याणी ॥ क्वचिन्नास्त्येव । ओदनं भुक्तवान् ॥

तृतीया । गिरिणा काणः । गिरिकाणः । एवं धान्यार्थः । मासपूर्वः । पितृसदृशः । पितृसमः । मासोनः । माषविकलः । असिकलहः । वाङ्निपुणः । गुडमिश्रः । आचारश्लक्ष्णः । तथा राजहतः । नखनिर्भिन्नः । काकपेया नदी । बाष्पच्छेद्यानि तृणानि ॥ क्वचिन्न स्यात् । काकेन पातव्या ॥ क्वचित्स्यात् । कुपोपेन्यम् । घनधान्यम् । दध्नोपसिक्त ओदनः । दध्योदनः । गुडेन मिश्रा धानाः । गुडधानाः ॥

चतुर्थी । गोभ्यो हितम् । गोहितम् । एवं गोसुखम् । कुबेरबलिः । गोरक्षितः । यूपाय दारु । यूपदारु । दैवदेयं पुष्पम् । ब्राह्मणदेयं धनम् । वरप्रदेया कन्या । क्वचिन्न स्यात् । ब्राह्मणाय दातव्यम् । ब्राह्मणार्थः सूपः । ब्राह्मणार्था यवा । ब्राह्मणार्थं पयः । नित्यसमास एव सर्वलिङ्गता च ।

पञ्चमी । वृकाद्भयम् । वृकभयम् । वृकभीतः । वृकभीतिः । वृकभीः । ग्रामनिर्गतः । सुखापेतः । कल्पनापोढः । चक्रमुक्तः । मञ्चपतितः । तरङ्गापत्रस्तः ॥

षष्ठी । राज्ञः पुरुषः । राजपुरुषः । ग्राममठः । भिक्षाद्वितीयः । वर्त्तमानसामीप्यम् । चन्दनगन्धः । नदीघोषः । कन्यारूपम् । स्तनस्पर्शः । फलरसः ॥ ब्राह्मणस्य कर्त्तव्यम् । वृत्तिरपीष्यते । ब्राह्मणस्य कुर्वन् । ब्राह्मणस्य कुर्वाणः । वाक्यमेव । तथा फलानां तृप्तः । काकस्योच्चैर्गृहमिति सापेक्षत्वात् । पलाशशातनम् । मातृस्मरणम् । सुरेश्वरः । राजपूजित इत्यादिषु सम्बन्धषष्ठ्या समास एव ।

सप्तमी । अक्षेषु शौण्डः । अक्षशौण्डः । अक्षधूर्त्तः । अक्षकितवः । वनेऽन्तर्वसति । वनान्तर्वसति । तथा काम्पिल्यसिद्धः । छायाशुष्कः । कुम्भीपक्वः । चारकबन्धः । तीर्थध्वाङ्क्षः । तीर्थकाकः । तथा पूर्वाह्णगेयं साम । मासदेयमृणम् । पूर्वाह्णकृतम् । अपराह्णकृतम् । पूर्वरात्रकृतम् । अपररात्रकृतम् । एवमन्येऽपि ॥

वरपदेनेति किम् ? गतो ग्रामम् । कथं प्राप्तो जीविकाम् । प्राप्तजीविकः । एवम् आपन्नजीविकः ॥ अत्यादयः क्रान्ताद्यर्थे द्वितीयया । अतिक्रान्तः खट्वाम् । अतिखट्वः ॥ अवादयः क्रुष्टाद्यर्थे तृतीयया । अवक्रुष्टं कोकिलया । अवकोकिलं वनम् । एवम् अवमयूरम् ॥ पर्यादयो ग्लानाद्यर्थे चतुर्थ्या । परिग्लानोऽध्ययनाय । पर्यध्ययनः ॥ निरादयो गताद्यर्थे पञ्चम्या । निर्गतः कौशाम्ब्याः । निष्कौशाम्बिः ॥ सत्यम् । कृते समासे पूर्वनिपातोऽभिधा-

नात् । यथा दन्तानां राजा । राजदन्त इति । कृष्णाश्व इत्यादीनां कर्मधारयः ॥

**स्यातां यदि पदे द्वे तु यदि वा स्युर्बहून्यपि ।**
**तान्यन्यस्य पदस्यार्थे बहुव्रीहिः ॥ ६ ॥**

यत्र समास इति सम्बन्धः । आरूढो वानरोऽयं स आरूढवानरो वृक्षः । कृतः प्रणामो येन स कृतप्रणामो जनः । एवं दत्तभोजनोऽतिथिः । उच्छन्नजनपदो देशः । चित्रगुर्देवदत्तः । बहूदका नदी ॥ बहुपदेऽपि । मत्तबहुमातङ्गं वनम् । तथा उपगता दश एषाम् । उपदशाः । एवम् आसन्नदशाः । आसन्नदशाः ॥ अदूरदशाः । अधिकदशाः । ते पुनर्नवैकादश वा ॥ त्रिर्दश परिमाणमेषाम् । त्रिदशाः । दशशब्दः संख्याने वर्त्तते । परिमाणशब्दसान्निध्यात् । यथा पञ्च परिमाणमेषाम् । पञ्चकाः शकुनयः ॥ द्वौ वा त्रयो वा परिमाणमेषाम् । द्वित्राः ॥ भिन्नाधिकरणेऽपि । उरसिलोमा । कण्ठेकालः । उष्ट्रमुखः ॥ अन्यपदार्थे प्रथमान्तेऽपि । सह पुत्रेणागतः । सपुत्रकः । सह लोम्ना वर्त्तते । सलोमकः । विद्यमानलोमक इत्यर्थः । एवं सपक्षकः । सकण्टकः ॥ सहैव दशभिः पुत्रैर्भारं वहति गर्दभी । इत्यनभिधानात् ॥ केशेषु च केशेषु च गृहीत्वा युद्धं कृतम् । केशाकेशि । दण्डैश्च दण्डैश्च प्रहृत्य युद्धं कृतम् । दण्डादण्डि ॥ बहुव्रीहिप्रदेशाः । बहुव्रीहौ [ का° २. १. २५ ] इत्येवमादयः ॥

**विदिक् तथा ॥ १० ॥**

तथा विदिगभिधेयो बहुव्रीहिर्ज्ञेयः । अर्थादिग्वाचकयो शब्दयो समासे सति । दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा दक्षिणपूर्वा दिक् ॥

## द्वन्द्वः समुच्चयो नाम्नोर्बहूनां वापि यो भवेत् ॥ ११ ॥

यत्र समासे द्वयोर्नाम्नोर्बहूनां वापि नाम्नां च समुच्चय स द्वन्द्वो भवेत् । देवदत्तयज्ञदत्तौ । धवखदिरपलाशाः । वाग्दृषदम् । पीठच्छत्रोपानहम् ॥ इतरेतरयोग समाहारश्च समुच्चयस्यैव भेद इति ॥

## अल्पस्वरतरं तत्र पूर्वम् ॥ १२ ॥

तत्र द्वन्द्वे समासे यदल्पस्वरतरं तत्पूर्वं निपतति । प्लक्षन्यग्रोधम् । धवाश्वकर्णम् ॥ तरपद्वय द्विपदनियमार्थम् । तेन शङ्खदुन्दुभिवीणाः ॥ व्यभिचरति च । कुक्कुटमयूरौ ? । तण्डुलकिण्वे । चित्ररथबाह्लीकौ । इत्येवमादय ॥

## यच्चार्चितं द्वयोः ॥ १३ ॥

तत्र द्वन्द्वे समासे द्वयोर्यदर्चितं तत्पूर्वं निपतति । देवदैत्यौ । वासुदेवार्जुनौ ॥ व्यभिचरति च । नरनारायणौ । उमामहेश्वरौ । काकमयूरौ ॥

## पूर्वं वाच्यं भवेद्यस्य सोऽव्ययीभाव इष्यते ॥ १४ ॥

समासस्येति सम्बन्धः । कारके स्त्र्यधिकृत्य कथा प्रवृत्ता । अधिस्त्रि । समीपे । उपकुम्भम् ॥ ऋद्धौ । सुमद्रम् ॥ अभाव । निर्मक्षिकम् ॥ तथा गवदिकानाम्

इ विगमः । दुर्गवदिकम् ॥ शीतानामतिक्रमः । अति-शीतम् । अतितैस्रकम् । तैस्रकाणामाच्छादनानां न सम्प्रत्युपभोगकाल ॥ शब्दप्रादुर्भावेऽपि । इतिपाणिनि । तत्पाणिनि ॥ पश्चादर्थे । अनुरथम् ॥ यथार्थे । अनुरूपम् । रूपस्य योग्यत्वम् । अर्थमर्थं प्रति । प्रत्यर्थम् । यथाशक्ति । अनुज्येष्ठम् । प्रत्ययनतिक्रमेण ज्येष्ठानुक्रमेणेत्यर्थः ॥ साकल्ये । किञ्चाः सतृणम् । सकिञ्चि ॥ साकल्ये । सतृणमभ्यवहरति । साग्न्यधीते । एवमन्येऽपि ॥ अव्ययीभावप्रदेशाः । अव्ययीभावादकारान्तादिभक्तीनाममपञ्चम्याः [का० २ ४. १] इत्येवमादय ॥

## स नपुंसकलिङ्गं स्यात् ॥ १५ ॥

सोऽव्ययीभावसमासो नपुंसकलिङ्गं स्यात् । तथा चोदाहृतमुदाह्रियते च । समत्व भूमेः । समभूमि । समं पदाति । तथा सुषमम् । विषमम् । निःषमम् । दुःषमम् । अपरत्वम् । शोभनत्व समस्येत्यादि वाक्यम् ॥ तथा प्रमृगम् । प्ररथम् । प्रदक्षिणम् ॥ अव्ययपूर्वपदत्वादलिङ्गतेव प्राप्नोति वचनम् ॥

## द्वन्द्वैकत्वम् ॥ १६ ॥

द्वन्द्वस्यैकत्वं नपुंसकलिङ्गं स्यात् । प्रत्यग्रात्यानुजाग्लायम् । उद्गात्कठकौथुमम् । अर्काश्वमेधम् । पटककमकम् । आरानशत्रि । गङ्गाशोणम् । कुरुकुरुक्षेत्रम् ॥ मथुरापाटलिपुत्रम् । अहिनकुलम् । तक्षायस्कारम् ।

पाणिपादम्। मार्दङ्गिकपाणविकम्। हस्त्यश्वम्। यूकालिक्षम्। बदरामलकम्। प्लक्षन्यग्रोधम्। धवाश्वकर्णम्। कुशकाशम्। तिलमाषम्। रथपत्तम्। हंसचक्रवाकम्। दधिघृतम्। सुखदुःखम्।

अनुवादे चरणानां स्थेणद्यतनीप्रयोगविषयाणाम्
अनपुंसकलिङ्गानां यजुःक्रतूनां च निकटपाठानाम्।
अप्राणिजातिविसदृशलिङ्गनदीदेशनगराणाम्
शाश्वतिकवैरिणाम् अथ चारूणां प्राणितूर्याङ्गानाम् ॥ १ ॥
सेनाङ्गानां च बहुत्वे भवति क्षुद्रजन्तुकफलानाम्
तृणवृक्षधान्यमृगशकुनिविशेषाणां विभाषैव।
व्यञ्जनविशेषकाणां साद्रव्याणां विरोधिनां च सततं
तेषां च समाहारो दधिपयसां खलु भवेदन्यः ॥ २ ॥
एकत्वमिति किम्? हस्त्यश्वौ। दधिघृते ॥

## तथा द्विगोः ॥ १७ ॥

तथा द्विगोरप्येकत्वं नपुंसकलिङ्गं स्यात्। पञ्चगवम्। चतुष्पथम्। शोभनमिति विशेषणात्॥ एकत्वमिति किम्? पञ्चकपाल ओदनः। अपात्रादिरदन्तोऽप्यस्यादन्तो वा द्विगुस्तथा। अनन्तश्च समाहारो नद्यादिषु निगद्यते॥

## पुंवद्भाषितपुंस्कानूङ्पूरण्यादिषु स्त्रियां तुल्याधिकरणे ॥ १८ ॥

स्त्रियां वर्त्तमाने भाषितपुंस्कोऽनूङ् पुंवद्भवति।

स्त्रियां वर्त्तमाने तुल्याधिकरणे पूरण्यादिवर्जिते पदे परतः। शोभनभार्यः। दीर्घजङ्घः॥ अर्थात्पूर्वस्य परस्य च स्त्रियामिति विशेषणात्। ग्रामणि कुल दृष्टिरस्येति ग्रामणिदृष्टिः। कल्याणी प्रधानमेषाम्। कल्याणीप्रधानाः॥ भाषितपुंस्कोऽर्थ इति किम्? द्रोणीभार्यः॥ अनूङिति किम्। ब्रह्मबन्धूभार्यः॥ अपूरण्यादिष्विति किम्? कल्याणीपञ्चमा रात्रयः॥ मुख्यपूरणीग्रहणात्। कल्याणपञ्चमीकः पक्षः॥ आदिग्रहणात्। कल्याणीप्रियः॥ प्रिया। मनोज्ञा। सुभगा। दुर्भगा। भक्तिः। सचिवा। स्वा। कान्ता। समा। वाल्या। दुहिता। वामना॥

## संज्ञापूरणीकोपधास्तु न॥ १९॥

इह पुंवद्भावं वर्त्तते। संज्ञापूरणीकोपधास्तु पुंवद्रूपा न भवन्ति। दत्ताभार्यः। गुप्ताभार्यः। पञ्चमीभार्यः। पञ्चमीयते। पञ्चमीमानिनी। पाचिकाभार्यः। मद्रिकाभार्यः॥ कथं पाकभार्यः। भेकभार्यः। शुष्कभार्य इत्यभिधानात्॥ वृद्धिनिमित्तस्यारक्तविकारस्य न च तद्धितस्यापीदन्तस्य स्वाङ्गस्य न त्वमानिनि। तथा जातेः॥

## कर्मधारयसंज्ञे तु पुंवद्भावो विधीयते॥ २०॥

भाषितपुंस्कानूङ्प्रतिषेधबाधकोऽयम्। कठी च सा भार्येति कठभार्या। एवं दत्तभार्या। पञ्चमभार्या। पाचकभार्या॥ भाषितपुंस्क इति किम्? खट्वावृन्दारिका॥ अनूङिति किम्। ब्रह्मबन्धूदारिका॥

आकारो महतः कार्य्यस्तुल्याधिकरणे पदे ॥२१॥

महादेवः। महावस्त्राः। अन्तरङ्गत्वाबलोपे सत्याकारः। चन्तस्य न भवति। महद्भूतश्चन्द्रमाः॥ योगविभागात्। महत्याघासः। महाघासः। एवं महाकारः। महाविशिष्टः॥

नञ्स्य तत्पुरुषे लोप्यः॥ २२ ॥

नस्य सम्बन्धिनि तत्पुरुषे नस्य सम्बन्धी नकारो लोप्यो भवति। द्विनकारो वा पाठः॥ न सवर्णः। असवर्णः। न विद्यते घोषो ध्वनिर्येषां तेऽघोषाः। ब्राह्मणस्याभावः। अब्राह्मणम्॥ तत्पुरुष इत्युपलक्षणम्॥

स्वरेऽक्षरविपर्य्ययः॥ २३ ॥

नस्य तत्पुरुषे स्वरेऽक्षरविपर्य्ययो भवति। अनजः। अनजम्। अनजकः॥

कोः कत्॥ २४ ॥

कुशब्दस्य तत्पुरुषे कद्भवति। कुत्सितोऽश्वः। कदश्वः। एवं कदन्नं॥ तत्पुरुष इति किम्? कूष्ट्रो देशः॥

का त्वीषदर्थेऽक्षे॥ २५ ॥

कुशब्दस्य तत्पुरुषे ईषदर्थे वर्तमानस्य कादेशो भवति। अक्षशब्दे च परतः। ईषल्लवणम्। कालवणम्। काक्षम्। काक्षेण वीक्षते॥ ईषदर्थे स्वरे तु परत्वात्कादेश एव॥

## पुरुषे तु विभाषया ॥ २६ ॥

कुशब्दस्य तत्पुरुषे पुरुषशब्दे च परे विभाषया कादेशो भवति। कापुरुषः। कुपुरुषः। इयमप्राप्तविभाषैव ॥ ईषदुष्णम्। कोष्णं कवोष्णं कदुष्णमिति वक्तव्यम्।

## याकारौ स्त्रीकृतौ ह्रस्वौ क्वचित् ॥ २७ ॥

ईय आकारस्य याकारौ। याकारौ स्त्रीकृतौ ह्रस्वौ भवतः समासे क्वचिल्लक्ष्यानुरोधात्। रेवतिमित्रः। रोहिणिमित्रः। भरणिमित्रः ॥ इष्टकचितम। इषीकतूलम्। मालभारिणी कन्या। एवमन्येऽपि ॥

## ह्रस्वस्य दीर्घता ॥ २८ ॥

ह्रस्वस्य दीर्घता भवति समासे क्वचिल्लक्ष्यानुरोधात्। दात्राकर्णः। द्विविधाकर्णः। द्विगुणाकर्णः। दाङ्गुलाकर्णः। चिह्नस्यैव कर्णे दीर्घः ॥ क्वचिन्न स्यात्। पिष्टकर्णः। षष्टकर्णः ॥ नहिवृतिवृषिव्यधिरुचिसहितनिषु क्विबन्तेषु प्रादिकारकाणामेव दीर्घः। उपानत्। उपावृत्। प्रावृट्। मर्मावित्। नीरुक्। ऋतीषट्। परीतत्। एवमन्येऽपि ॥

## अनव्ययविसृष्टस्तु सकारं कपवर्गयोः ॥ २९ ॥

अनव्ययविसृष्टस्तु कपवर्गयोः परयोः सकारमापद्यते। समासे क्वचिल्लक्ष्यानुरोधात्। अयस्पात्रम्। अयस्कम्पम्। अयस्काम्यति। अयस्कम्। पाशकल्पकाम्य-

केषु दृश्यते ॥ रप्रकृतेः काम्ये न भवति । गीःकाम्यति । धूःकाम्यति ॥ अयस्कारः । अयस्कामः । अयस्कांसः । अयस्कुम्भः ॥

कृञ्कामिकंसकुम्भेषु समासेऽयमतःपरः ।
अनुत्तरे कुशाकर्णीभास्करादिषु लक्ष्यतः ॥

नवा निर्दिष्टमनित्यम् । नमस्कर्तुम् । पुरस्कर्तुमित्यादयः ।

इति दौर्गसिंह्यां वृत्तौ नाम्नि चतुष्टये
समासपादः समाप्तः ॥

---

## वाणपत्ये ॥ १ ॥

षष्ठ्यन्तान्नाम्नोऽपत्येऽभिधेयेऽण्प्रत्ययो भवति वा । उपगोरपत्यम् । औपगवः । पाण्डवः । आश्वपतः । शैवः । पौष्ठः ॥ अपत्यसामान्यविवक्षायामाद्यप्रकृतेरेव । पौत्रादिस्तु प्रथमस्य एवापत्ये स्त्रीवर्जितेऽणादयोऽभिधीयन्ते । वाग्रहणाद् उपगोरपत्यम् । उपग्वपत्यं च स्यात् ॥

## ण्य गर्गादेः ॥ २ ॥

गर्गादेर्यणादपत्येऽभिधेये ण्यप्रत्ययो भवति । गर्गस्यापत्यम् । गार्ग्यः । एवं वात्स्यः ॥ गोत्रादिभूतादेव पौत्रादावेवापत्येऽभिधानात् । अन्यत्र गार्गिः ॥ अनन्तरोऽपि । रामो जामदग्न्यः । व्यासः । पाराशर्यः । अर्जुनः । का-

त्सैवीर्य्यः॥ जामदग्न्यः। पाराशर इति च॥ गर्गादि-राकृतिगणोऽयम्।

## कुञ्जादेरायनण् स्मृतः॥ ३॥

कुञ्जादेर्गणाद्गोत्रादिभूतात्गोत्रादावेवापत्येऽभिधेय-आयनण्प्रत्ययो भवति। एष स्मृतस्तदन्ताञ्ञ्यडाडे-रबहुत्वेऽस्त्रियाम्। तदेतत् स्मृतग्रहणस्येष्टविषयत्वात्। कौञ्जायन्यः। कौञ्जायन्यौ। ब्राध्नायन्यः। ब्राध्नायन्यौ॥ स्त्रियां तु कौञ्जायनी॥ बहुत्वे तु कौञ्जायनाः॥ नडा-देस्तु। नाडायनः। चारायणः। मौञ्जायनः॥ कुञ्जो नाम कश्चित्। तस्यापत्यं कौञ्जिः। प्रथमापत्य च कौञ्जिः॥ कुञ्जादिराकृतिगणोऽयम्॥

## स्त्र्यत्र्यादेरेयण्॥ ४॥

स्त्रियां विहितत्वात्स्त्री। स्त्रियामादादिभ्योऽत्र्या-देश्चापत्येऽभिधेय एयण् भवति। वैनतेयः। सौपर्णेयः। कामण्डलेयः। शौवलेयः॥ आत्रेयः। शौचेयः॥ आदि-ग्रहणात्। शौभ्रेयः। वैष्टपुरेयः॥ अतिरयमप्रत्ययेऽदन्त-द्विस्वरोपलक्षणम्। तेन मरीचेरपत्यं मारीचः। दाचेरपत्यं दाचायणः॥ अत्र्यादिराकृतिगणः॥

## इणतः॥ ५॥

अकारान्तान्नाम्नोऽपत्येऽभिधेय इण् भवति। दक्ष-स्यापत्यं दाक्षिः। एवं प्लाक्षिः। अस्यापत्यमिः॥ अत इति किम्? कैलालपः॥ गतसर्वकाकयुक्तहदराजपुत्र-

स्पृश्यते । चक्षुषा गृह्यते । चाक्षुषं रूपम् । एवं श्रावणः शब्दः ॥ दृषदि पिष्टाः । दार्षदाः सक्तवः ॥ उदूखले क्षुण्णाः । औदूखला मुद्गाः ॥ अश्वैरुह्यते । आश्वो रथः ॥ चतुर्भिरुह्यते । चातुरं शकटम् ॥ चतुर्दश्यां दृश्यते । रक्षः चातुर्दशम् ॥ तत्र भवस्तत्र जातस्तत आगत इत्यादि-विग्रहः कार्यः । आकृतिगणोऽयम् ॥

**तेन दीव्यति संसृष्टं तरतीकण् चरत्यपि ।**
**पण्याच्छिल्पान्नियोगाच्च क्रीतादेरायुधादपि॥८॥**

तेन दीव्यति । तेन संसृष्टम् । तेन तरति । तेन चरत्यपि । अभेदोपचारवृत्तेः । पण्याच्छिल्पान्नियोगाच्च यथासम्भवं क्रीतादेरायुधादप्यभेदोपचारवृत्तेरिकण्प्रत्ययो भवति । अक्षैर्दीव्यति । आक्षिकः ॥ दध्ना संसृष्टम् । दाधिकम् । एवं मारीचिकम् । गोपुच्छेन तरति । गौपुच्छिकः । एवं काण्डप्लविको नद्याः । आश्वमेधिको ब्रह्महत्यायाः ॥ शकटेन चरति । शाकटिकः । एवं घाण्टिकः । शृङ्गवेरेण चरति । शार्ङ्गवेरिकः ॥ ताम्बूलपण्ययोगात् ताम्बूलिकः । मृदङ्गशिल्पयोगाद् मार्दङ्गिकः । एवं पाणविकः ॥ द्वारनियोगाद् दौवारिकः । एवं शौल्कशालिकः ॥ द्विशूर्पेण क्रीतः । द्विशौर्पिकः । एवं साहस्रिकः ॥ कार्षापणमर्हति । कार्षापणिकः ॥ तोमरायुधयोगात् तौमरिकः । एवं चाक्रिकः ॥ क्रीतादेरभेदमपेक्ष्य पञ्चमी क्रियाविशेषणं च स्पष्टार्थः । कुद्दालेन खनति । कौद्दालिकः ॥ ओजःसहोऽम्भसा वर्तते । औज-

मिकः शूरः। साहसिकश्चौरः। आम्भसिको मत्स्य इत्यादि॥

## नावस्तार्थ्ये विषाद्वध्ये तुलया सम्मितेऽपि च। तत्र साधौ यः॥ ९॥

नावस्तृतीयान्तात् तार्येऽर्थे। विषात्तृतीयान्ताद् वध्येऽर्थे। तुलयेति तृतीयान्तात् सम्मितेऽर्थे। तत्रेति सप्तम्यन्तात् साधावर्थे यप्रत्ययो भवति। नावा तार्यं नाव्यम्। विषेण वध्यो विष्यः। तुलया संमितं तुल्यम्। कर्मणि साधुः कर्मण्यः॥ अपि चेति वचनाद् गिरिणा तुल्यो हस्ती गिरितुल्यः॥ तुल्यः सदृश इत्यन्ये। कुशलो योग्यो हितश्च साधुरुच्यते॥

## ईयस्तु हिते॥ १०॥

हितेऽर्थे ईयप्रत्ययो भवति। वत्सेभ्यो हितो वत्सीयो गोधुक्। एवम् अश्वीयः॥ योगविभागात् स्वराणामाद्यावाद् द्विमत्. शेषेऽर्थे ईयः स्यात्। शालायां भवो जातो वा शालीयः। ऐतिकायनस्येमे छात्राः। ऐतिकायनीयाः। एवम् औपगवीयाः। एवमन्येऽपि॥

## यदुगवादितः॥ ११॥

उवर्णान्ताद्गवादिभ्यश्च हितेऽर्थे यप्रत्ययो भवति। शकवाकुभ्यो हितं पयः शकवाकव्यम्। वधूभ्यो हितो देशो वधव्यः। गोभ्यो हितं वनं गव्यम्। एवं हविष्यास्तण्डुलाः॥ सुगव्यम्। अतिगव्यमिति तदन्तविधि-

रिष्टः॥ गो। हविस्। अष्टका। बर्हिस्। मेधा। स्रुच इत्यादयोऽप्यनुसर्त्तव्याः॥ विकृतिवाचिनः शब्दात्प्रकृतावभिधेयायां यथोक्तं ह्वितेऽर्थे प्रत्ययो भन्तव्यः। अङ्गारीयाणि काष्ठानि। पिचव्यः कार्पासः॥

## उपमाने वतिः॥ १२॥

उपमितिरुपमानम्। उपमानेऽर्थे वतिप्रत्ययो भवति। राजेव वर्त्तते राजवत्॥ ब्राह्मणस्येव हस्तिरस्येति ब्राह्मणवत्॥ मथुरायामिव पाटलिपुत्रे प्रासादः। मथुरावत्॥ राज्ञेव व्यवहृतमनेन। राजवत्॥ देवमिव भवन्तं पश्यामि। देववत्॥ पर्वतादिवासनादवरोहति। पर्वतवत्॥ ब्राह्मणायेव देवदत्ताय धनं ददाति। ब्राह्मणवत्॥ अत्रापि तदर्हमिति परैरेष्टव्यमेव॥ गुणसाम्येऽपि देवदत्त इव स्थूलो देवदत्तवत्॥ गुणहीनादपि। अन्धवत्। जडवत्॥ द्रव्यसाम्येऽपि। देवदत्त इव गोमान्। देवदत्तवत्। सद्भावात् क्रियासाम्यमस्तीति सर्वत्र भवितव्यमेव॥

## तत्वौ भावे॥ १३॥

शब्दस्य प्रवृत्तिनिमित्तं भावः। भावेऽभिधेये तत्वौ भवतः। शुक्लस्य पटस्य भावः। शुक्लता। शुक्लत्वमिति शुक्लगुणस्य भावः। शुक्लस्य गुणस्य भावः॥ शुक्लता। शुक्लत्वमिति शुक्लगुणजातिः॥ गोता। गोत्वमिति गोजातिः। एवं पाचकत्वम्। दण्डित्वम्। विषाणित्वम्। राजपुरुषत्वमिति क्रियादिसम्बन्धित्वम्॥ देवदत्तत्वम्। च-

न्द्रत्वम्। सूर्य्यत्वमित्यवस्थाभेदात्॥ आकाशत्वमिति प्रदेशभेदात्। अभावत्वमिति सम्बन्धिभेदात्। नानित्यस्य भावो नानात्वम्॥

## यण् च प्रकीर्त्तितः॥ १४॥

भावेऽभिधेये यण् च प्रकीर्त्तित। चकारात् तत्वौ च। जडस्य भावो जाड्यम्। जडता। जडत्वम्॥ ब्राह्मणस्य भावो ब्राह्मण्यम्। ब्राह्मणता। ब्राह्मणत्वम्॥ एवं माणव्यम्। वाडव्यम्॥ प्रकीर्त्तितग्रहणं लक्ष्यानुरोधार्थम्। तेन गुणवचनब्राह्मणादिभ्योऽन्येभ्योऽपि क्रियायामपि दृश्यते। जडस्य कर्म्म जाड्यम्। ब्राह्मणस्य कर्म ब्राह्मण्यम्॥

## तदस्यास्तीति मन्त्वन्तीन्॥ १५॥

तदिति प्रथमान्तात्। अस्यास्तीत्यस्मिन्नर्थे मन्तु। वन्तु॥ विन्। इन्। इत्येते प्रत्यया भवन्ति। गावो विद्यन्तेऽस्येति गोमान्। एवम् आयुष्मान्। लक्ष्मीवान्। किवान्। विद्युत्वान्। यशस्वान्। भास्वान्। कर्म्मवान्। छत्रवान्। मालावान्। तेजस्वी। पयस्वी। दण्डी। मायी। मायावी॥ लिङ्गन्तो विवक्षार्थः॥

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
संसर्गेऽस्ति विवक्षाया मन्त्वादयो भवन्त्यमी॥ १॥
तथा मोपधमान्ताच्च धुडन्तादृगिडन्ततः।
अवर्णोपधतश्चापि वन्तुरवर्णतस्तथा॥ २॥
मायामेधास्रजाभ्यश्च व्रीह्यादिभ्यस्तु रूपता।
यथा व्रीहीति शालीति ह्यनेकस्वरादृतः॥

मायामेधास्रजो विन् स्याद्दाधिकाराद्विभाषया।
विहिताः सर्व एवैते शेषेभ्यो गन्तुरिष्यते ॥ ४ ॥
एन्तनिन्दितरोगेभ्यः प्राणिस्थेभ्य इनेव हि।
कटकवलयी कुष्ठी स्यात्काकतालुकी यथा ॥ ५ ॥
स्यात्स्वाङ्गात्तु यथामासं स्तनकेशवती यथा।
कः स्वार्थे णित्यमेवैषां वातोऽस्यास्तीति वातकी ॥ ६ ॥
अतीसारकयोः इक् स्यात् पिशाचकी तथा स्मृतः।
कश्मलसोन्मत्तत्वे पिशाचशब्दोऽभिधीयते ॥ ७ ॥
वयसि गम्यमाने च पूरणान्तादिनेव हि।
पञ्च दिनानि मासा वा पञ्चमी बालको यथा ॥ ८ ॥
सुखादिभ्य इनेव स्याद् बाहुरूभ्यां बलादपि।
सुखी दुःखी अलीकी च करुणी कृपणी हली।
तृप्री कृच्छ्री प्रतीपो च सोढास्रसौत्युदाहृतम् ॥ ९ ॥
बाहुबलूरुबली च सर्वादेर्नित्यमिन्तथा।
विज्ञेयं सर्वबीजीति सर्वकेशीत्युदाहृतम् ॥ १० ॥
स्याद्धर्मशीलवर्णान्तादिन्नेवेति विवक्षया।
ब्रह्मधर्मी सुशीली च ब्रह्मवर्णीत्युदाहृतम् ॥ ११ ॥
जातौ तु हस्तदन्ताभ्यां कराच्चेव इनेव हि।
हस्ती दन्ती करी ज्ञेयो वर्णादिन् ब्रह्मचारिणि ॥१२॥
स्युर्ब्रह्मचरणादेतौर्वर्णिनो ब्राह्मणास्त्रयः।
ब्रह्मचर्यं विनापि स्युः सभयाद्ब्राह्मणा इति ॥ १३ ॥
पुष्करोत्पलपद्मेभ्यो नडबिसतमालतः।
कैपित्थकुमुदाभ्यां च मृणालात्कर्दमात्तथा ॥ १४ ॥
शालूकवारीपेभ्यश्च हिरण्याद्रूढदेशके।

विवक्षायामिन्नेवेति यथा पुष्करिणीति च ॥ १५ ॥
भवन्तमाक्षयद्भ्यः संज्ञायामिन्न चेष्यते ।
अप्राप्ति नियमार्थं च दामिनी सोमिनी यथा ॥ १६॥
इन्विषय इको वाच्यः प्रागुक्तान्नियमार्थतः ।
स्वार्थे कः स्यान्न वाच्योऽयं दण्डेव दण्डिको यथा ॥१७॥
सप्तमालेऽष्टकावीणामेखलावडवाशिखा- ।
बलाकाभ्यः पताकाया इन्विभाषा विधीयते ॥ १८ ॥
वा कर्मचर्मवर्मभ्यश्च लोमाहवलीद्दाम- ।
मूलदलकुलायामारोह प्रयाम सपथाम- ॥ १९ ॥
व्यायामावरोहाणाम् ॥
इन्नन्तानां सदैतेषां स्वार्थे को नेष्यते बुधैः ॥ २० ॥
एवमन्येऽपि ॥

## संख्यायाः पूरणे डमौ ॥ १६ ॥

संख्यायाः पूरणेऽर्थे डमौ भवतः । व्यवस्थितवाधिकाराद्वा संख्यादिनान्तायाश्च मो भवति । शेषाच्च डः । एकादशानां पूरणः । एकादशः । एकादशी । एवं पञ्चमः । पञ्चमी । संख्यायाः पूरण इति किम् ? एकादशानां पञ्चानां वीटिकानां पूरणो घटः ॥

## द्वेस्तीयः ॥ १७ ॥

द्वेः पूरणेऽर्थे तीयो भवति । द्वयोः पूरणः । द्वितीयः ॥

## त्रेस्तृ च ॥ १८ ॥

त्रेः पूरणेऽर्थे तीयो भवति । तृ आदेशश्च । त्रयाणां पूरणः । तृतीयः ॥

अन्तस्थो ङे र्षोः ॥१९॥

रषोरन्तस्थो भवति। ङि परे। चतुर्णां पूरणः। चतुर्थः। एवं षष्ठः॥ आगमत्वादिसर्गो डत्वं च न स्यात्॥

कतिपयात्कतेः ॥ २० ॥

कतिपयात्कतेश्च पूरणेऽर्थे थो भवति। कतिपयथः। कतिथः॥

विंशत्यादेस्तमट् ॥ २१ ॥

विंशत्यादेः पूरणेऽर्थे तमङ् भवति। विंशतेः पूरणः। विंशतितमः। विंशतितमी। त्रिंशत्तमः। त्रिंशत्तमी॥ उत्तरत्र नित्यग्रहणाद्विकल्पो लभ्यते। विंशः। त्रिंशः।

नित्यं शतादेः ॥ २२ ॥

शतादेः पूरणेऽर्थे नित्यं तमङ् भवति। एकशततमः। एकसहस्रतमः। एककोटितमः॥

षष्ठ्यादेरतत्परात् ॥ २३ ॥

तस्याः परस्तत्परः। संख्यायाः पर इत्यर्थः। षष्ठ्यादेरसंख्यापरान्नित्यं तमङ् भवति पूरणेऽर्थे। षष्टितमः। सप्ततितमः। अशीतितमः। नवतितमः॥ अतत्परादिति किम्? एकषष्टः। एकसप्ततः॥

विभक्तिसंज्ञा विज्ञेया वक्ष्यन्तेऽतःपरं तु ये।
अद्यादेः सर्वनाम्नस्ते बहोश्चैव पराः कृताः॥२४॥

श्रुतत्वात्सर्वनामकार्यं प्रत्येव विभक्तिसंज्ञा । तेन यदा । कदेति घोषवति न दीर्घः ॥ बहुशब्दोऽत्र संख्या वचनः सर्वनाम साहचर्यात् ॥

## तत्रेदमिः ॥ २५ ॥

तेषु विभक्तिसञ्ज्ञकेष्विदमिकारो भवति । इतः । इह । इदानीम् । अधुना ॥

## रथोरेतेत् ॥ २६ ॥

रथोः परत इदम् एत । एत् । इत्येतौ प्राप्नोति यथा अथ्यम् । एतर्हि । इत्थम् ॥

## तेषु त्वेतदकारताम् ॥ २७ ॥

तेषु तकारादिष्वेतदकारतां प्राप्नोति । अतः । अत्र ॥ तकारादिष्विति किम् ? एतथा ॥

## पञ्चम्यास्तस् ॥ २८ ॥

सर्वनाम्नोऽद्व्यादेर्बहोश्चैव पञ्चम्यन्तात् तस्प्रत्ययो भवति वा । सर्वस्मात् सर्वतः । तस्मात् ततः । बहुभ्यो बहुतः ॥ अद्व्यादेरिति किम् ? द्वाभ्यां भवतः ॥ उभया-दितः प्रयोगतश्चेति ज्ञापकादसर्वनाम्नोऽप्यवधिमात्रे तस् वक्तव्यः ग्रामात् । ग्रामतः ॥ हायरुहोरवधौ न भवति । युधतोयते । सार्थहीनः । पर्वतादवरोहति ।

## त्र सप्तम्याः ॥ २९ ॥

सर्वनाम्नोऽद्व्यादेर् बहोश्चैव सप्तम्यन्तात् त्रप्रत्ययो

भवति वा । सर्वस्मिन् सर्वत्र । बहुषु बहुत्र ॥ अद्व्यादे-रिति किम् ? द्वयोः । त्वयि । मयि ॥ आद्यादिभ्यस् तस वक्तव्यः । आदौ । आदितः । मध्ये । मध्यतः । अन्ते । अन्ततः । पृष्ठे । पृष्ठतः । मुखे । मुखतः । पार्श्वे ॥ पार्श्वतः । आकृतिगणोऽयम् ॥

**इदमो हः ॥ ३० ॥**

इदम सप्तम्यन्ताद् हो भवति वा । अस्मिन् । इह ॥

**किमः ॥ ३१ ॥**

किमः सप्तम्यन्ताद् हो भवति वा । कस्मिन् । कुह ॥ छन्दसीवेत्यन्ये ॥

**अत् वा च ॥ ३२ ॥**

किम सप्तम्यन्तादद् भवति । क्वादेशश्च । कस्मिन् । क्व ॥

**तह्वोः कुः ॥ ३३ ॥**

तकारहकारयोः परयोः किं कुर्भवति । कुतः । कुह ॥

**काले किंसर्वयदेकान्येभ्य एव दा ॥ ३४ ॥**

एभ्यः काले वर्त्तमानेभ्यः सप्तम्यन्तेभ्यो दाप्रत्ययो भवति । कस्मिन काले । कदा । एव सर्वदा । यदा । एकदा । अन्यदा ॥ काल इति किम् ? सर्वत्र देशे ।

**इदमो र्ह्यधुना दानीम् ॥ ३५ ॥**

काले वर्त्तमानादिदम सप्तम्यन्ताद् र्हि । अधुना ।

दानीम् । इत्येते प्रत्यया भवन्ति । अस्मिन् काले । एतर्हि । अधुना । इदानीम् ॥

## दादानीमौ तदः स्मृतौ ॥ ३६ ॥

काले वर्त्तमानात्तदः सप्तम्यन्ताद् दादानीमौ प्रत्ययौ स्मृतौ । तस्मिन् काले । तदा । तदानीम् ॥

## सद्यआद्या निपात्यन्ते ॥ ३७ ॥

समानेऽहनि । सद्यः । समानस्य सभावो द्यश्च परविधि ॥ परस्मिन्नहनि परेद्यवि । परादेरेद्यवि ॥ अस्मिन्नहनि । अद्य । इदमोऽद्भावो द्य च परविधिः ॥ परुत् । परारि । पूर्वपूर्वतरयोः पर उदारौ च । अस्मिन् संवत्सरे । ऐषमः । इदमः । सम सिण् ॥ पूर्वस्मिन्नहनि । पूर्वेद्युः । पूर्वादेरेद्युस् । एवमपरेद्युः । अधरेद्युः । उत्तरेद्युः । अन्येद्युः । अन्यतरेद्युः । इतरेद्युः । उभयेद्युः । उभयाद् द्युश्च ॥ किमन्ययत्तद्भ्योऽनद्यतनवृत्तिभ्यो र्हिर्वा । कस्मिन् काले । कर्हि । कदा । अन्यर्हि । अन्यदा । यर्हि । यदा । तर्हि । तदा । अद्यतनेऽपि ॥ एवं पुरस्तादादयोऽप्यनुसर्त्तव्याः ॥

## प्रकारवचने तु था ॥ ३८ ॥

सर्वनाम्नोऽद्वादेः प्रकारवचने तु थाप्रत्ययो भवति । सामान्यस्य भेदकः प्रकारः । सर्वेण प्रकारेण । सर्वथा । एवं यथा । तथा ॥ व्याख्यानबलेन सर्वविभक्तिभ्यो भेदः ॥ था इति बहुवचनं था । तेन सङ्ख्यायाः प्रकारे धा ।

एकधा । द्विधा । त्रिधा । चतुर्धा । पञ्चधा । सप्तधा ॥
द्वित्रिभ्यां धमुण् एधा च । द्वैधम् । द्वेधा । त्रैधम् । त्रेधा॥
एकाद्ध्यमुण् वा । ऐकध्यम् । एकधा ॥

## इदंकिम्भ्यां थमुः कार्यः ॥ ३९ ॥

इदम् किम्भ्यां प्रकारवचने थमुः कार्यः । अनेन प्रकारेण । इत्थम् ॥ केन प्रकारेण । कथम् ॥

## आख्याताच्च तमादयः ॥ ४० ॥

नाम्न आख्याताच्च तमादयः प्रत्यया निपात्यन्ते । आख्यातं क्रियाप्रधानम् । आढ्यतरः । आढ्यतमः । प्रकृष्ट आढ्य उच्यते निपातनस्येष्टविषयत्वात् । तथा पचतितराम् । पचतितमाम् । किन्तराम् । किन्तमाम् । पूर्वाह्णेतराम् । पूर्वाह्णेतमाम् । उच्चैस्तराम् । उच्चैस्तमाम॥ आख्यातकिमेकारान्ताव्ययेभ्यः क्रियागुणप्रकर्षवृत्तिभ्य एव तराम् तमाम् ॥
तथा गुणादिष्ठेयन्सौ वा ॥ पटिष्ठः । पटीयान् । पटुतरः । पटुतमः ॥
प्रकर्षे रूपः ॥ प्रकृष्टं पचति । पचतिरूपम् । प्रकृष्टो वैयाकरणः वैयाकरणरूपः ॥
ईषदसमाप्तौ कल्पदेश्यदेशीयाः ॥ पटुकल्पः । पटुदेश्यः । पटुदेशीयः । पचतिकल्पम् । पचतिदेश्यम् । पचतिदेशीयम् ॥
कुत्सितवृत्तेर्नाम्न एव पाशः ॥ कुत्सितो वैयाकरणः । वैयाकरणपाशः ॥

भूतपूर्वे चरट् ॥ भूतपूर्वं आढ्यः । आढ्यचरः । आढ्यचरी ॥ षष्ठ्यास्तद्भूतपूर्वेऽभिधेये रूप्यच ॥ देवदत्तस्य भूतपूर्वो गौः । देवदत्तरूप्यः । देवदत्तचरः ॥

बह्वल्पार्थात्कारकाच्छस् वा मङ्गले गम्यमाने ॥ बहु देहि । बहुशो देहि । एवं प्रभूतं देहि । प्रभूतशो देहि । अल्पशो देहि । स्तोकशो देहि ॥

संख्यैकार्थाभ्यां वीप्सायाम् ॥ द्वौ द्वौ देहि । द्विशो । देहि । एवं कार्षापणशो देहि । कुडवशः । पादशः ॥

कतिगणयत्तूनां संख्यावत् ॥ कतिशः । गणशः । तावच्छः ॥

वारस्य संख्यायाः कृत्वस् ॥ पञ्च वारान् भुङ्क्ते । पञ्चकृत्वः । कतिकृत्वः । गणकृत्वः । तावत्कृत्वः । शतं वारान् भुङ्क्ते । शतं वाराणां वा भुङ्क्ते । शतकृत्वः ॥

बहोरविप्रकर्षे धा च ॥ बहून् वारान् भुङ्क्ते । बहुधा दिवसस्य । बहुकृत्वः ॥

द्वित्रिचतुर्भ्यः सुच् ॥ द्वौ वारौ भुङ्क्ते । द्विर्भुङ्क्ते । त्रिर्भुङ्क्ते । चतुर्भुङ्क्ते ॥ प्रकृतवृत्तेर्मयट् ॥ अन्नं प्रकृतम् । अन्नमयम् । एवं यवागूमयी ॥ प्रकृतेर्विकारेऽवयवे चाभक्ष्याच्छादनयोः ॥ अश्ममयम् । भस्ममयम् । सुवर्णमयम् ॥ अभक्ष्याच्छादनयोस्तु । मौद्गः सूपः । कार्पासमाच्छादनम् ॥ मयटाऽण् न बाध्यते ॥

एकस्वरान्नित्यम् ॥ वाङ्मयम् । त्वङ्मयम् । मृन्मयम् ॥

अभूततद्भावे कृभ्वस्तिषु विकाराच्चिः ॥ अशुक्लं शुक्लं करोति । शुक्लीकरोति ॥ अशुक्लः शुक्लो भवति । शुक्लीभवति । शुक्लीस्यात् ॥ अरुर्मनश्चक्षुश्चेतोरहोरजोभ्यः ॥ अन्तसलोपश्च

एवायं विधिः। निपातनस्येष्टविषयत्वात्। अनकरकः करोति। अकरोतीत्यादि॥ अभिव्याप्तौ सम्पद्यते च सातिर्वा॥ वर्षासु लवणमुदकं सम्पद्यते। उदकसात्सम्पद्यते। उदकसात्करोति। उदकसाद्भवति। उदकसात्स्यात्॥

स्वाम्यर्थादायत्ते। राजायत्तं करोति। राजसात्करोति। राजसाद्भवति। राजसात्स्यात्। राजसात्सम्पद्यते॥

देये त्रा च॥ देवाय देयं करोति। देवत्रा करोति। देवत्रा भवति। देवत्रा स्यात्। देवत्रा सम्पद्यते। एवमन्येऽपि॥

अव्यक्तानुकरणादनेकस्वरादनितौ डाच्॥ पटत्पटत्करोति। पटपटाकरोति। पटपटाभवति। पटपटासम्पद्यते। पटपटास्यात्॥ द्वितीयतृतीयशम्बबीजेभ्यः कृषिविषये करोतौ॥ द्वितीयाकरोति। तृतीयाकरोति। शम्बाकरोति। बीजाकरोति॥

संख्यादेर्गुणात्॥ द्विगुणाकरोति। त्रिगुणाकरोति क्षेत्रम्॥

समयाद्यापनायाम्॥ समयाकरोति॥

सपत्रनिष्पत्राभ्यामतिव्यथने॥ सपत्राकरोति। निष्पत्राकरोति मृगम्॥

निष्कुलान्निष्कोषणे॥ निष्कुलाकरोति दाडिमम्॥

प्रियसुखाभ्यामानुकूल्ये॥ प्रियाकरोति। सुखाकरोति॥

दुःखात्प्रातिकूल्ये॥ दुःखाकरोति॥

शूलात्पाके॥ शूले पचति मांसम्। शूलाकरोति॥

सत्यादशपथे॥ सत्याकरोति वणिग्भाण्डम्॥

मद्रभद्राभ्यां वपने॥ मद्राकरोति। भद्राकरोति॥

## समासान्तगतानां वा राजादीनामदन्तता ॥४१॥

समासान्तगतानां वा राजादीनामदन्तता निपात्यते। अत्प्रत्ययो वाऽदन्तो वा येषामिति विग्रहः। अथवा वचनोऽपि समासस्याश्रय। तेनोपराजम्। अध्यात्मम्। अव्ययीभावाद् विभक्तीनामम्॥ द्विपुरी। त्रिपुरी। द्विगोर्नदादित्वादी॥ सखचिनी। दन्तनिन्दितरोगेभ्य इतीन्। एवमन्येऽपि॥

प्रणम्य रुद्रस्य हरेर्भवान्याः वाण्या गणेशस्य च पादपद्मम्।
तनोति रत्नेश्वरचक्रवर्ती राजादिवृत्तिं पठतां हिताय॥

राजन् अहन् सखि ॥ १ ॥ प्रागुक्तो विधिस्तत्पुरुष एव वक्ष्यति। एते तत्पुरुषे राजादयो भवन्ति। राजादित्वाददन्तता स्यादित्यर्थः। महाराजः। परमाहः। द्व्यहः। विबुधसखः॥ तत्पुरुष इति किम्? शोभनराजा मगधः। दीर्घाहो निदाघः। वायुसखा राजा॥

गोरतद्धिताभिधेये ॥ २ ॥ तद्धिताभिधेयं वर्जयित्वा तत्पुरुषे गौ राजादिर्भवति। राजगवः। परमगवः॥ अतद्धिताभिधेय इति किम्। पञ्चगु। अन्यत्र चित्रगुः॥

उरः प्रधानार्थम् ॥ ३ ॥ प्रधानार्थं उरःशब्दो राजादिर्भवति। अश्वोरसम्। हस्त्युरसम्। अश्वानां हस्तिनां च प्रधानमित्यर्थः॥ प्रधानार्थमिति किम्? अश्वोरः। अश्वानां वक्ष इत्यर्थः॥

अनस् अश्मन् अयस् सरस् जातिसंज्ञयोः ॥ ४ ॥ जातौ संज्ञायां च एते चत्वारो राजादयो भवन्ति।

उपगतमन.। उपागमम्। जातिः॥ महागमम्। संज्ञा॥ अमृताश्मः। जातिः॥ कृताश्मः। संज्ञा॥ पिण्ड्रायसम्। जातिः॥ लोहितायसम्। संज्ञा॥ मण्डूकसरसम्। जातिः॥ जलसरसम्। संज्ञा॥ अनगोरिति किम्। हृद्दन इत्यादि॥

ग्रामकोटाभ्यां तक्षन्॥ ५॥ आभ्यां तक्षा राजादिर्भवति। ग्रामतक्षः॥ कोटतक्षः॥ आभ्यामिति किम्? राजतक्षा॥

अतेः श्वन्॥ ६॥ अतिपूर्वः श्वा राजादिर्भवति। अतिश्वो वराहः। वेगवानित्यर्थः॥ अतिश्वः सेवकः। सुस्वामिभक्त इत्यर्थः॥ अतिश्वी सेवा। निकृष्टेत्यर्थः॥

उपमानादप्राणिनि॥ ७॥ अप्राणिविषय उपमानं यः। स राजादिर्भवति। आकर्षः श्वेव। आकर्षश्वः॥ अप्राणिनीति किम्? फलकः श्वेव। फलकश्वः॥ अप्राणिनीति किम्? व्याघ्रः श्वेव। व्याघ्रश्वः॥

मृगपूर्वोत्तरेभ्यश्च सक्थि॥ ८॥ एभ्य उपमानाच्च सक्थि राजादि भवति। मृगसक्थम्। पूर्वसक्थम्। उत्तरसक्थम्। फलकसक्थम्॥

अतद्धितार्थे द्विगोर्नौः॥ ९॥ तद्धितार्थं वर्जयित्वा उत्तरपदे समाहारे च द्विगोः सम्बन्धिनी नौ राजादिर्भवति। द्विनावं धनम्। पञ्चनावं धनम्॥ अतद्धितार्थे इति किम्। पञ्चनौः॥ द्विगोरिति किम्? परमनौः॥

अर्धाच्च॥ १०॥ अर्धशब्दाच्च परा नौ राजादिर्भवति। अर्धनावम्। लिङ्गस्य लोकाश्रयत्वान्नपुंसकत्वमेव।

वा खारी ॥ ११ ॥ अर्धात्परा । अतद्धितार्थे द्विगोः खारी राजादिर्भवति वा । अर्धखारम् । अर्धखारी । अहिधानबलान्न स्त्रीलम् ॥ द्विखारधनम् । द्विखारी । अतद्धितार्थे द्विगोः स्त्रीप्रत्ययस्य निवृत्तेर्नास्ति व्यावृत्तिः । पञ्चभिः खारीभिः क्रीतः । पञ्चखारः ॥

द्वित्रिभ्यामञ्जलिः ॥ १२ ॥ आभ्यां परोऽञ्जलिशब्दो राजादिर्भवति वा । द्व्यञ्जलम् । द्व्यञ्जलि । त्र्यञ्जलम् । त्र्यञ्जलि । द्व्यञ्जलप्रियः ॥ द्व्यञ्जलिप्रियः । त्र्यञ्जलप्रियः । त्र्यञ्जलिप्रियः ॥ उत्तरपदेऽतद्धितार्थे नेच्छन्त्यन्ये ॥ अतद्धितार्थे द्विगोरिति किम् ? द्व्यञ्जलिः । त्र्यञ्जलिः ॥

जनपदाद् ब्रह्मन् ॥ १३ ॥ जनपदवाचकाच्छब्दात्परो ब्रह्मन् राजादिर्भवति । अवन्तिषु ब्रह्मा । अवन्तिब्रह्म ॥ वा न वर्तते परत्र वाग्रहणात् ॥

कुमहद्भ्यां वा ॥ १४ ॥ आभ्यां ब्रह्मन् राजादिर्भवति वा । कुत्सितो ब्रह्मा । कुब्रह्मः । कुब्रह्मा । महाब्रह्मः ॥ महाब्रह्मा । आभ्यामिति किम् ? । परमब्रह्मा ॥

। उक्तेषु स्त्रीत्वसम्भवे नदादौ द्रष्टव्याः ॥ १५ ॥ एतेऽ-प्रत्ययान्ताः स्त्रियां वर्त्तन्ते चेत्तदा नदादौ द्रष्टव्याः । ईप्रत्ययान्ता भवन्तीत्यर्थः । यथा राजानमतिक्रान्ता । अतिराजी । इत्यादि ॥ सम्भव इति किम् ? । अर्धनावम् । अर्धखारम् ॥

संख्याव्ययादङ्गुलि' ॥ १६ ॥ संख्याव्ययादौ यस्येति विग्रहः । संख्याव्ययाद्यङ्गुलिशब्दो राजादिर्भवति । द्वयोरङ्गुल्योः समाहारः । द्व्यङ्गुलम् ॥ द्वे अङ्गुली

प्रमाणमस्य द्व्यङ्गुलं दारु ॥ तद्धिताभिधेये द्विगुरयम्। तेन तमादिविहिताः प्रमाणे द्वयसट्दघ्नट्मात्रट्प्रत्यया न भवन्त्युक्तार्थत्वात्। यथा अङ्गुलिः प्रमाणमस्य अङ्गुलिद्वयसम्। अङ्गुलिद्घ्नम्। अङ्गुलिमात्रम् ॥ अव्ययादि। निरङ्गुलम् ॥

अह्नः सर्वैकदेशसंख्यातपुण्यवर्षादीर्घाद्यव्ययादेश्च रात्रिः ॥१७॥ एतेभ्यः संख्याव्ययादिभ्यश्च रात्रिशब्दो राजादिर्भवति। अहोरात्रः। सर्वरात्रः ॥ पूर्वरात्रः। अपररात्रः। एकदेशे वर्त्तमानस्य पूर्वादिशब्दस्यैकदेशत्वात्कर्मधारयः। अन्यत्र पूर्वरात्रिः। अतिक्रान्ता रात्रिरित्यर्थः ॥ संख्यातरात्रः। पुण्यरात्रः। वर्षारात्रः। दीर्घरात्रः ॥ संख्याव्ययादिश्च। द्विरात्रम्। त्रिरात्रम् ॥ एभ्योऽह्नोऽति नलोपो न दृश्यते। पूर्वाह्ण इत्यादि ॥ संख्याताह्नः। संख्याताह्नः। संख्याताहः ॥ समाहारद्विगौ नलोपः। द्व्यहः। त्र्यहः ॥

प्रागुक्तो विधिस्तत्पुरुष एव ॥ १८ ॥ राजन्नहन्सख्योत्यादिर्यो विधिः स तत्पुरुष एव राजादिर्भवतीति वेदितव्यः। तेन बहुव्रीह्यादौ न भवतीत्यर्थः। इन्द्रः सखा यस्य। इन्द्रसखा ॥ उपसखि। राजाहसखायः। इत्यादि ॥

पथ्यपपुरः ॥ १९ ॥ एते समासमाते राजादयो भवन्ति। स्थूलश्चासौ पन्थाश्चेति स्थूलपथः ॥ विमला आपो यत्र। विमलापं सरः। ललाटं पूरिव। ललाटपुरम् ॥

धुरनक्षस्य ॥ २० ॥ अक्षसम्बन्धिनीं धुरं वर्जयित्वा धुर्शब्दो राजादिर्भवति । राजधुरा । महाधुरा ॥ अनक्षस्येति किम् ? अक्षधूः । दृढधूरक्षः ॥

ऋचः ॥ २१ ॥ समासमात्र ऋक्शब्दो राजादिर्भवति । अर्धर्चः । सप्तर्चः ॥

नञ्बह्वादिश्च माणवकचरणयोः ॥ २२ ॥ चकारः समुच्चयमात्रे । नञ्बह्वादिश्च ऋक्शब्दो राजादिर्भवति । माणवकचरणयोः । अनृचो माणवकः । बह्वृचश्चरणः ॥ अनयोरिति किम् ? अनृक्कं साम । बह्वृक्कं सूक्तम् । शेषाद्वेति कप्रत्ययः ॥

प्रत्यन्ववेभ्यः सामलोमनी ॥ २३ ॥ प्रति । अनु । अव । एभ्यः सामलोमनी राजादी भवतः । प्रतिसामम् । प्रतिलोमम ॥ अनुसामम् । अनुलोमम् । अवसामम् । अवलोमम् ॥ प्रतिगतं साम इत्यादि वाक्यम् ॥

अचक्षुरक्षि ॥ २४ ॥ अचक्षुर्विषये वर्तमानम् अक्षि राजादि भवति । लवणमक्षीव । लवणाक्षः । गवाक्षः ॥ अचक्षुरिति किम् ? ब्राह्मणाक्षि ॥

ब्रह्महस्तिराजपल्येभ्यो वर्चस् ॥ २५ ॥ एभ्यो वर्चो राजादि भवति । वर्चो दीप्तिः । ब्रह्मणो वर्चः ब्रह्मवर्चसम् हस्तिवर्चसम । राजवर्चसम् । पल्यवर्चसम् ॥ एभ्य इति किम् ? देववर्चः ॥

अन्धसन्तेभ्यस्तमस् ॥ २६ ॥ एभ्यस्तमो राजादि भवति । अन्धं करोतीति । अन्धम् ॥ अन्धं च तमश्चेति । अन्धतमसम् ॥ सन्ततं तमः । सन्तमसम् ॥

अवचीर्णं तमः। अवतमसम्॥ एभ्य इति किम्? महातमः॥

श्वसोऽवसीयस्॥ २७॥ श्वस इत्यस्मात्परम् अवसीयो राजादि भवति। शोभनमवसीयः। श्वोऽवसीयसं कल्याणमिति॥

निसश्च श्रेयस्॥ २८॥ चकारः श्वसोऽनुकर्षणार्थः। निसः श्वसश्च परं श्रेयो राजादि भवति। निःश्रेयसम्। श्वःश्रेयसम्। कल्याणमित्यर्थः॥

अन्ववतप्तेभ्यो रहस्॥ २९॥ एभ्यो रहो राजादि भवति। अनुरहसम्। अवरहसम्। तप्तरहसम्॥

प्रतेरुरस् आधारश्चेत्॥ ३०॥ यदाधारः स्यात् तदा प्रतेः पर उरस्शब्दो राजादिर्भवति। उरसि वर्त्तते। प्रत्युरसम्। उरसीत्यर्थः॥ आधार इति किम्? प्रत्युरः॥

अनुगवमायामवति॥ ३१॥ आयामो दैर्घ्यम्॥ अनुगवम् अप्रत्ययान्तं निपात्यते दैर्घ्यं चेत्। गवामनुयात शकटम्। अनुगवम्॥ आयामवतीति किम्? गवां पश्चात्। अनुगु। पश्चादर्थेऽव्ययीभावः॥

उपसर्गादध्वन्॥ ३२॥ प्रादेः परोऽध्वन्शब्दो राजादिर्भवति। प्रगतोऽध्वानम्। प्राध्वो रथः। अत्यध्वं शकटम्॥ उपसर्गग्रहणं सुखार्थं प्रादेरिति सिद्धत्वात्॥

उदक्पाण्डुकृष्णेभ्यो भूमिः॥ ३३॥ एभ्यो भूमी राजादिर्भवति। उदीची भूमिर्यत्र। उदग्भूमः। एवं पाण्डुभूमः। कृष्णभूमो देशः॥

सङ्ख्याया नदीगोदावर्यौ च॥ ३४॥ एकादयः संख्या।

अस्याः परा नदी गोदावरी भूमिश्च राजादयो भवन्ति। पञ्चनदम्। पञ्चगोदावरम्। नदीवाचकानां समाहार अव्ययीभावो इष्यते। द्वे भूमी यस्य। द्विभूमः प्रासादः॥

उक्तेषु स्त्रीत्वसम्भवे स्त्रियामादा ॥ ३५ ॥ उक्तेषु पन्थपुर इत्यादिष्वप्रत्ययान्ते स्त्रीत्वसम्भवे सति स्त्रिया मादा भवतीत्यर्थः। स्थूलः पन्था यस्याः सा स्थूलपथा नगरी॥ स्त्रीत्वसम्भव इति किम्? ललाटे पुरम॥

समाहारद्वन्द्वश्चवर्गदषहान्तः ॥ ३६ ॥ समाहारद्वन्द्व-समासस्याश्चवर्गान्तदान्तषान्तहान्ता राजादयो भवन्ति। वाक्त्वचम्। श्रीस्रजम्॥ दकारान्त। समिद्दृषदम्॥ षान्त। वागाविषम्॥ हान्त। पीठच्छत्रोपानहम्॥ समाहारद्वन्द्वस्यादिति किम्? वाक्त्वचौ॥

इतोऽव्ययीभावः ॥ ३७ ॥ इतः परो बहुव्रीहिः प्राग्यो विधिः स राजादयो वक्ष्यन्ते। तेऽव्ययीभावसमासे भवन्तीत्यधिक्रियते॥

शरद्विपाश्यसचेतस्मनस्उपानह्दिवः संज्ञायाम् ॥ ३८ ॥ एतेऽव्ययीभावसमासान्ताः संज्ञायां राजादयो भवन्ति। शरदः समीपम् उपशरदम्। उपविपाशम्। उपायसम्। उपचेतसम्। उपमनसम्। उपोपानहम्। उपदिवम्॥

हिमवन्त् द्विधा ॥ ३९ ॥ एतौ राजादी भवतः। उपहिमवतम्। उपद्विधम्॥

अनडुह् विश् चत्वार् यद् तद् ॥ ४० ॥ अव्ययी-भावसमास एते राजादयो भवन्ति। उपानडुहम्।

उपविशम्। उपचतुरम्। उपयदम्। उपतदम्॥

जरा जरस्॥ ४१॥ जराशब्दो राजादिर्भवति निर्दिष्टस्य जराशब्दस्य जरसादेशश्च। उपजरसम्॥

प्रतिसमनुभ्योऽक्षि॥ ४२॥ एभ्योऽक्षिशब्दो राजादिर्भवति। प्रत्यक्षम्। समक्षम्। अन्वक्षम्॥

उपश्वन्॥ ४३॥ उपादेव श्वन्शब्दो राजादिर्भवति। नान्यस्मादिति। उपशुनम्॥ नियमः किम्? अधिश्व॥

सहरजस्॥ ४४॥ सहात्परो रजस्शब्दो राजादिर्भवति। सरजसमभ्यवहरति। साकल्येऽव्ययीभावः॥

अन्नन्तः॥ ४५॥ अन्नन्तशब्दो राजादिर्भवति। अध्यात्मम्। उपराजम्॥

नपुंसकं वा॥ ४६॥ नपुंसकलिङ्गमनन्तं राजादि भवति वा। उपचर्मम्। उपचर्म॥

धुडन्तः॥ ४७॥ नपुंसकमिति न वर्त्तते। अधिकारस्येष्टविषयत्वात्। धुडन्तशब्दो राजादिर्भवति वा। उपसमिधम्। उपसमित्। उपदृशदम्। उपदृशत्॥

गिरि नदी पौर्णमासी आग्रहायणी॥ ४८॥ एते चत्वारो राजादयो भवन्ति वा। उपगिरम्। उपगिरि। उपनदम्। उपनदि। उपपौर्णमासम्। उपपौर्णमासि। उपाग्रहायणम्। उपाग्रहायणि॥

इतो बहुव्रीहिः॥ ४९॥ इतः परं ये अदन्ता वक्ष्यन्ते ते बहुव्रीहौ समासे भवन्तीत्यर्थः॥

सक्थ्यक्षिणी स्वाङ्गे॥ ५०॥ एतौ स्वाङ्गे वर्त्तमानौ राजादी भवतः। दीर्घे सक्थ्यस्य। दीर्घसक्थः।

एवं विशालाच. ॥ स्वाङ्ग इति किम् ? दीर्घसक्थिः । स्थूलाचिरिषुः । अप्राणिस्थत्वादस्वाङ्गता ॥

दारुण्यङ्गुलिः ॥ ५१ ॥ दारुणि वर्त्तमानोऽङ्गुल्यन्तो बहुव्रीहौ राजादिर्भवति । द्वे अङ्गुली यस्य । द्व्यङ्गुलं दारु ॥

द्वित्रिभ्यां मूर्द्धन् ॥ ५२ ॥ आभ्यां मूर्द्धन्शब्दो बहुव्रीहौ राजादिर्भवति । द्वौ मूर्द्धानौ यस्य स द्विमूर्धः । एवं त्रिमूर्धः ॥

उक्तेषु स्त्रीत्वसम्भवे नदादित्वादी ॥ ५३ ॥ उक्तेषु सक्थ्यक्षिणी स्वाङ्ग इत्यादिषु य अदन्तास्तेभ्यो नदादित्वाद् ईप्रत्ययो भवतीत्यर्थः । दीर्घसक्थी । विशालाक्षीत्यादि ॥

पूरणीप्रमाण्यौ ॥ ५४ ॥ पूरणप्रत्ययान्ता स्त्री पूरणी । पूरणीप्रमाणीशब्दौ राजादी भवतः । सा चेद्बहुव्रीहिश्च स्यामेव पूरण्यामन्यपदार्थत्वे न वर्त्तते ॥ तदेतन्मुख्यपूरणीग्रहणात् । कल्याणीपञ्चमा रात्रय' ॥ मुख्यपूरणीति किम् ? कल्याणपञ्चमीक पक्ष. । स्त्रीप्रमाणाः कुटुम्बिन । प्रमाणशब्देनैव सिद्धे कप्रत्ययबाधनार्थोऽयम् । यथा कल्याणपञ्चमीकः पक्षः ॥

अन्तर्बहिर्भ्यां लोमन् ॥ ५५ ॥ आभ्यां लोमन्शब्दो राजादिर्भवति । अन्तर्लोमः । बहिर्लोमः ॥

नक्षत्रान्नेतृ ॥ ५६ ॥ नक्षत्रमश्विन्यादि । नक्षत्रवाचकाच्छब्दात्परो नेतृशब्दो राजादिर्भवति । मृगनेत्रा रात्रिः । पुष्यनेत्रा ॥ नक्षत्रादिति किम् ? देवदत्तनेतृकः ॥

नञ्सुव्युपत्रिभ्यश्चत्वारः ॥ ५७ ॥ एभ्यश्चत्वार्‌शब्दो राजादिर्भवति। अचतुरः। सुचतुरः। विचतुरः। उपचतुरः। त्रिचतुरः॥ एभ्य इति किम्? पञ्चचत्वारः॥

संज्ञायां नाभिः ॥ ५८ ॥ बहुव्रीहौ नाभी राजादिर्भवति। संज्ञाया गम्यमानायाम्। पद्मनाभः। वज्रनाभः॥ संज्ञायामिति किम्? पद्मनाभिः।

नञ्सुदुर्भ्यः सक्थि वा ॥ ५९ ॥ एभ्यः सक्थि राजादिर्भवति वा। असक्थः। असक्थिः। सुसक्थः। सुसक्थिः। दुःसक्थः। दुःसक्थिः॥

इति रत्नेश्वरचक्रवर्त्तिविरचितराजादि

वृत्तिः समाप्ता॥

राजादिराकृतिगणोऽयम्॥

---

## डानुबन्धेऽन्त्यस्वरादेर्लोपः ॥ ४२ ॥

डानुबन्धे प्रत्यये परेऽन्त्यस्वरादेरवयवस्य लोपो भवति। चत्वारिंशतः पूरणः। चत्वारिंशः। एवं पञ्चाशः। सरसिजम्। जलजम्। सप्तमीपञ्चम्यन्ते जनेर्डः॥

## तेर्विंशतेरपि ॥ ४३ ॥

डानुबन्धे प्रत्यये परे विंशतेरपि तेर्लोपो भवति। विंशतेः पूरणः। विंशः॥

## इवर्णावर्णयोर्लोपः स्वरे प्रत्यये ये च ॥४४॥

इवर्णावर्णयोर्लोपो भवति। तद्धिते स्वरे ये च प्रत्यये

परतः। आत्रेयः। द्रौणेयः। दाक्षिः। प्लाक्षिः। गार्ग्येयः। गार्ग्यः। तुल्यः॥ पुनर्लोपग्रहणादव्ययानामन्त्यस्वरादेर्लोपो लक्ष्यतः। सायंप्रातर्भवः। सायंप्रातिकः। पौनःपुनिकः। बाह्यमित्यादयः॥

## नस्तु क्वचित्॥ ४५॥

नकारस्य लोपो भवति क्वचिल्लक्ष्यानुरोधात्। तद्धिते स्वरे परे। औडुलोमिः। आग्निशर्मिः। द्वे अहनी समाहृते। द्व्यहः। त्र्यहः॥

## उवर्णस्त्वोत्वमापाद्यः॥ ४६॥

उवर्णस्त्वोत्वमापादनीयः। तद्धिते स्वरे ये च प्रत्यये परतः॥ औपगवः। बाभ्रव्यः॥

## एयेऽकद्र्वास्तु लुप्यते ४७॥

उवर्णस्तु लुप्यते। एये प्रत्यये परे। न तु कद्रूशब्दस्य। कामण्डलेय। माद्रबाहेयः॥ अकद्र्वा इति किम्? काद्रवेया नागाः॥

## कार्यावावावादेशावोकारौकारयोरपि॥ ४८॥

ओकारौकारयोः स्थानेऽवावावादेशौ कार्यौ। तद्धिते स्वरे ये च प्रत्यये परे। औपगवः। गव्यम्। नाव्यम्॥

## वृद्धिरादौ सणे॥ ४९॥

स्वराणां मध्ये आदौ स्वरस्य वृद्धिर्भवति। सणकारानुबन्धे तद्धिते प्रत्यये परे। शैवः। औपगवः। कार्म

ल्लम् ॥ कथं वासिष्ठः । आदावित्याकारमग्रे यात् ॥ क्व-चिदधिकारादुत्तरपदस्यापि लभ्यतः । अवयवाट्टतूनाम् । पूर्ववार्षिकम् । अपरहैमन्तम् । वर्षैकदेशे हैमन्तैकदेशे समाहैमन्तौ ॥ सुसर्वार्धेभ्यो जनपदस्य च । सुपाञ्चालिकः । सर्वपाञ्चालिकः । अर्धपाञ्चालिकः ॥ क्वचिदुभयपदस्यापि । सौभाग्यम् । सौहार्दम् । सक्तुप्रधानाः सिन्धवः । तत्र-भवः साक्तुसैन्धवः । एवमन्येऽप्यनुसर्तव्याः ॥

## न य्वोः पदाद्योर्वृद्धिरागमः ॥ ५० ॥

इह प्रतिषेधो विधिश्च गम्यते । आदिशब्दः समीप-वचनः । पदस्याद्योर्यकारवकारयोः समीपे वृद्धिर्न भवति । तयोश्चादौ वृद्धिरागमो भवति । सणकारानुबन्धे तद्धिते । स्थानेऽन्तरतम इति न्यायाद् यकारस्यैकारो वकारस्यौ-कारः ॥ व्यसने भवः । वैयसनः । व्युदश्वस्यापत्यम् । वैयुदश्वः । स्वश्वस्यापत्यम् । सौवश्विः । व्याकरणं वेत्त्य-धीते वा वैयाकरणः ॥ य्वोः समीप इति किम् ? दाध्यश्विः । माध्वश्विः । तन्निमित्तो वृद्धिरागमो न स्यात् ॥ पुनर्वृद्धि-ग्रहणं वर्धनाद्वृद्धिरिति ज्ञापनार्थम् ॥ क्वचिदधिकाराद् द्वारादीनां चापदाद्योरपि वृद्धिप्रतिषेधो वृद्धिरागमश्च । द्वारे नियुक्तो दौवारिकः ॥ द्वार । द्वारपाल । स्वर । व्य-ल्कस । स्वस्ति । स्वर् । स्वर्गमन । स्फयकृत । स्वादुमृदु । श्वन् । स्व । एवमन्येऽप्यनुसर्तव्याः ॥

इति दौर्गसिंह्यां वृत्तौ नाम्नि चतुष्टये
तद्धितपादः समाप्तः ॥

## अथाख्यातम् ।

### अथ परस्मैपदानि ॥ १ ॥

अथानन्तराणि त्यादीनि स्यामन्ताः पर्यन्तानि परस्मैपदसञ्ज्ञकानि भवन्ति । नव पराण्यात्मन इत्यनेनाबाधया पूर्वाणि नवैव वचनानि सर्वासां विभक्तीनामिति ॥ अर्थस्य विभजनाद्विभक्तय इति । ति तस् अन्ति । सि थस् थ । मि वस् मस् । एवं सर्वत्र । परस्मैपदप्रदेशाः । शेषात् कर्त्तरि परस्मैपदम् [का० ३. २. ४७] इत्येवमादयः ॥

### नव पराण्यात्मने ॥ २ ॥

अथ पराणि नव नव वचनान्यात्मनेपदसंज्ञकानि भवन्ति । पदानीति गम्यते ॥ ते आते अन्ते । से आथे ध्वे । ए वहे महे । एवं सर्वत्र ॥ आत्मनेपदप्रदेशाः । आत्मनेपदानि भावकर्मणोः [का० ३. २. ४०] इत्येवमादयः ॥

### त्रीणि त्रीणि प्रथममध्यमोत्तमाः ॥ ३ ॥

परस्मैपदानामात्मनेपदानां च त्रीणि त्रीणि वचनानि प्रथममध्यमोत्तमसञ्ज्ञकानि भवन्ति यथासङ्ख्यम् । ति । तस । अन्ति । इति प्रथम ॥ सि । थस् । थ । इति मध्यमः ॥ मि । वस् । मस् । इत्युत्तमः ॥ ते । आते । अन्ते । इति प्रथमः ॥ से आथे । ध्वे । इति मध्यमः ॥ ए । वहे । महे । इत्युत्तमः । एवं सर्वत्र॥ संज्ञाप्रदेशाः। नाम्नि प्रयुज्यमानेऽपि

प्रथमः। युष्मदि मध्यमः। अस्मद्युत्तम [का० ३. १. ५-७] इत्येवमादयः॥

## युगपद्वचने परः पुरुषाणाम्॥ ४॥

युगपदेककालार्थः। युगपद्वचन एकक्रियाकालाभिधाने पुरुषाणां मध्ये यः परः स भवति। स च त्वं चाहं च पचामः। स च त्वं चाहम् पचावः। स च त्वं चाहं च पच्यामः॥ वचनमतन्त्रम्। स च त्वं च पचथः। त्वं चाहं च पचावः। युगपद्वचन इति किम्? स पचति। त्वं पचसि। अहमपाचमिति भिन्नकालोक्तौ वयमपाक्ष्मेति माभूत्॥ वचनग्रहणं युगपद्विषये माभूत्। स पचति। त्वं पचसि। अहं पचामीत्येवं प्राप्नोति॥ अप्रवृत्तौ पर्याये वा प्राप्तिं परिभाषेयम्॥

## नाम्नि प्रयुज्यमानेऽपि प्रथमः॥ ५॥

नाम्नि प्रयुज्यमानेऽप्रयुज्यमानेऽपि प्रथमः पुरुषो भवति। स पचति। तौ पचतः। ते पचन्ति। स पचते। तौ पचेते। ते पचन्ते। एवं पच्यते घटः। पच्येते घटौ। पच्यन्ते घटाः॥ अप्रयुज्यमानेऽपि। पचति। पचतः। पचन्ति। एवं सर्वत्र॥ प्रयुज्यमानग्रहणं किम्? धा-तूनां पुनः प्रथमः स्यात्। तेन देवदत्तेन त्वमिति त्वमं मध्यम एव युष्मद्योगात्॥

## युष्मदि मध्यमः॥ ६॥

युष्मदि प्रयुज्यमानेऽप्रयुज्यमानेऽपि मध्यमः पुरुषो

भवति । त्वं पचसि । युवां पचथः । यूयं पचथ ॥ अप्रयुज्यमानेऽपि । पचसि । पचथः । पचथ । एवं सर्वत्र ॥ प्रयुज्यमानग्रहणं किम् ? त्वया पच्यत ओदनः ॥

## अस्मद्युत्तमः ॥ ७ ॥

अस्मदि प्रयुज्यमानेऽप्रयुज्यमानेऽप्युत्तमः पुरुषो भवति । अहं पचामि । आवां पचावः । वयं पचामः ॥ अप्रयुज्यमानेऽपि । पचामि । पचावः । पचामः । एवं सर्वत्र ॥

अत्वं त्वं सम्पद्यते । अनहमहं सम्पद्यते । त्वद्भवति । मद्भवतीति भवितव्यमेव । युष्मदस्मदोर्गौणत्वात् । त्वन्मदौ तु शब्दमात्राश्रयत्वात् ॥ एहि मन्ये रथेन यास्यसि ॥ यातस्ते पितेति । स्वविषय एव मध्यमोत्तमौ ॥

## अदाब्दाधौ दा ॥ ८ ॥

दाप्दैपौ वर्जयित्वा दाधावित्येतौ दासंज्ञकौ भवतः । दीयते । धीयते ॥ अदाबिति किम् ? दायन्ते व्रीहयः । निदायन्ते भाजनानि । पकारोऽयं णौ प्रतिषेधार्थ एव निर्दिश्यते ॥

## क्रियाभावो धातुः ॥ ९ ॥

यः शब्दः क्रियां भावयति प्रतिपादयति स धातुसंज्ञो भवति । भवति । अत्ति । जुहोति । दीव्यति । सुनोति । तुदति । रुणद्धि । तनोति । क्रीणाति । चोरयति ॥ क्रियत इति क्रिया साध्यमुच्यते । सा च पूर्वापरीभूतावयवैव ॥ कथं तर्हि । अस्ति । नश्यति । श्वेतते प्रासादः ।

सम्बुध्यते । सम्भवेति । सत्ता नित्यता । अभावो नाशः । एते सत्तायामपि गुणौ । समवायोऽप्यर्थान्तरम् । अस्ति सिद्धं हि भावनायत्तादृश सर्वम् अतस्तद्योगतया सिद्धमपि क्रियात्वेनावभासते । क्रियाकारकस्यवृत्तेर्बुद्धावध्या-निबन्धनात् । तथा गतिवदनेकदेशे विषयत्वेऽपि । अङ्कुरो जायत इति जन्म आभूत् । प्रादुर्भाव एवेति । अथवा जायते विशिष्टोपलभ्यते अतोऽङ्कुरस्य कर्तृत्वम् । तथा चोक्तम् ॥

यावत् सिद्धमसिद्धं वा साध्यत्वेन प्रतीयते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥

धातुप्रदेशाः । धातोश्च हेतौ [का० ३. २. १० ] इत्येवमादयः ॥

काले ॥ १० ॥

काल इति सप्तम्यन्तमनुवर्तते । काल इत्यधिकृतं वेदितव्यम् । तेन साधने वर्तमानत्वेऽपि भविष्यति च न स्यात् । ग्रामं गतो गमिष्यति चाद्य देवदत्तः । रामो वनमगच्छत् । अग्निरिन्द्रो भविष्यति ॥ वर्तमानादिभिः किम् ? धातोर्विशेषणं द्रव्यस्य वेति सन्देहे ऽयमधिकारः । नित्यो व्यापी सम्प्रतिभूतभविष्यत्क्रियायोगात् कालकल्पः एको द्रव्यरूपो भिद्यते कालः ॥

सम्प्रति वर्तमाना ॥ ११ ॥

सम्प्रतिकाले वर्तमाना विभक्तिर्भवति । पचति ।

यजते ॥ स्वसंज्ञयैव कालो विशिष्यते ॥ सम्प्रतीति किम् ? तस्थु । स्थास्यन्ति गिरय ॥

स्मेनातीते ॥ १२ ॥

स्मशब्देन योगेऽतीते काले वर्त्तमाना विभक्तिर्भवति । दहति स्म त्रिपुर हर । इति स्म जन कथयति ॥ अतीतविषयाणा बाधकोऽयम् ॥

परोक्षा ॥ १३ ॥

अतीते काले परोक्षा विभक्तिर्भवति । जघान कस किल वासुदेव । कट चक्रे देवदत्त ॥

भूतकरणवत्यश्च ॥ १४ ॥

भूतकाल: करण तद्विद्यते यासामिति । पारिशेष्याद् ह्यस्तन्यद्यतनीक्रियातिपत्तय एव रूढा: । एता भूतकरण वत्यस्तिस्रो विभक्तयोऽतीते काले भवन्ति । अकरोत् । अकार्षीत् । अकरिष्यत ॥

भविष्यति भविष्यन्त्याशी:श्वस्तन्य: ॥ १५ ॥

भविष्यति काले भविष्यन्त्याशी श्वस्तन्यस्तिस्रो विभक्तयो भवन्ति । कट करिष्यति । भक्त वध्यात् । ओदन भोक्ता ॥

तासां स्वसंज्ञाभि: कालविशेष ॥ १६ ॥

तासा वर्त्तमानादीना स्वसज्ञाभि कालस्य विशेषो ज्ञेय । तेन वर्त्तमाने काले वर्त्तमाना । वर्त्तत इति

वर्त्तमानः । प्रारब्धोऽपरिसमाप्तिः ॥ मांसं न खादति । इह कुमाराः क्रीडन्ति । तिष्ठन्ति पर्वताः । कदागतोऽसि । एष आगच्छामि । कदागमिष्यसि । एष गच्छामि ॥

परोक्षेऽतीते काले परोक्षेति । अक्षाणां परं परोक्षम् । इन्द्रियाणामविषय इत्यर्थः ॥ कथं सुप्तोऽहं किं विललाप । मत्तोऽहं किं विचचार । चित्तस्य विक्षेपात् ॥ नाहं कलिङ्गान् जगाम । इति गमनदोषभयात्प्रत्यक्षमप्यपह्नुते ॥ परोक्षे लोकविज्ञाते प्रयोक्तुर्दर्शनयोग्यत्वात्परोक्षस्याविवक्षायां ह्यस्तन्यपि । अयजत् । इयाज । सतोऽपि चाविवक्षा । यथानुदरा कन्येति ॥

ह्यस्तनेऽतीते काले ह्यस्तनी । ह्योभवः कालो ह्यस्तनः । अद्य श्वो वाभुक्ष्महीति व्यामिश्रे सन्निधानादद्यतनी ॥

अद्यतनेऽतीते मात्रेऽद्यतनी । अद्यभावोऽद्यतनः । आ न्याय्यादुत्थानादा न्याय्याच्च संवेशनादेषः । उभयतोऽर्द्धरात्रं वा लोकतः सिद्धम् ॥ कथम् अमुत्रावात्सं सकलां रात्रिं जागरितः । रात्रेरभावत्वादद्यतनमिव कालं मन्यते । यो मुहूर्त्तमपि सुप्तः सोऽनद्यतनं जानन् अमुत्रावसमित्याह ॥ अगमाम घोषान् । अपाम पय इति ह्यस्तनस्याविवक्षैव । ह्योऽगमाम घोषानिति पदार्थह्यस्तने ह्यस्तनी न वाक्यार्थ इति मतम् ॥

क्रियातिपत्तावतीते काले क्रियातिपत्तिरिति । एधांश्चेदलप्स्यत । ओदनमपक्ष्यत् । भविष्यति क्रियातिपत्ते र्भविष्यन्त्येव ॥

...ति काले भविष्यन्ती । भविष्यत्कालस्य भविष्यद्विशेष

शात् । अद्य श्वो वा गमिष्यतीति श्वस्तनीमपि बाधते ॥ आशीर्युक्ते भविष्यति काल आशी । अनागतस्येष्टार्थस्य लाभेनाविष्करणमाशी । अर्थाद्भविष्यद्विषयैव । यदस्या भविष्यद्विधानं तत् सुखप्रतिपत्त्यर्थम् ॥
श्वोभवे काले श्वस्तनी । स चार्थाद्भविष्यन् । यदस्या भविष्यद्विधानं तत्सामान्यप्रतिपत्त्यर्थम् । श्वो गमिष्यति । मासेन गमिष्यतीति पदसंस्कारात् ॥ अन्वर्थसंज्ञाया, प्रायोवृत्तित्वात् शङ्कर: स्यादिति । परिभाषेयम् ॥

## प्रयोगतश्च ॥ १७ ॥

प्रयुज्यत इति प्रयोग: । प्रयोगाद्वक्षये: कालस्य विशेषो ज्ञेय । अर्थात्पदान्तरसम्बन्धे । यावद्भुङ्क्ते तावो व्रजति । भविष्यता गम्यते । भविष्यन्ती विवक्षाया तु यावच्छब्दस्या प्रयोग एव ॥ अधीष्व माणवक पुरा विद्योतते विद्युत् । चिप्र कुरु कट पुरा गच्छसि ग्रामम् । वर्त्तमानसा- मीप्यस्य तद्ग्रहणेन ग्रहणम् । पुराशब्दाद्भविष्यद्वगमे सति तदा तस्य वर्त्तमानता वा ॥ कदाकर्ह्योर्योगे वर्त्त मानाभविष्यन्तीश्वस्तन्य । कदा भुङ्क्ते । कदा भोक्ष्यते । कदा भोक्ता । कर्हि भुङ्क्ते । कर्हि भोक्ष्यते । कर्हि भोक्ता ॥ भविष्यति परोक्षाद्योऽपि । कदा बुभुजे । कदा भुक्त । कदा भुक्तवान् ॥ तथा किमो विभक्तिडतर डतमान्तस्य प्रयोगे लिप्साया गम्यमानायाम् । भविष्यति भविष्यति सामान्ये । "को भवतां भिक्षां ददाति, दास्यति दाता वा । कतरो भवतां कतमो भवतां

भिक्षां ददाति दास्यति दाता वा॥ भूतविहिता अपि दृश्यन्ते। को भवतां पाटलिपुत्रमगच्छत्। अगमदिति वा॥ तथा लिप्स्यमानात् सिद्धावपि। यो भवतां भिक्षां ददाति दास्यति दाता वा स स्वर्गलोकं याति यास्यति याता वा। यो भवतां भिक्षामदात् स स्वर्गलोकमगमदिति। एवमन्येऽप्यनुमर्त्तव्याः॥

## पञ्चम्यनुमतौ॥ १८॥

कर्त्तुमिच्छतोऽनुज्ञानुमतिः। सा च वर्त्तमानभविष्यद्विषयैव। अनुमतौ वर्त्तमानाद्धातोः पञ्चमी भवति। एवं कुरु। कटं कुरु। तृणं छिन्द्धि। भज क्षमाम्। कुरु दयाम्॥

## समर्थनाशिषोश्च॥ १९॥

परैरशक्यस्य वस्तुनोऽध्यवसायः समर्थना। इष्टार्थस्याशंसनमाशीः। समर्थनाशिषोश्च वर्त्तमानाद्धातोः पञ्चमी भवति। पर्वतमप्युत्पाटयानि॥ समुद्रमपि शोषयाणि। कश्चिदाह। समुद्रः शोषयितुमशक्यः। स आह। समुद्रमपि शोषयाणीति समर्थयति मतमस्य॥ आशिषि च। जीवतु भवान्। नन्दतु भवान्। अपि शिरसा पर्वतं भिन्द्यात्। अपि सिञ्चेन्मूलसहस्रमिति विधौ सप्तमी। अपिशब्दोऽत्र सम्भावने प्रयोगतश्चेति सिद्धम्॥ नन्विष्टाशंसनमपि प्रार्थनमेव। सत्यम्। आशीर्विभक्त्या बाधिता पञ्चमी यथा स्यादिति वचनम्॥

## विध्यादिषु सप्तमी च ॥ २० ॥

विध्यादिषु वर्त्तमानाद्धातोः सप्तमी भवति पञ्चमी च । विधिरज्ञातज्ञापनमेव । कटं कुर्य्यात् । कटं करोतु भवान् ॥ यत्र प्रत्याख्याने प्रत्यवायस्तन्निमन्त्रणम् । इह भुञ्जीत । इह भुङ्क्तां भवान् ॥ यत्र प्रत्याख्याने कामचारस्तदामन्त्रणम् । इहासीत । इहास्तां भवान् ॥ सत्कारपूर्वको व्यापारोऽध्येषणम् । माणवकमध्यापयेद् अध्यापयतु भवान् ॥ निरूपणा सम्प्रश्नः । किं नु खलु भो व्याकरणमधीयीय । उत च्छन्दोऽधीयीय । किं नु खलु भो व्याकरणमध्ययै । उत छन्दोऽध्ययै ॥ याच्ञा प्रार्थना । लभेय भिक्षाम् । देहि मे भिक्षाम् ॥ प्रैष्यप्राप्तकालयोरपि सप्तमी पञ्चमी स्यादेवेति मतम् । प्रेषितस्त्वं ग्रामं गच्छेः । ग्रामं गच्छ । प्राप्तस्ते कालः कटकरणे । कटं कुर्य्यात् कटं करोतु भवान् ॥ कथं विदध्यात् । निमन्त्रयेत् । आमन्त्रयेत् । अधीच्छेत् । संपृच्छेत् । प्रार्थयेत् । क्रियारूपेषु विध्यादिषु तयोर्विधानात् । यदा तु प्रकृत्यर्थस्य न कर्त्तव्यता तदा विदधातीत्यादयः सिद्धाः ॥

## क्रियासमभिहारे सर्वकालेषु मध्यमैकवचनं पञ्चम्याः ॥ २१ ॥

क्रियायाः समभिहारः पौनःपुन्यं भृशार्थो वा । क्रियासमभिहारे वर्त्तमानाद्धातोः सर्वक्रियाकालेषु मध्यमैकवचनं भवति पञ्चम्याः । लुनीहि लुनीहि । इत्येवायं लुनाति । लुनीतः । लुनन्ति । लुनासि । लुनीथः । लुनीथ ।

लुनामि। लुनीवः। लुनीमः। अलुनात्। लविष्यति॥ अधीष्वाधीष्व। इत्येवायमधीते। अध्यैत। अध्येष्यते॥ सर्वक्रियाकालेष्विति वचनात्संख्याविशेषो न गम्यत इत्यनुप्रयोगः। प्रत्यासत्तेस्तेनैव धातुना कारकेणेति सुखार्थमेवेदम्। अन्यथा। एवमसौ त्वरावान् यदन्यानपि प्रेरयन् क्रियां करोतीति विवक्षया सिध्यति॥ तथा। लुनीत लुनीत। इत्येवायं यूयं लुनीथ। अधीध्वमधीध्वमित्येवायं यूयमधीध्वे॥ तथा भ्राष्ट्रमट। मठमट। खदूरमट। स्थाल्यपिधानमट। इत्येवायमटतीत्यादयो विवक्षाः॥

## मायोगेऽद्यतनी॥ २२॥

माशब्देन योगे धातोरद्यतनी भवति। मा कार्षीत्। मा भवान् पाक्षीत्॥ कथं मा भवतु। तस्य पापं मा करिष्यतीति निरनुबन्धग्रहणात्॥ ङानुबन्धमायोगे न स्यादिति केचित्॥ वर्त्तमानभविष्यद्विषयाणां बाधकोऽयम्॥

## मास्मयोगे ह्यस्तनी च॥ २३॥

मास्मशब्देन योगे धातोर्ह्यस्तनी भवति। चकाराद्यतनी च। मा स्म करोत्। मा स्म कार्षीत्॥ व्यस्तेऽपीच्छन्ति केचित्। स्म करोन्मा॥ पृथग्योगात् केवलमायोगे न स्यात्॥

## वर्त्तमाना॥ २४॥

ति तस् अन्ति। सि थस् थ। मि वस् मस्॥ ते आते अन्ते। से आथे ध्वे। ए वहे महे॥ इमानि वचनानि

वर्त्तमानसञ्ज्ञकानि भवन्ति ॥ वर्त्तमानाप्रदेशाः । सम्प्रति वर्त्तमाना [का० ३ १ ११] इत्येवमादय ॥

## सप्तमी ॥ २५ ॥

यात याताम युस् । यास यातम् यात । याम याव याम ॥ ईत ईयाताम ईरन । ईथास् ईयाथाम ईध्वम । ईय ईवहि ईमहि ॥ इमानि वचनानि सप्तमीसञ्ज्ञकानि भवन्ति ॥ सप्तमीप्रदेशा । विध्यादिषु सप्तमी च का० ३ १ २०] इत्येवमादयः ॥

## पञ्चमी ॥ २६ ॥

तु ताम अन्तु । हि तम त । आनि आव आम ॥ ताम आताम अन्ताम् । स्व आथाम् ध्वम । ऐ आवहै आमहै ॥ इमानि वचनानि पञ्चमीसञ्ज्ञकानि भवन्ति ॥ पञ्चमीप्रदेशा । पञ्चम्यनुमतौ [का० ३ १ १८] इत्येवमादय. ॥

## ह्यस्तनी ॥ २७ ॥

दि ताम् अन् । सि तम त । अम व म ॥ त आताम् अन्त । थास् आथाम् ध्वम् । इ वहि महि ॥ इमानि वचनानि ह्यस्तनीसञ्ज्ञकानि भवन्ति ॥ ह्यस्तनीप्रदेशा । माश्मयोगे ह्यस्तनी [का० ३ १ २३] इत्येवमादय ॥

## एवमेवाद्यतनी ॥ २८ ॥

एवमेवाद्यतनी भवति ॥ अद्यतनीप्रदेशा । मायोगेऽद्यतनी [का० ३ १ २७] इत्येवमादय ॥

## परोक्षा ॥ २९ ॥

अट् अतुस् उस्। थल् अथुस् अ। अट् व म ॥ ए आते इरे। से आथे ध्वे। ए वहे महे ॥ इमानि वचनानि परोक्षासंज्ञकानि भवन्ति ॥ परोक्षाप्रदेशाः। परोक्षा [का० ३. १. १२] इत्येवमादयः ॥

## श्वस्तनी ॥ ३० ॥

ता तारौ तारस्। तासि तास्थस् तास्थ। तास्मि तास्वस् तास्मस् ॥ ता तारौ तारस्। तासे तासाथे ताध्वे। ताहे तास्वहे तास्महे ॥ इमानि वचनानि श्वस्तनीसंज्ञकानि भवन्ति ॥ श्वस्तनीप्रदेशाः। भविष्यति भविष्यन्त्याशीः श्वस्तन्यः [का० ३. १. १५] इत्येवमादयः ॥

## आशीः ॥ ३१ ॥

यात् यास्ताम् यासुस्। यास् यास्तम् यास्त। यासम् यास्व यास्म ॥ सीष्ट सीयास्ताम् सीरन्। सीष्ठास् सीयास्थाम् सीध्वम्। सीय सीवहि सीमहि ॥ इमानि वचनान्याशीःसंज्ञकानि भवन्ति। आशीःप्रदेशा। आशिषि च परस्मै [का० ३. ५. २२] इत्येवमादयः ॥

## स्यसंहितानि त्यादीनि भविष्यन्ती ॥ ३२ ॥

धातोः परापि स्येन संहितानि त्यादीनि भविष्यन्तीसंज्ञकानि भवन्ति। स्यति स्यतस् स्यन्ति। स्यसि स्यथस् स्यथ। स्यामि स्यावस् स्यामस् ॥ स्यते स्येते स्यन्ते। स्यसे स्येथे स्यध्वे। स्ये स्यावहे स्यामहे। भविष्यन्ती-

प्रदेशाः । भविष्यति भविष्यन्त्यादीनि, शकत्यः [का० ३.१.२४] इत्येवमादयः ॥

## स्यादीनि क्रियातिपत्तिः ॥ ३३ ॥

धातोः पराणि स्येन संहितानि स्यादीनि क्रियातिपत्तिसंज्ञकानि भवन्ति । स्यत् स्यताम् स्यन् । स्यस् स्यतम् स्यत । स्यम् स्याव स्याम ॥ स्यत स्येताम् स्यन्त । स्यथास् स्येथाम् स्यध्वम् । स्ये स्यावहि स्यामहि ॥ क्रियातिपत्तिप्रदेशाः । अड् धात्वादिर्ह्यस्तन्यद्यतनीक्रियातिपत्तिषु [का० ३. ८. १५] इत्येवमादयः ॥
एताः पूर्वाचार्यप्रसिद्धाः सञ्ज्ञा अन्वर्था इह गम्यन्ते ॥

## षडाद्याः सार्वधातुकम् ॥ ३४ ॥

षण्णां विभक्तीनामाद्या वर्तमानासप्तमीपञ्चमीह्यस्तन्यः सार्वधातुकसञ्ज्ञा भवन्ति ॥ सार्वधातुकप्रदेशाः । जुहोत्यादीनां सार्वधातुके [का० ३. ३. ८] इत्येवमादयः ॥
॥ इति दीर्घसिंह्यां वृत्तावाख्याते प्रथमः पादः समाप्तः ॥

---

## प्रत्ययः परः ॥ १ ॥

प्रतीयते येनार्थः स प्रत्यय इति रूढिः । यथाप्रत्ययात्र धर्मं क्रियत इति प्रकृतिः । प्रकृतेः परः प्रत्ययो वेदितव्यः । वृक्षः । भिक्षुकः । पाचकः । खट्वा । औपगवः । जुगुप्सते । गोपायति । कर्त्ता । कर्त्तव्यः ॥ अनियमे प्राप्ते परिभाषेयं विध्यङ्गशेषभूता वा ॥

## गुपतिज्किद्भ्यः सन् ॥ २ ॥

गुप्तिज्किद्भ्य सन् परो भवति स्वार्थे । जुगुप्सते माम् । तितिक्षते तपस्तापस. । विचिकित्सति मे मन । चिकित्सत्यातुर वैद्य. । रिपु र्चिकित्सति । चिकित्स्यानि चेत्रे तृणानि ॥

गुपो बधेश्च निन्दाया क्षमायां च तथा तिजः ।
संशये च प्रतीकारे कित. सन्नभिधीयते ॥

अकारोच्चारण किम् ? स्वरादेर्द्वितीयस्य [का० ३. ३.२] इति द्विर्वचनार्थम् । तेनार्थान् प्रतोपिपति ॥

## मान्बध्दान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥३॥

मानादिभ्य सन् परो भवति स्वार्थे । दीर्घश्चैषा-मभ्यासस्येतो भवति । मीमांसते । बीभत्सते । दीदांसते । शीशांसते । अभ्यासविकारेष्वपवादो नोत्सर्गं बाधते ॥ कथम् अवदानम् । निशानमिति चेत्, द्यतेश्च शुटा सिद्धम् ॥ चौरादिकेन मानः । मानयति ॥ दान् शान् उभयम् । कित्परस्मै ॥

## धातोर्वा तुमन्तादिच्छतिनैककर्तृकात् ॥ ४ ॥

वा तुमन्तो यस्येति विग्रहः । वा तुमन्ताद्धातोरिच्छ-तिनैककर्तृकात् सन् परो भवति । कर्तुमिच्छति । चिकी-र्षति । भोक्तुमिच्छति । बुभुक्षते ॥ सना धोतितत्वादि-च्छेरप्रयोगः । केचित् सनि चानिटि [का० ३. ५. ७] इति ज्ञापकात् तुमविषयादित्याहुः ॥ धातोरिति किम् ?

प्राचिकीर्षत्॥ तुमन्तादिति किम्? भोजनमिच्छति॥ इच्छायामिति सिद्ध एककर्तृकादिति स्पष्टार्थम्॥ इच्छातनमात्मन भवति स्वात्मनि क्रियाविरोधात्॥ कथं नदीकूलं पिपतिषति। श्वा मुमूर्षति। यथा वाक्यं तथेदं विवक्षयेति मतम्॥

## नाम्न आत्मेच्छायां यिन्॥ ५॥

नाम्न आत्मेच्छायामर्थे यिन् परो भवति। पुत्रमिच्छति। पुत्रीयति। एवं घटीयति॥ आत्मशब्दोऽत्राध्यात्मवचन एव मन्दधियां सुखार्थं। भ्रातुः पुत्रमिच्छति। महान्तं पुत्रमिच्छति। आत्मनः पुत्रमिच्छतीति सापेक्षत्वात्। आत्मपुत्रीयतीति गुणार्थत्वात्॥ इच्छया नाम्नः सम्बन्धाद् द्वाविच्छतीत्यत्र न स्यात् सापेक्षत्वात्॥ व्यवस्थितवासरणाद् मान्ताव्ययाभ्यां न स्यात्। किमिच्छति। स्वरिच्छति॥

## काम्य च॥ ६॥

नाम्न आत्मेच्छायामर्थे काम्यः परो भवति। चकाराद्यिंश्च। एतच्चोत्तरार्थमेवानन्तरः काम्यो माभूदिति। पुत्रमिच्छति। पुत्रकाम्यति। इदं काम्यति। स्वः काम्यति॥

## उपमानादाचारे॥ ७॥

उपमानान्नाम्न आचारेऽभिधेये यिन् परो भवति। पुत्रमिवाचरति। पुत्रीयति माणवकम्। माणवकादिभिश्च

द्वितीया नोत्तार्थेति ॥ आधारादपि स्याद् निरपेक्षत्वात्।
कुट्यामिवाचरति। कुटीयति प्रासादे ॥

## कर्त्तुरायिः सलोपश्च ॥ ८ ॥

कर्त्तुरुपमानान्नाम्न आचारेऽभिधेय आयिः परो भवति सलोपश्च यथासम्भवम्। श्येन इवाचरति। श्येनायते। एवं सारसायते। ओजायते। अप्सरायते। पयायते। पयस्यते। वाशब्दस्येष्टार्थत्वात् ॥ आयेश्च लोपः। गर्दभ-इवाचरति। गर्दभति। अश्वतीति मतम्॥ कथं गल्भते। क्लीबते। होडते। एते आत्मनेपदिनः। प्रत्ययान्तत्वादामिष्यत एव ॥

ओजसोऽप्सरसो नित्यं पयसो तु विभाषया।
आयिलोपश्च विज्ञेयो न चाश्वो गर्दभस्यपि ॥

तथा च्व्यर्थे भृशादिस्तसोर्लोपश्चेति। अभृशो भृशो भवति। भृशायते। एवम् उन्मनायते। दुर्मनायते ॥ वेहत्। वेहायते ॥ अश्वत्। अश्वायते ॥ वावचनाच्विरपि। भृशी भवति। अभृशो यो भृशी भवति स भृश इवाचरति। सादृश्यादभेदो वस्तुन इति मतम्। तल्लोपेष्टिरिति ॥ तथा डाज्लोहिता-दिभ्यश्च्व्यर्थे। पटपटायति पटपटायते। लोहितायति। लोहितायते। यजादिषु पाठ इष्यते॥ कष्टाय कर्मणे क्रामति। कष्टायते। एवं पापायते। कक्षायते। सत्रायते। गहनायते ॥ पापवृत्तिभ्योऽन्यत्र न भवति। कष्टाय तपसे क्रामति॥ रोमन्थं वर्त्तयति। रोमन्थायते गौः। हनु-चलन एवेह न स्यात्। कीटो रोमन्थं वर्त्तयति ॥ बाष्प-

मुद्रमति । बाष्पायते। एवमुष्मायते । फेनायते॥ सुखादीनि वेदयते । सुखं वेदयते । सुखायते । एवं दुःखायते॥ शब्दादीनि करोति । शब्दं करोति । शब्दायते । एवं वैरायते । कलहायते॥ नमस्तपोवरिवसश्च यिन् । नमस्करोति । नमस्यति देवान । एव तपस्यति शत्रून् । वरिवस्यति गुरून् ॥ चित्रङ् आश्चर्ये । आश्चर्यं चित्रं करोति । चित्रीयते ॥ कण्ड्वादिभ्यो यन् । कण्डूञ् । कण्डूं करोति । कण्डूयति । कण्डूयते ॥ महीङ् । महीयते । इत्यादयोऽप्यनुसर्त्तव्याः । एतत्सर्वं वाशब्देन बहुलार्थेन वा सिद्धम् ॥

## इन् कारितं धात्वर्थे ॥ ९ ॥

धात्वर्थे क्रियानाम्न इन् परो भवति धात्वर्थे स च कारितसञ्ज्ञक । हलि कलि गृह्णाति । हलयति । कलयति । एव कृतयति । वर्णयति । त्वचयति ॥ तूस्तानि विहन्ति । वितूस्तयति ॥ वस्त्रं समाच्छादयति । संवस्त्रयति ॥ वर्मणा सन्नह्यति । संवर्मयति ॥ चूर्णैरवध्वंसते । अवचूर्णयति ॥ तत्करोति । तदाचष्टे । मुण्डं करोति । मुण्डयति । एवं मिश्रयति श्लक्ष्णयति । लवणयति । सूत्रयति । पयो व्रतयति । पयो भुङ्क्ते इति गम्यते । इयमन्नं व्रतयति । भुङ्क्त इत्यर्थः ॥ सत्यमाचष्टे । सत्यापयति एवम् अर्थापयति । वेदापयति ॥ प्रियमाचष्टे । प्रापयति । आख्यानमाच ॥ तेनातिक्रामति । हस्तिनातिक्रामति । अतिहस्तयति ॥ कर्तृकरणार्थे वीणयोपगायति । उपवीणयति । तूलैरनुकुष्णाति । अनुतूलयति । श्लोकैरुपस्तौति । उप

श्लोकयति । सेनयाभियाति । अभिषेणयति ॥ कदाचिद्-दर्शने । रूपं पश्यति । निरूपयति । बहुलमेतन्निदर्शनम् ॥
तथा । इनङ् अङ्गनिरसनेऽपि । हस्तौ निरस्यति । हस्तयते ॥ पादौ निरस्यति । पादयते ॥ एवं पुच्छमुत्क्षिपति । उत्पुच्छयते गौः ॥ पुच्छं परिक्षिपति । परिपुच्छयते ॥ एवं भाण्डानि समाचिनोति । सम्भाण्डयते वणिक् ॥ चीवरं सम्मार्जयति परिदधाति वा । सञ्चीवरयते भिक्षुः ॥ दिङ्मात्रमिदं गणकारवचनादभ्यूह्यम् ॥

## धातोश्च हेतौ ॥ १० ॥

हेतुशब्देन हेतुकर्तृव्यापारोऽभिधीयते । धात्वर्थं यः करोत्यन्यः । हेतुकर्तृव्यापारे यत्तं मानाद्धातोरिन् परो भवति स च कारितसंज्ञकः । कुर्वन्तं प्रयुङ्क्ते । कारयति ॥ पचन्तं प्रयुङ्क्ते । पाचयति ॥ तथा भिक्षां वासयति । कारीषोऽध्यापयति ॥

तथा कथकः कंसं घातयति । सीतां हारयति । राजानमागमयति तथा च किं गतेन हतः कंस इति लोकविवक्षा ॥ तथा रात्रिं विवासयति । विपूर्वो वसिरतिक्रमे ॥ उज्जयन्याः प्रस्थितो माहिष्मत्यां सूर्यमुद्गमयति । तथा पुष्येण चन्द्रं योजयति ॥

## चुरादेश्च ॥ ११ ॥

चुर् इत्येवमादिभ्य इन् परो भवति । स्वार्थे स च कारितसंज्ञकः । चोरयति । चिन्तयति । कारितप्रदेशाः ।

कारितस्यानामिड्विकरणे [ का० ३.६.४४ ] इत्येव माद्य ॥

इनि लिङ्गस्यानेकाक्षरस्यान्त्यस्वरादेर्लोपः॥ १२ ॥

स्वराणां मध्ये योऽन्त्यस्वरादिस्तस्यावयवस्येति विग्रहः। न क्षरति। न चलतीति प्रधानत्वादक्षरं स्वर उच्यते। इनि परे लिङ्गस्यानेकाक्षरस्य योऽवयवोऽन्त्यस्वरादिस्तस्य लोपो भवति। अतिहस्तयति। उपवीणयति॥ अनेकाक्षरस्येति किम्? वाचयति॥ श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्चेति गणकारवचनादेव। श्वेताश्वमाचष्टे। श्वेतयति॥ अश्वतरमाचष्टे। अश्वयति॥ गालोडितमाचष्टे। गालोडयति॥ ह्वरकमाचष्टे। ह्वरयति॥ तद्दिष्टेमेयःसु बहुलम्। पटिष्ठः। पटिमा। पटीयान्॥ मन्तुवन्तुवीणां लुक् चेति गणे। ईश्वन्तमाचष्टे। ईशयति। स्रुग्वन्तमाचष्टे। स्रुचयति। स्रग्विणमाचष्टे। स्रजयति॥

रमृदन्तो लघोर्व्यञ्जनादेः॥ १३ ॥

व्यञ्जनादेर्लिङ्गस्यानेकाक्षरस्य ऋतो लघो रमृदादेशो भवति। इनि परे। पृथु प्रथयति। मृदु म्रदयति। दृढ द्रढयति। कृश क्रशयति। भृश भ्रशयति। परिवृढ परिव्रढयति। एषामेवाभिधानम्॥

धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे ॥१४॥

क्रियायाः समभिहारः पौनःपुन्यं भृशार्थो वा। क्रियासमभिहारे वर्त्तमानाद्धातोर्व्यञ्जनादेर्यशब्दः परो भवति।

स च चेक्रीयितसंज्ञकः। पुनःपुनः पचति। पापच्यते। भृशं ज्वलयति। जाज्वल्यते॥ पाकादीनां प्रधानक्रियाणां पौनःपुन्यं प्रधानक्रियोपकारकाणामधिश्रयणादीनां च भृशता फलातिरेको वा। व्यवस्थितवाधिकाराद्देकस्वरात्। तेन पुनःपुनर्जागर्ति॥ ऋप्रभृतिभ्यश्च। अराय्यते। अटाट्यते। अश भोजने। अशाश्यते। प्रोर्णोनूयते। सोसूच्यते। मोमूत्र्यते॥ शुभिरुचिभ्यां न स्यात्। भृशं शोभते। भृशं रोचते॥ गत्यर्थात् कौटिल्य एव। भृशं पुनःपुनर्वा कुटिलं क्रामति। चंक्रम्यते॥ लुपादेर्गर्ह्यात्। भृशं पुनःपुनर्वा गर्हितं लुम्पति। लोलुप्यते। एवं सासद्यते। चञ्चूर्यते। जञ्जप्यते। जञ्जभ्यते। दन्दह्यते। दन्दश्यते। निजेगिल्यते॥

## गुपूधूपविच्छिपणिपनेराय॥ १५॥

गुपूप्रभृतिभ्य आय. परो भवति स्वार्थे। गोपायति। धूपायति। विच्छायति। पणायति। पनायते। पनिसाहचर्यात इह पणिः स्तुत्यर्थ इत्यन्ये॥ ऋतेरीयङ् वक्तव्यः। ऋतीयते। ङकार आत्मनेपदार्थः। नकारोऽगुणार्थः॥ कमेरिनङ् कारितं च॥ कामयते। व्यवस्थितवाधिकारादायादयोऽसार्वधातुके वा भवन्ति। गोपायिता। गोप्ता। गोपाया। गुप्तिः। ऋतीयिता। अर्तिता। कामयिता। कमिता॥

## ते धातवः॥ १६॥

ते सनाद्यन्ता धातुसंज्ञा भवन्ति। जुगुप्सते। मीमांसते। चिकीर्षति। पुत्रीयति। पुत्रकाम्यति। ग्लै नाशे।

उपवीणयति । पापच्यते । गोपायति । ऋतीयते । कामयते ॥ धातुत्वाद्धातुकार्य्यम् । अशुद्धक्रियत्वाद्वचनम् । इतरेषां गणेऽप्रसिद्धत्वात्सूत्रार्थम् ॥

## चकासकासप्रत्ययान्तेभ्य आम् परोक्षायाम् ॥ १७ ॥

चकासकासप्रत्ययान्तेभ्य आम् परो भवति परोक्षायाम । चकासाञ्चकार । कासाञ्चक्रे । लोलूयाञ्चक्रे । चिकीर्षाञ्चकार ॥ चकासग्रहणमनेकस्वरोपलक्षणम् ॥ तेन दरिद्राञ्चकार । चुलुम्पाञ्चकार ॥ प्रत्ययान्तग्रहणमेकस्वरार्थमपीति मतम् । तेन स्वमिवाचचार । स्वाञ्चकार ॥

## दययासश्च ॥ १८ ॥

दय । अय । आस । एभ्य आम् परो भवति परोक्षायां परभूतायाम् । दयाञ्चक्रे । पलायाञ्चक्रे । आसाञ्चक्रे ॥

## नाम्यादेर्गुरुमतोऽनृच्छः ॥ १९ ॥

नाम्यादेर्गुरुमतो धातोर्ऋच्छवर्ज्जितादाम् परो भवति परोक्षायां परतः । ईहाञ्चक्रे । उह्लाञ्चकार । उब्जाञ्चकार ॥ कथमियेष । उवोष । धातुसञ्ज्ञातो नित्य गरुमान् । अनृच्छ इति किम् ? आनर्च्छ ॥ व्यवस्थितवाधिकारात् प्रोर्णुनाव ॥

## उषविदजागृभ्यो वा ॥ २० ॥

उषादिभ्य आम् परो भवति वा परोक्षायां परतः ।

जागर्त्तिना सह्वरितो विदिरदादि.। उपाश्चकार। उवोष॥ विदाञ्चकार। विवेद॥ जागराञ्चकार। जजागार॥

## भीह्रीभृहुवां तिवच्च॥ २१॥

एषां॰ परोक्षायाम् आम परो भवति वा। स च तिरिव। तेन द्वित्वमित्वं चेति। बिभयाञ्चकार। बिभाय। जिह्रयाञ्चकार॥ जिह्राय। बिभराञ्चकार। बभार॥ जुहवाञ्चकार। जुहाव॥

## आमः कृञनुप्रयुज्यते॥ २२॥

आमन्तस्य धातोः कृञ् अनुप्रयुज्यते परोक्षायाम्। ईहाञ्चक्रे। चकासाञ्चकार॥ प्रयुज्यत इति स्पष्टार्थम्॥ आमो मकारस्यानुस्वारो भवत्यन्तत्वात्। तद्वर्गपञ्चमो वा स्यात्॥

## अस्भुवौ च परस्मै॥ २३॥

आमन्तस्य धातोरस्भुवावनुप्रयुज्येते परोक्षायाम्। परस्मैपदं चातिदिश्यते। ईहामास। ईहाम्बभूव॥ चकासामास। चकासाम्बभूव॥ अन्वाचयशिष्टोऽयमादेशोऽर्थस्यानातत्स्यात्। तेन। ईहामासे। ईहाम्बभूवे कन्या छात्रेण। ईहां व्यतिबभूवे छात्रः॥ अस्तेर्भू न स्यात्-विधानबलात् प्रकृतेश्च। अतश्चकार आदेशेन सह सम्बध्यते॥ विद आम् कृञ् पञ्चम्यां वा। विदाङ्करोतु। विदाङ्करवाणि। वेत्तु। वेदानि॥

## सिच् अद्यतन्याम्॥ २४॥

भिनत्ति ॥ प्रकृतिप्रत्ययोरर्थाभिधानेनैव साहाय्य कृत-मित्यत्र स्यात् ॥

## तनादेरुः ॥ ३७ ॥

तनादेर्गणादु विकरणसंज्ञकः परो भवति कर्त्तरि विहिते सार्वधातुके परे । तनोति । सनोति ॥

## ना क्र्यादेः ॥ ३८ ॥

क्र्यादेर्गणात् ना विकरणसंज्ञक परो भवति कर्त्तरि विहिते सार्वधातुके परे क्रीणाति । प्रीणाति ॥

स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुभ्यो नुश्चेति वा वक्तव्यम् । स्कुञ् क्र्यादिकः । शेषाः सौत्रा धातवः । स्तभ्नाति । स्तभ्नोति । स्तुभ्नाति । स्तुभ्नोति । स्कभ्नाति । स्कभ्नोति । स्कुभ्नाति । स्कुभ्नोति स्कुनाति । स्कुनोति ॥

## आन व्यञ्जनान्ताद्धौ ॥ ३९ ॥

क्र्यादेर्गणाद्व्यञ्जनान्तादानो विकरणसंज्ञकः परो भवति हौ परे । पुषाण । मथान ॥ व्यञ्जनान्तादिति क्रीणीहि ॥

## आत्मनेपदानि भावकर्मणोः ॥ ४० ॥

धातोरात्मनेपदानि भवन्ति भावकर्मणोरर्थयोः । आस्यते भवता । शय्यते भवता ॥ भाव. सत्ता । औत्सर्गिक मेकवचनमेवासंख्यत्वात् ॥ कर्मणि च । क्रियते कटो देव दत्तेन । मास आस्यते । क्रोशो गुडधानाभिर्भूयते । ओदन-पाकः शय्यते । नदी सुप्यते । कालाध्वभावदेशानां कर्म संज्ञा सिद्धेति ॥

## कर्मवत् कर्मकर्ता ॥ ४१ ॥

कर्म चासौ कर्ता चेति कर्मकर्ता कर्मवद्भवति ।
क्रियमाणं तु यत्कर्म स्वयमेव प्रसिध्यति ।
सुकरैः स्वैर्गुणैः कर्तुः कर्मकर्तेति तद्विदुः ॥

लूयते केदारः स्वयमेव । अभेदि कुशूलः स्वयमेव । कर्मवद्भावादात्मनेपदम् । वत्करणं स्वाश्रयार्थम् । तेन भावेऽपि । पच्यते ओदनेन स्वयमेव । त्यादित्वाच्च तव्यादिषु कर्मवद्भावः । कर्तव्यं कटेन स्वयमेव । ईषत्करः कटेन स्वयमेव ॥ कर्मकर्तृत्वभेदाद् भेदे तु न स्यात् । भिद्यमानः कुशूलः पात्राणि भिनत्ति । तथा । अन्योऽन्यमाश्लिष्यतः । आत्मानं हन्त्यात्मेति द्विविधो ह्यात्मा ॥ तथा । पचत्योदनं राध्यति स्वयमेव । धातुभेदात् ॥ गच्छति ग्राममसौ स्वयमेव । गम्यत इति न स्यात् क्रियाश्रयः कर्तैव केवलं कर्मेति भेदात् । तत्कार्यतापि कर्मकार्यम् तेन न द्वितीया धात्वधिकाराच्च ॥ कर्मकर्तेति किम्? साध्वसिश्छिनत्ति । साधु स्थाली पचति ॥ कथम् । सूते गाथा स्वयमेव । अचीकरत कटमसौ स्वयमेव । यचन प्रेषणादि च कर्तृस्थमेव । आत्मनेपदं तु फलवद्विवक्षयेति मतम् ॥ कार्यातिदेशोऽयम् ॥

## कर्तरि रुचादिङानुबन्धेभ्यः ॥ ४२ ॥

रुचादिभ्यो ङानुबन्धेभ्यश्च कर्तर्यभिधेय आत्मनेपदानि भवन्ति । रोचते । वर्धते ॥ शीङ् । शेते ॥ चक्षिङ् । आचष्टे ॥ ङच इत्यनुदात्तानुबन्धोपलक्षणम् ॥ ऊर्द्ध्वगा०त इत्युदात्तः । तद्विपरीतस्त्वनुदात्तः । उदात्तानुदात्तयोः°-

अत्र समाहारो लोकोपचारात् । तेन कृचप्रकारेभ्यो भवन्ति ॥ आदिग्रहणाच । निविशते । परिक्रीणीते ॥

नेर्विश ॥ १॥ परिव्यवेभ्यः क्रीञ् ॥२॥ विपराभ्यां जिः ॥३॥ आङो दाञ् अनात्मप्रसारणे ॥ ४ ॥ गमिन् चान्तौ ॥ ५ ॥ नु प्रच्छौ ॥६॥ अनुपरिभ्यां च क्रीड् ॥७॥ समोऽकूजने ॥८॥ अपस्किर ॥ ९ ॥ गन्धनुकरणे कृञ् ॥ १० ॥ आशिषि नाथ ॥ ११ ॥ शपथे शप ॥ १२ ॥ प्रतिज्ञानिर्णयप्रकाशनेषु स्था ॥१३॥ समवप्रविभ्यः ॥१४॥ उदोऽनूर्ध्वचेष्टायाम् ॥१५॥ उपान्मन्त्रे च ॥ १६ ॥ पथ्याराधनयोश्च ॥ १७ ॥ वा लिप्सायाम् ॥ १८ ॥ अकर्मकाच्च ॥ १९ ॥ समो गम्यृच्छिप्रच्छिस्वृश्रुविद्त्यर्तिदृशः ॥ २० ॥ उपसर्गादस्यत्यूहो वा ॥ २१ ॥ आङो यमहनौ स्वाङ्गकर्मकौ च ॥२२॥ व्युद्भ्यां तपः॥ २३॥ तपःकर्मकः ॥ २४ ॥ निसम्युपेभ्यो ह्वा ॥ २५ ॥ स्पर्धायामाङः ॥ २६ ॥ सूचनावक्षेपणसेवनसाहसयत्नकथोपयोगेषु कृञ् ॥२७ ॥ अधेः शक्तौ ॥२८॥ वेः शब्दकर्मकः ॥२९॥ अकर्मकाच्च ॥३० ॥ पूजोत्क्षेपणोपनयनज्ञानभृतिविगणनव्ययेषु नीङ् ॥ ३१ ॥ कर्तृस्थामूर्त्तकर्मकाच्च ॥ ३२ ॥ वृत्त्युत्साहस्फीतायनेषु क्रमः ॥३३॥ परोपाभ्याम् ॥३४॥ आङो ज्योतिरुद्गमे ॥३५॥ वेः पादाभ्याम्॥३६॥ प्रोपाभ्यामारम्भे॥३७॥ अनुपसर्गे वा ॥ ३८॥ निह्नवे ज्ञा ॥३९॥ अकर्मकाच्च ॥ ४० ॥ सम्प्रतिभ्यामस्मृतौ ॥४१ ॥ ज्ञानयत्नोपच्छन्दनेषु वदः ॥४२॥ अनोरकर्मकः ४३ ॥ विमतौ ॥ ४४ ॥ व्यक्त सहोक्तौ ॥४५ ॥ तयोर्वा ॥४६॥ अवाद्गिरः ॥४७॥ समः प्रतिज्ञायाम् ॥४८॥ किरादिभ्यस्सनन्ताः कर्मकर्तृस्थाः ॥ ४९ ॥ दृशः ॥ ५० ॥

अद्यतन्यां स्वरान्ताच्च वा ॥ ५१ ॥ ङ्नमो स्मयम् ॥ ५२ ॥ चरः सकर्मकाच्चरः ॥ ५३ ॥ समस्तृतीयायुक्तः ५४ ॥ दाण् सा चेच्चतुर्थ्यर्थे ॥ ५५ ॥ उद्वाहे उपयम ॥ ५६ ॥ गदि-रनि ॥ ५७ ॥ आशीरद्यतन्योश्च स्रुडः ॥ ५८ ॥ अगते भुजि ॥ ५९ ॥ समः क्ष्णुः ॥ ६० ॥ स्वराद्यन्तादुपसर्गाद्यज्ञ-पात्रेषु युजिर् ॥ ६१ ॥ हेतुकर्त्तृभीस्म्योरिन् ॥ ६२ ॥ प्रलम्भने गृधिवञ्च्योः ॥ ६३ ॥ पूजाभिभवयोश्च लातेः ॥ ६४ ॥ मिथ्यायोगेऽभ्यासे कृञ् ॥ ६५ ॥ अनियमे वाग्विहिंसा-शब्दार्थहसः ॥ ६६ ॥

## चेक्रीयितान्तात् ॥ ४३ ॥

चेक्रीयितान्ताद्धातोः कर्त्तर्य्यात्मनेपदानि भवन्ति । पापच्यते । लोलूयते ॥

## आय्यन्ताच्च ॥ ४४ ॥

आयिप्रत्ययान्ताच्च धातोः कर्त्तर्य्यात्मनेपदानि भवन्ति । हंसायते । पयायते । पयस्यते । अन्तग्रहणादायिलोपे न स्यादिति मतम् । तेन दरिद्रति । घटति ॥

## इन्ञयजादेरुभयम् ॥ ४५ ॥

इनन्तात् ञानुबन्धाद्यजादेश्चोभयपदं भवति कर्त्तरि । कारयति । कारयते । करोति । कुरुते । यजति । यजते । पचति । पचते । समाहारानुबन्धा ये ते यजादयः । अफलवति कर्त्तर्य्यात्मनेपदं च दृश्यते । यथा । वृक्षं परिवारयन्ते कण्टकाः । गोपयते व्रीहीनातप । तथ-

दर्शनं किं न धत्से । कमलवनोद्घाटनं कुर्वते ये । माण-वकं ब्रूते । मरीचीन्वितनुते । फलवति कर्त्तरि परस्मैपदं च दृश्यते । स कटं कारयति । स्वमङ्गं कण्डूयति । स्वं यज्ञं यजति । स्वं पुत्रमपवदति । स्वमश्वं जानाति । अपदान्तरयोल्येऽपि दृश्यते । तनोति शुभ्रं गुणसम्पदा यश इति ॥ यजेरपि विवक्षया भवितव्यमेवेति मतम् ॥ गणकारवचनप्रमाणार्थमिदम् ॥

## पूर्ववत् सनन्तात् ॥ ४६ ॥

सनः पूर्वो यो धातुस्तद्वत् । सनन्तादपि तत्पदं भवति । रुरोचिषते । अधिजिगांसते । पापचिषते । शिश्ये-नायिषते । पिपक्षति । पिपक्षते ॥

स्मृदृशौ च सनन्तौ तु ज्ञादौ श्रुरनाङ्प्रतिः ।
अननुज्ञाय विज्ञेयौ यथा सुस्मूर्षत इति ॥

## शेषात् कर्त्तरि परस्मैपदम् ॥४७॥

येभ्य आत्मनेपदमुक्तं ततोऽन्यः शेषः । शेषाद्धातोः कर्त्तरि परस्मैपदं भवति । भवति । अत्ति । जुहोति । दीव्यति । तुदति । रुणद्धि । विशति । पुत्रीयति । पुत्रकाम्यति । गोपायति ॥ पुनः कर्त्तरीति किम् ? भिद्यते कुशूलः स्वयमेव । नायं शब्दः कर्त्तरि ॥ कथम् अनुक-रोति । पराकरोतीति नित्यं वक्तव्यम् ॥ प्रतिक्षिपति । अभिक्षिपति । अतिक्षिपति । परस्मैपदमेव । तथा च प्रवहति । परिमृष्यति । विरमति । आरमति । परिर

मति। देवदत्तमुपरमति। नात्मनेपदम्। यजादेः कृपादेश गणकृतस्यानित्यत्वात् ॥

इति दौर्गसिंह्यां वृत्तावाख्याते द्वितीयः पादः समाप्तः ॥

---

## द्विर्वचनमनभ्यासस्यैकस्वरस्याद्यस्य ॥ १ ॥

धातोरवयवस्यानभ्यासस्यैकस्वरस्याद्यस्य द्विर्वचनं भवतीत्यधिकृतं वेदितव्यम्। पपाच। जुहोति ॥ वचनग्रहणं हि रूपे भवत इति स्थानित्वाशङ्कानिरासार्थम्। तेन जिघांसति। आटिटत्। यत्वकारितलोपप्रतिपत्तिगौरवं स्यात्। अनभ्यासस्येति किम्? जुगुप्सिषते। बोभूयिषते। प्रतिनिमित्तं द्विरुक्तिर्न स्यात् ॥ एकस्वरस्येति बहुव्रीहिः किम्? व्यञ्जनेन सह द्विर्वचनार्थम्। तेन दिदरिद्रासति ॥ कथम् इयाय। आर। एकस्यापि स्वरस्याद्यन्तवदुपचारात्। तथा। आट। अनेनिजुः। समुदायस्यापि द्विर्वचनमभ्यस्तकार्यं चेति ॥ कथं हन्त हन्तं परिपिपठिषति। ग्रामो ग्रामो रमणीयः। गृहे गृहेऽश्वाः। वीप्सायां वर्त्तमानस्य पदस्य लोकत एव द्विरुक्तिः सिद्धा ॥ तथा। परि परि त्रिगर्त्तेभ्यो वृष्टो देवः। परेर्वर्जने योग्ये विभाषैव ॥ तथा। उपर्युपरि ग्रामम्। अधोऽधो नगरम्। अध्यधि स्थापयति। उपर्यधोऽधीनां सामीप्य एव ॥ तथा। एकैकं जुहोति। आदेरेकस्य विभक्तिलुक् ॥ तथा। हा प्रिया मे गतगता नष्टनष्टा। सति सम्भवे पुंवद्भावोऽपि पीडायां गम्यमानायाम् ॥ तथा। पटुपटु। पटपटी।

पण्डितपण्डितः । पण्डितपण्डिता । सादृश्ये गुणवचनस्यागुणवचनस्यापि । भीतभीतः । चकितचकितः ॥ तथा प्रियंप्रियेण ददाति । सुखसुखेन पश्यति । यथाणिविषय एव । तथान्येऽप्यनुसर्त्तव्याः ॥ तथाभीक्ष्ण्ये । पचति पचतितराम् । पचति पचतितमाम् । गच्छति गच्छतितराम् । गच्छति गच्छतितमाम् । तमादयः पश्चात् ॥ तथा डाच्यव्यक्तानुकरणस्य च । पटपटाकरोति । पटपटायते ॥

## स्वरादेर्द्वितीयस्य ॥ २ ॥

येन नामाप्राप्तिन्यायेन पूर्वस्य बाधकोऽयम् । स्वरादेर्धातोर्द्वितीयस्यावयवस्यैकस्वरस्यानभ्यासस्य द्विर्वचनं भवतीत्यधिकृतं वेदितव्यम् । आशिशत् । अटाट्यते । अरिरिषति ॥ स्वरादेरिति किम् ? पापच्यते ॥ धातोरिति किम् ? आटतुः ॥ स्वरादेरिति कर्मधारयात्पञ्चम्या सिध्यति ॥ द्वितीयग्रहणमिहोपलक्षणम् । तेन शिष्टप्रयोगानुसारेण कण्ड्वादीनां तृतीयस्यापि । कण्डूयियिषति ॥ ईर्ष्यतेर्यिशब्दस्य सनो वा द्विर्वचनम् । ईर्ष्यियिषति । ईर्ष्यियिषति । सनोऽपि । ईर्ष्यिषिषति ॥ नामधातोराद्यस्य द्वितीयस्य तृतीयस्य क्रमेण युगपद्वा । पुपुत्रीयिषति । पुतित्रीयिषति । पुत्रीयियिषति । पुपुतित्रीयियिषति ॥ क्वचिद् द्वितीयतृतीययोरपि अशिश्वीयिषति ॥ अश्वीयियिषति ॥

## न नबदराः संयोगादयोऽये ॥ ३ ॥

स्वरादेर्धातोर्द्वितीयस्यावयवस्यैकस्वरस्यानभ्यासस्य न-

यदरा: संयोगादयो न द्विरुच्यन्ते । न तु ये परे । उन्दिदिषति । उज्जिजिषति । अड्डिडिषति ॥ अर्चिचिषति ॥ नामधातुष्वपि । इन्द्रीयितुमिच्छति । इन्दिद्रीयिषति । एवमन्येऽप्यनुमन्तव्याः ॥ अच इति किम् ? अरार्थते । अर्थमाख्यातवान् । आरर्थदित्यपि स्यात् ॥ कथं प्रोर्णोनूयते । नायं ये परतः । स्वरादाद्याद् द्वितीयोऽवयवो वचनाद्गम्यते ॥

## पूर्वोऽभ्यासः ॥ ४ ॥

धातोर्द्विरुक्तस्य यः पूर्वः सोऽभ्याससंज्ञो । भवति । पपाच । देहि ॥ अभ्यासप्रदेशा: । अभ्यासस्यादिर्व्यञ्जनमवशेष्यम् [ का० ३. ३. ८ ] इत्येवमादयः ॥

## द्वयमभ्यस्तम् ॥ ५ ॥

धातोरभ्यास इतरश्च द्वयमभ्यस्तसंज्ञं भवति । ददति । पेचतुः ॥ द्वयमिति किम् ? परस्मात्स्य माभूत् । अन्यथा जुह्वतीत्यत्राभ्यस्तस्य च [का० ३. ४ १५] इत्यभ्यासस्य सम्प्रसारणं न स्यात् ॥ अभ्यस्तप्रदेशाः । अभ्यस्तानामाकारस्य [का० ३ ४. ४२ ] इत्येवमादयः ॥

## जक्षादिश्च ॥ ६ ॥

जक्षादिरनभ्यस्तोऽप्यभ्यस्तसंज्ञो भवति । जक्षति । जाग्रति । दरिद्रति । चकासति । शासति ॥ पञ्चैते भाषायां व्यवस्थिता इति ॥

## चण्परोक्षाचेक्रीयितसनन्तेषु ॥ ७ ॥

ईयतुः । ईयुः । कृते द्विर्वचन इयो बाधकं यत्वमिति वचनम् । अगुण इति किम् ? इययिथ ॥

अस्यादेः सर्वत्र ॥ १८ ॥

परोक्षायां सर्वत्र गुणिन्यगुणे चाभ्यासस्यादेरस्य दीर्घो भवति । आटिथ । आटतुः ॥ अस्येति किम् ? इयेष । उवोष ॥ आदेरिति किम् ? पपाच ॥

तस्मान्नागमः परादिरन्तश्चेत्संयोगः ॥१९॥

तस्माद्दीर्घीभूतादभ्यासात् परादिर्नकारागमो भवति । धातोरन्तश्चेत् संयोगः स्यात् । परोक्षायां परतः । आनर्च्छ । आनर्च्छतुः । आनर्च्छुः । आनक्ष । आनक्षतुः । आनक्षुः ॥ तस्मादिति किम् ? आञ्छ । आञ्छतुः । आञ्छुः । नायमकारलोपस्य बाधको दीर्घः ॥ अन्तश्चेत् संयोग इति किम् ? आटतुः ॥

ऋकारे च ॥ २० ॥

तस्माद् दीर्घीभूतादभ्यासात्परादिर्नकारागमो भवति परोक्षायामृकारे च परतः । आनृधे । आनृधाते । आनृधिरे ॥ कथम् आरतुः । निमित्ताभावात् ॥

अश्नोतेश्च ॥ २१ ॥

तस्मात् दीर्घीभूतादभ्यासादश्नोतेश्च परादिर्नकारागमो भवति । परोक्षायां परतः । व्यानशे । व्यानशाते । व्यानशिरे ॥ श्नविकरणनिर्देशाद् अश्नातेर्न स्यात् । आशतुः ॥

भवतेरः ॥ २२ ॥

भवतेरभ्यासस्य परोक्षायामकारो भवति। बभूव। बभूवतुः। बभूवुः॥

निजिविजिविषां गुणः सार्वधातुके ॥ २३ ॥

निज्यादीनाम् अभ्यासस्य सार्वधातुके गुणो भवति। अयादिकारस्य। नेनेक्ति। नेनिज्यात्। वेवेक्ति। वेविज्यात्। अनेनेक्। अवेवेक्। वेवेष्टि। वेवेष्टु॥

भृञ्हाङ्माङामित्॥ २४ ॥

भृञ्हाङ्माङामभ्यासस्य सार्वधातुके पर इद् भवति। बिभर्त्ति। बिभृयात्। जिहीते। अजिहीत। मिमीते। अमिमीत॥

अर्त्तिपिपर्त्योश्च ॥ २५ ॥

अनयोरभ्यासस्य इद् भवति सार्वधातुके परे। इयर्त्ति। इयृयात्। पिपर्त्ति। पिपृयात्। पृथग्योगो वैचित्र्यार्थः।

सन्यवर्णस्य ॥ २६ ॥

सनि परे योऽभ्यासस्तस्यावर्णस्य इद् भवति। पिपक्षति। पिपासति॥ सन्यभ्यासस्येति किम्? पापचिषते॥

उवर्णस्य जान्तःस्थापवर्गपरस्यावर्णे ॥ २७ ॥

सनि परतो योऽभ्यासस्तस्योवर्णस्य जान्तःस्थापवर्गपरस्यावर्णे पर इद् भवति। जु इति सौत्रोऽयं धातुः। जिजावयिषति॥ यु। यियावयिषति। यियविषति। रु।

दिद्रावयिषति । लू । लिलावयिषति ॥ पूञ् । पिपावयिषति । पूङ्स्तु । पिपवयिषते ॥ भू । बिभावयिषति ॥ उवर्णस्येति किम् ? बोभवयिषति ॥ वचनमिदं ज्ञापनार्थम् । इनि यत्कृतं तत् सर्वस्थानिवदिति तेन जुहावयिषतीत्यादयः सिद्धाः ॥

श्रुस्रुद्रुप्रुप्लुच्युङां वा वक्तव्यम् । शिश्रावयिषति । शुश्रावयिषति । सिस्रावयिषति । सुस्रावयिषति । दिद्रावयिषति । दुद्रावयिषति । पिप्रावयिषति । पुप्रावयिषति । पिप्लावयिषति । पुप्लावयिषति । चिच्यावयिषति । चुच्यावयिषति ॥

## गुणश्चेक्रीयिते ॥ २८ ॥

चेक्रीयिते योऽभ्यासस्तस्य गुणो भवति । चेचीयते । पोपूयते । बेभिदिता ॥ वर्णाश्रयत्वाद् नामिन एव ॥

## दीर्घोऽनागमस्य ॥ २९ ॥

चेक्रीयिते योऽभ्यासस्तस्यानागमस्य दीर्घो भवति । पापच्यते ॥ अनागमस्येति किम् ? वनीवच्यते । वरीवृच्यते ॥ अनागमस्येति वचनमभ्यासविकारे अपवादो नो नागमं बाधत इति ज्ञापनार्थम् । तेन नोनाम्यते ॥

## वन्चिस्रंसिध्वंसिभ्रंसिकसिपतिपदिस्कन्दामन्तो नी ॥ ३० ॥

एषां चेक्रीयिते योऽभ्यासस्तस्यान्तो नीर्भवति । वनीवच्यते । सनीस्रस्यते । दनीध्वस्यते । बनीभ्रस्यते ।

चनीकस्यते। पनीपत्यते। पनीपद्यते। चनीस्कद्यते॥ दीर्घविधानाद्गुणो नागद्दते॥

## अतोऽन्तोऽनुस्वारोऽनुनासिकान्तस्य॥ ३१॥

अनुनासिकान्तस्य धातोश्चेक्रीयिते परे योऽभ्यासस्तस्यातोऽन्तोऽनुस्वारो भवति। बम्भण्यते। बम्भणिता। यंयम्यते। यंयमिता॥ तकार उच्चारणार्थः॥ प्रतिपदोक्तग्रहणात्। बाभाम्यते॥ पुनरन्तग्रहणमनुस्वारस्यापि स्थित्यर्थम्॥

## जपादीनां च॥ ३२॥

जप इत्येवमादीनां चेक्रीयते योऽभ्यासस्तस्यातोऽन्तोऽनुस्वारो भवति। जञ्जप्यते। जञ्जपिता। जञ्जभ्यते। जञ्जभिता॥ जप। जभ। दह। दन्श। भन्ज। पश। षडेते जपादयः॥

## चरफलोश्च परस्यास्य॥ ३३॥

चरफलोश्चेक्रीयिते योऽभ्यासस्तस्यातोऽन्तोऽनुस्वारो भवति। परस्यास्योच्च भवति। चञ्चूर्यते। चञ्चुरिता। पम्फुल्यते। पम्फुलिता।

## ऋमतो रीः॥ ३४॥

ऋमतो धातोश्चेक्रीयिते योऽभ्यासस्तस्यातोऽन्तो रीर्भवति। नरीनृत्यते। परीपृच्छ्यते।

## अलोपे समानस्य सन्वल्लघुनीनि चण् परे॥ ३५॥

समानसंज्ञकस्यालोपे सति लघुनि धात्वक्षरेऽभ्यासस्य

## सनि मिमीमादारभलभशकपतपदामिस् स्वरस्य ॥ ३९ ॥

मिङादीनां स्वरस्य सनि परे इसादेशो भवति । अभ्यासलोपश्च डुमिङ् । मित्सति । मीञ्, मीङ् वा । प्रमित्सति । प्रमित्सते ॥ मा इति मेङ्माङोरपि ग्रहणम् । प्रमित्सते । उपमित्सते ॥ दासंज्ञकः । दित्सति । धित्सति । रभ । आरिप्सते । लभ । आलिप्सते ॥ शक्लृ शक । शिक्षति ॥ पत्लृ पित्सति ॥ पद पित्सते ॥ कथं पिपतिषति । सनीति इसकारोऽयं निर्देशो व्यतिवेति ॥ प्रतिरित्सतीति वक्तव्यम् । प्रतिपूर्वो राधो हिंसायामिति ॥

## आप्नोतेरीः ॥ ४० ॥

आप्नोतेः स्वरस्य ईर्भवति सनि परेऽभ्यासलोपश्च । ईप्सति ॥ ऋधिज्ञप्योरीरीतौ वक्तव्यौ सनि सकारादौ ईर्त्सति । ज्ञीप्सति ॥

## दन्भेरिच्च ॥ ४१ ॥

दन्भेः स्वरस्य इद् भवति । चकारादीच । सनि सकारादौ । अभ्यासलोपश्च । धिप्सति । धीप्सति ॥ मुचोऽकर्मकस्येद्वा वक्तव्यः । मोक्षते वत्सः स्वयमेव । मुमुक्षते वत्सः स्वयमेव । आनुकूल्यात् कर्मकर्तृत्वम् ॥

## दिगि दयतेः परोक्षायाम् ॥ ४२ ॥

देङः परोक्षायां दिग्यादेशो भवति । अभ्यासलोपश्च ।

तिपा धातुरेव निर्दिश्यते । दिग्ये । दिग्यात । दिग्यिरे ॥ दश दान इत्यस्याभाव्यवधानात् । दधाक्ष ॥

॥ इति दौर्गसिंह्यां वृत्तावाख्याते तृतीयः पादः समाप्तः ॥

---

## सपरस्वराया: सम्प्रसारणमन्तःस्थायाः ॥१॥

सह परेण धातुस्वरेणान्तःस्थायाः सम्प्रसारणं भवत्यधिकृतं वेदितव्यम् । परेणैव सस्वरत्वं लोकतः सिद्धम् । परग्रहणं स्पष्टार्थम् । सम्प्रसारणं इतोऽन्तःस्थानिमित्ता नित्यत्वेन स्थिता अन्वाख्यास्यन्ते ॥ अन्तःस्थाग्रहणमभ्यासविकारबाधनार्थम् । तेन विव्यथे । विव्याधे । इत्यादीनां यस्याभ्यासे सम्प्रसारणं सिद्धम् ॥

## ग्रहिज्यावयिव्यधिवष्टिव्यचिप्रच्छिव्रश्चिभ्रस्जीनामगुणे ॥ २ ॥

ग्रह्यादीनाम् अन्तःस्थायाः सपरस्वरायाः सम्प्रसारणं भवति । अगुणे प्रत्यये परे । गृह्यते । गृह्णाति । जीयते । जिनाति ॥ ऊयतुः । ऊयुः । न वायोरगुणे च [ का० ३. ४. ६] इति प्रतिषेधबाधनार्थं वेञो वयिरुच्यते ॥ विध्यते । विध्यति ॥ ऊशुः । उशन्ति ॥ विच्यते । विचति । कुटादित्वादगुणत्वम् । कथम् उरुव्यचाः । असुन् औणादिकत्वात् ॥ पृच्छ्यते । पृच्छति । कथं प्रश्नः । प्रश्नाख्यानयोः [ का० ४. ५. ८० ] इति वचनात् ॥ वृश्च्यते । वृश्चति । भृज्ज्यते । भृज्जति ॥ अगुण इति किम् ? यष्टा ।

## कारिते च संश्वयोः ॥ १३ ॥

श्वयतेः संश्वयोर्यत् कारितं तस्मिन् सम्प्रसारणं भवति वा । शुशावयिषति । शिश्वाययिषति । अशूशवत् । अशिश्वयत् ॥ इनि कृतस्य स्थानिवद्भावाच्छ्विर्वचनम् ॥

## ह्वयतेर्नित्यम् ॥ १४ ॥

ह्वयतेः संश्वयोर्यत् कारितं तस्मिन् नित्यं सम्प्रसारणं भवति । जुहावयिषति । अजूहवत् ॥ द्विर्वचननिमित्ते कारितव्यवधान एव यथा स्यादिति वचनम् । ह्वायकयितुमिच्छति । जिह्वायकयिषति । अजिह्वायकत् । इति ॥

## अभ्यस्तस्य च ॥ १५ ॥

ह्वयतेरभ्यस्तमात्रस्यान्तःस्थायाः सपरस्वरायाः सम्प्रसारणं भवति । जुहाव । जोहूयते । जुहूषति ॥

## द्युतिस्वाप्योरभ्यासस्य ॥ १६ ॥

द्युतिस्वाप्योरभ्यासस्य सम्प्रसारणं भवति । दिद्युते । देद्युत्यते । दिद्योतिषते । अदिद्युतत् । सुष्वापयिषति ॥ स्वापेरिनन्तस्य ग्रहणाद् न वञ्ादौ । तेन सिष्वापयिषति ।

## न सम्प्रसारणे ॥ १७ ॥

सम्प्रसारणे कृते पुनः सम्प्रसारणं न भवति । विध्यति । वेविध्यते । विव्याध । विविधतुः । विविधुः । संविव्यतुः । संविव्युः ॥ एकदेशविकृतस्यानन्यवद्भावाद् व्यक्तौ जातौ च वचनम् ॥

## वश्चेश्चेक्रीयिते ॥ १८ ॥

वशेर्यङि क्रीयिते परे सम्प्रसारणं न भवति । वावश्यते ॥

## प्रच्छादीनां परोक्षायाम् ॥ १९ ॥

प्रच्छिव्रश्चिभ्रस्जीनां परोक्षायां सम्प्रसारणं न भवति । पप्रच्छतुः । पप्रच्छुः । वव्रश्चतुः । वव्रश्चुः । बभ्रज्जतुः । बभ्रज्जुः ॥

## सन्ध्यक्षरान्तानामाकारोऽविकरणे ॥ २० ॥

सन्ध्यक्षरान्तानां धातूनामविकरणविषये आकारो भवति । धेट् । धाता ॥ ग्लै । ग्लाता । म्लै । म्लाता ॥ दो । दाता ॥ सुग्लः । सुम्लः ॥ उपसर्गे त्वातो डः स्यात् ॥ अन्तग्रहणं धातुसंज्ञाकाले सन्ध्यक्षरार्थम् । तेन चेता । स्तोता ॥ अविकरण इति किम् ? ग्लायति । म्लायति ॥

## न व्ययतेः परोक्षायाम् ॥ २१ ॥

व्येञो धातोः परोक्षायामाकारो न भवति । संविव्याय । संविव्ययिथ ॥ अगुणे सम्प्रसारणमस्त्येव ॥

## मीनातिमिनोतिदीङां गुणवृद्धिस्थाने ॥ २२ ॥

एषां गुणवृद्ध्योः प्रसङ्ग आकारो भवति । मीञ् । प्रमाता । प्रमापयति ॥ डुमिञ् । निमाता । निमापयति । दीङ् । उपदाता । उपदापयति । उपदायो वर्त्तते ॥ इडाभ्यां चेति घञ् स्यात् ॥ गुणवृद्धिस्थान इति किम् ? प्रमीयते ॥ वर्णान्तविधित्वादभ्यासस्य न स्यात् । प्रमेमीयते ॥

## स्वपिवचियजादीनां यण्परोक्षाशीःषु ॥३॥

स्वपिवचोर्यजादीनामन्तःस्थायाः सपरस्वरायाः सम्प्रसारणं भवति । यणि परोक्षायामाशिषि चागुणे परतः । सुप्यते । सुषुपतुः । सुप्यात् ॥ उच्यते । ऊचतुः । उच्यात् ॥ इज्यते । ईजतुः । इज्यात् ।

यजी वपी वहश्चैव वेञ् व्येञौ ह्वयतिस्तथा ।
वदश्वौ श्वयतिश्चैव नव यजादयः स्मृताः ॥

## परोक्षायामभ्यासस्योभयेषाम् ॥ ४ ॥

उभयेषां यजादिस्वपादीनामभ्यासस्यान्तःस्थायाः सपरस्वरायाः सम्प्रसारणं भवति । परोक्षायां परतः । गृह्योऽयम् । जग्राह । जग्रहिथ । जिज्यौ । जिज्यिथ । उवाय । उवयिथ । स्वपादीनां च । सुष्वाप । सुष्वपिथ । उवाच । उवचिथ । इयाज । इयजिथ । परोक्षायामिति किम् ? विवक्षति । यायज्यते ॥

## व्यथेश्च ॥ ५ ॥

व्यथेरभ्यासस्यान्तःस्थायाः सपरस्वरायाः सम्प्रसारणं भवति परोक्षायां परतः । विव्यथे । विव्यथाते । विव्यथिरे ॥ परोक्षायामिति किम् ? वाव्यथ्यते ॥

## न वाश्वयोरगुणे च ॥ ६ ॥

वेञ् । श्वि । इत्येतयोरभ्यासस्यान्तःस्थायाः सपरस्वरायाः सम्प्रसारणं न भवति । परोक्षायाम् अगुणे गुणिनि च । ववौ । वविथ । ववतुः । ववुः । शिश्वाय । शिश्व-

यिथ। शिश्वियतु। शिश्वियुः॥ अगुण, इति वचनाद् वेजोऽनभ्यासोऽपि गृह्यते॥ श्वयतेर्वा [का० ३ ४ १२] इति परस्य विभाषास्त्येव॥

## स्वपिस्यमिव्येञां चेक्रीयिते॥ ७॥

स्वपिस्यमिव्येञामप्राप्त सम्प्रसारणं भवति चेक्रीयिते परे। सोषुप्यते। सेसिम्यते। वेवीयते॥

## स्वापेश्चणि॥ ८॥

स्वापेरिनन्तस्य चणि परतः सम्प्रसारणं भवति। असूषुपत्। स्वापेरिनन्तस्येति किम्? स्वापमकारीत्। असुषुपत्॥

## ग्रहिस्वपिप्रच्छां सनि॥ ९॥

एषां सनि परे सम्प्रसारणं भवति। जिघृक्षति। सुषुप्सति। पिपृच्छिषति॥

## चायः किश्चेक्रीयिते॥ १०॥

चायश्चेक्रीयिते परे किर्भवति। चेकीयते॥

## प्यायः पिः परोक्षायाम्॥ ११॥

प्यायश्चेक्रीयिते परे परोक्षायां च पिर्भवति। पेपीयते। आपिप्ये। आपिप्याते। आपिप्यिरे॥

## श्वयतेर्वा॥ १२॥

श्वयतेश्चेक्रीयिते परे परोक्षायां च सम्प्रसारणं भवति वा। शोशूयते। शेश्वीयते। शुशाव। शुशुवतुः। शिश्वाय। शिश्वियतु॥

**सनि दीङः ॥ २३ ॥**

दीङः सन्याकारो भवति । उपदिदासते । नाम्यन्तानामनिटाम् [का० ३. ५. १७] इत्यगुणत्वाद् वचनम् ॥

**स्मिजिक्रीङामिनि ॥ २४ ॥**

एषामिनि परे आकारो भवति । विस्मापयते । जापयति । क्रापयति । अध्यापयति ॥ हेतुकर्तृभये स्मिङोऽभिधानात् । कुञ्चिकयैन विस्माययति । करणाद् भये न स्यात् ॥ भातिरिनन्तो हेतुभयेऽपि वर्तते । मुण्डो भापयते ॥ भीषिचिस्मि [का०४.५. ८२ ] इति वचनाद् भियः षान्तता । मुण्डो भीषयते ॥ विस्फुरणं विस्फारः । तं करोतीतीन् । विस्फारयति । विस्फोरयति । हेतुविवक्षायाम् इन् ॥ चप सान्त्वने चयनेऽपि वृत्तिः । चापयति । विजसु चाययति ॥ डुवपि प्रजनेऽपि । पुरोवातो गाः प्रवापयति ॥ वी प्रजने । प्रवाययति । गर्भं ग्राहयतीत्यर्थः ॥ तपः साधयति । धर्मं साधयतीति पारलौकिकेऽपि साधिना भवितव्यमेव ॥ षिधु गत्यामित्यनेन च । अन्नं सेधयतीति । ग्रामं सेधयतीति भवितव्यमेव ॥ सिध्यतिनापि । तपस्तापसं सेधयति । कस्त्वामुल्लापयते । श्येनो वर्तिकामुल्लापयते । लातेरेवायं प्रयोगः । विसंवादाभिभवयोर्लियः कारिते प्रयोगो नास्त्यनभिधानात् । कर्णाटरचम् । विलाता । विलेता । विलास्यते । विलेष्यते । विलाय । विलीय । लातेर्लियः प्रयोगोऽनेकार्थत्वाद्धातूनामिति ॥

## सृजिदृशोरागमोऽकारः स्वरात्परो धुटि गुणवृद्धिस्थाने ॥ २५ ॥

सृजिदृशोः स्वरात्परो धुडादौ प्रत्यये गुणवृद्धिस्थाने-ऽकारागमो भवति । स्रष्टा । अस्राक्षीत् । द्रष्टा । अद्राक्षीत् ॥ धुटीति किम् ? ससर्ज । ददर्श ॥ गुणवृद्धिस्थान इति किम् ? सृष्टः । दृष्टः ॥

योगविभागात् स्पृशादीनां वा । स्पृश । स्प्रष्टा । अस्प्राक्षीत् । मृश । म्रष्टा । अम्राक्षीत् ॥ कृष । क्रष्टा । अक्राक्षीत् । तृप । त्रप्ता । अत्राप्सीत् ॥ दृप । द्रप्ता । अद्राप्सीत् ॥ पक्षे स्पर्ष्टा । अस्पार्क्षीदित्यादि ॥

## दीङोऽन्तो यकारः स्वरादावगुणे ॥ २६ ॥

दीङोऽन्तो यकारो भवति । स्वरादावगुणे प्रत्यये परे । उपदिदीये । उपदिदीयाते । उपदिदीयिरे ॥ दीङोऽवयवत्वेन द्विर्वचनं स्यात् आत्वं च न स्यात् ॥

## आलोपोऽसार्वधातुके ॥ २७ ॥

धातोराकारस्य लोपो भवति । असार्वधातुके स्वरादावगुणे प्रत्यये परे । पपुः । तस्थुः । गोदः । संस्था ॥ असार्वधातुक इति किम् ?, यान्ति ॥ स्वरादाविति किम् ? ग्लायते ॥ अगुण इति किम ? दानम् ॥

## इटि च ॥ २८ ॥

धातोराकारस्य लोपो भवति । इटि परे । पपिथ । ददिथ ॥ इटीति किम् ? पपाथ । गुणार्थमिदम् ॥

**दामागायतिपिबतिस्थास्यतिजहातीना-मीकारो व्यञ्जनादौ ॥ २९ ॥**

दासंज्ञकमाङ्गायतिपिबतिस्थास्यतिजहातीनामन्त ईकारो भवति। व्यञ्जनादावगुणे प्रत्यये परे। दीयते। धीयते। मीयते। गीयते॥ गायतीति निर्देशात् गाङ् गतावित्यस्य गायत इति भवितव्यमेव॥ पीयते। पातेस्तु पायते॥ स्थीयते। अवसीयते॥ स्यतीति निर्देशात्। सायते। सासायते। मनोतेर्यं वा त्वम्॥ हीयते। हाङस्तु हायते॥

**आशिष्येकारः ॥ ३० ॥**

दामादीनामाशिष्यगुणे व्यञ्जनादौ परत एकारो भवति। देयात्। धेयात्। मेयात्। गेयात्। पेयात्। स्थेयात्। अवसेयात्। हेयात्॥ अगुण इति किम्? दासीष्ट। मासीष्ट॥ वा संयोगादेरस्य इति वक्तव्यम्। ग्लेयात्। ग्लायात्॥ म्लेयात्। म्लायात्॥ अस्य इति किम्? स्थेयात्॥

**अन उस् सिजभ्यस्तविदादिभ्योऽभुवः ॥३१॥**

सिजभ्यस्तविदादिभ्यो भूवर्जितेभ्यः परस्यान उस् आदेशो भवति। सिच्। अकार्षुः। अहार्षुः। अदुः। परस्य न लुग्लोप इति॥ अभ्यस्त। अददुः। अजुहवुः। अनेनिजुः॥ विदादि। विद ज्ञाने। आदन्त। क्षिप॥ अविदुः। अस। असुः। अद्विषुः॥ गणकृतमनित्यमिति वा स्यात्। अस्तन्वन एवायांत्। अविदन्। अयान्। अवान्। अद्विषन्॥ अभुव इति किम्? अभूवन्॥

## इचस्तलोपः ॥ ३२ ॥

इचस्तप्रत्ययस्य सर्वस्य लोपो भवति। अपादि अलावि ॥ इचस्त इति किम्। अकारितराम् ॥

## हेरकारादहन्तेः ॥ ३३ ॥

धातोर्विहितस्य हेरकारात्परस्य लोपो भवति। अहन्तेः। पच। पठ। भव। दीव्य ॥ हेर्ध्वनित्वात्। पचतात् ॥ अकारादिति किम्? याहि ॥ अहन्तेरिति किम्? जहि मन्तून्। संनिपातलक्षणस्य वर्णग्रहणे निमित्तत्वात् ॥

## नोश्च विकरणादसंयोगात् ॥ ३४ ॥

नोश्च विकरणादसंयोगात्परस्य हेर्लोपो भवति। चिनु। सुनु ॥ विकरणादिति किम्? नुहि ॥ असंयोगादिति किम्? राध्नुहि ॥

## उकाराच्च ॥ ३५ ॥

उकाराच्च विकरणात्परस्य हेर्लोपो भवति। तनु। कुरु ॥ विकरणादिति किम्? नुहि ॥

## उकारलोपो वमोर्वा ॥ ३६ ॥

असंयोगस्य विकरणस्योकारस्य लोपो भवति वा वमोः परतः सुन्वः। सुन्मः। सुनुवः। सुनुमः। तन्वः। तन्मः। तनुवः। तनुमः ॥ आद्यन्तवद्भावात्। सुनोमि। तनोमीति परत्वात् स्वरादेशत्वाद्वा सिद्धम् ॥

## करोतेर्नित्यम् ॥ ३७ ॥

कृञः परस्य विकरणोकारस्य नित्यं लोपो भवति वमोः परतः। कुर्वः। कुर्मः॥

## ये च॥ ३८॥

करोतेर्नित्यं विकरणोकारस्य नित्यं लोपो भवति ये प्रत्यये परे। कुर्य्यात्। कुर्य्याताम्। कुर्य्युः॥

## अस्योकारः सार्वधातुकेऽगुणे॥ ३९॥

करोतेरकारस्यागुणे सार्वधातुके परे उकारो भवति। कुरुतः कुर्वन्ति। कुरु। प्रत्ययलोपलक्षणात्। गुणो नैव स्वरूपनिर्देशात्॥ सार्वधातुक इति किम्? सञ्चस्करः॥ अगुण इति किम्? करोमि॥

## रुधादेर्विकरणान्तस्य लोपः॥ ४०॥

रुधादेर्यो विकरणस्तस्यान्तावयवस्य लोपो भवति। अगुणे सार्वधातुके परे। रुन्धः। रुन्धन्ति। भिन्तः। भिन्दन्ति॥ अगुण इति किम्? रुणद्धि॥

## अस्तेरादेः॥ ४१॥

अस्तेरादेरकारस्यागुणे सार्वधातुके परे लोपो भवति। स्तः। सन्ति॥ अगुण इति किम्। अस्ति॥

## अभ्यस्तानामाकारस्य॥ ४२॥

अभ्यस्तसञ्ज्ञकानामाकारस्य लोपो भवति। अगुणे सार्वधातुके परे। मिमते। मिमताम्। जिहते। जिहताम्। दत्ते। धत्ते॥ अगुण इति किम्। जहाति।

## क्र्यादीनां विकरणस्य ॥ ४३ ॥

क्र्यादीनां धातूनामगुणे सार्वधातुके विकरणाकारस्य लोपो भवति। क्रीणते। क्रीणन्ति। प्रीणते। प्रीणन्ति॥ कथं स्तम्भ्लोप्यु पलक्षणत्वात्॥ क्र्यादीनामिति किम्? दीव्यामः। सीव्यामः॥ विकरणस्येति सुखप्रतिपत्त्यर्थम्॥ अगुण इति किम्? क्रीणाति॥

## उभयेषामीकारो व्यञ्जनादावदः ॥ ४४ ॥

साम्यपेक्षयोभयशब्दो व्यक्त्यपेक्षया बहुवचनम्। उभयेषामभ्यस्तक्र्यादिविकरणानां दावर्जितानामाकारस्य व्यञ्जनादावगुणे सार्वधातुक ईकारो भवति। मिमीते। जिहीते। लुनीते। पुनीते। व्यञ्जनादाविति किम्? मिमते। क्रीणते॥ अगुण इति किम्? जहाति। क्रीणाति॥ सार्वधातुक इति किम्? लालायते॥ अद इति किम्? दत्ते। धत्ते॥

## इकारो दरिद्रातेः ॥ ४५ ॥

दरिद्रातेराकारस्यागुणे सार्वधातुके व्यञ्जनादाविकारो भवति। दरिद्रितः। दरिद्रिथः॥ अगुण इति किम्? दरिद्राति॥ सार्वधातुक इति किम्? दरिद्राणम्। दरिद्रायकः। दिदरिद्रासति॥
भियो वेति वक्तव्यम्। बिभितः। बिभीतः॥

## लोपः सप्तम्यां जहातेः ॥ ४६ ॥

जहातेरन्तस्य सस्वरादावगुणे लोपो भवति । जहात् । जाह्नताम् ॥

व्यञ्जनादावगुणे सार्वधातुके इत्वं वा वक्तव्यम् । जहितः । जहीतः ॥ हौ चात्वमित्वमात्वं चेष्टम् । जहाहि । जहि-हि । जहीहि ॥

## घुटि हन्तेः सार्वधातुके ॥ ४७ ॥

हन्तेर्धुडादौ सार्वधातुकेऽगुणेऽन्तस्य नकारस्य लोपो भवति । हतः । हथः । आहते । आहताम् ॥ धुटीति किम् ? हन्वः । हन्मः ॥ अगुण इति किम् ? हन्ति ॥ प्रतिपदिष्टानां मध्ये हन्तेरेव सार्वधातुके सम्भवदर्शनार्थमि-दम् ॥

## शासेरिदुपधाया अण्व्यञ्जनयोः ॥ ४८ ॥

शासेरुपधाया इद् भवति । अणि व्यञ्जनादावगुणे । अन्वशिषत् । शिष्यते । शिष्टः ॥ कथं मित्रं शास्तीति मित्रशीः । विलोपात् स्वरादेशो विधिर्बलवान् ॥ यथा सह-चरितः शासुरिह गृह्यते । आशास्ते । आशास्यमानः ॥ कथम् आशीः । ज्ञापकात् ॥

## हन्तेर्जं हौ ॥ ४९ ॥

हन्तेर्जकारो भवति हौ परे । जहि शत्रून् ॥ ईर्ष्यति-त्वाद् हतात् । परत्वात्तातन् ॥

## दास्त्योरेऽभ्यासलोपश्च ॥ ५० ॥

दासंज्ञकस्यास्तेश्च हौ परेऽन्तस्यैत्वं भवति । अभ्यास-

व्यञ्जनत्वाद् वचनम् । तेरतुः । तेरिथ । फेलतुः । फेलिथ । भेजतुः । भेजिथ । त्रेपे । त्रेपाते । त्रेपिरे । श्रेथतुः । श्रेथतुः । देभतुः ॥ अनुषङ्गलोपिनां मध्ये दम्भेरेवेति नियमात् । ममथ्वान् ॥ निरनुषङ्गैः साहचर्यात् । ग्रन्थिथ । जग्रन्थिथ । ददम्भिथ । इत्यनुषङ्गिणां न स्यात् ॥ अगुण इति किम् ? अहं ततर ॥

जॄभ्रमुवसित्रसफणस्यमां वा वक्तव्यम् । जेरतुः । जजरतुः । जेरिथ । जजरिथेत्यादि ॥

## न शसददवादिगुणिनाम् ॥ ५४ ॥

शसेर्ददेर्वकारादीनां गुणिनां च धातूनामेत्वमभ्यासलोपश्च न भवति । अगुणे परोक्षायां थलि च सेटि परतः । विशशसतुः । विशशसिथ ॥ ददद्दे । ददृदाते । ववसतुः । ववसिथ ॥ विशशरतुः । विशशरिथ ॥ निनयिथ ।

## स्वरादाविवर्णोवर्णान्तस्य धातोरियुवौ ॥ ५५ ॥

स्वरादावगुणे प्रत्यये परे धातोरिवर्णोवर्णान्तस्य इयुवौ भवतः । निर्दिष्टस्य स्थानिन एवान्तरतस्यात् । शिश्रियतुः । चिक्रियतुः । चुच्युवतुः । पुप्लुवतुः । प्लुवन्ति । ब्रुवन्ति । लुवन्ति ॥ स्वरादाविति किम् ? नीयात् । लूयात् ॥ अगुण इति किम् ? नयिता । लविता । धातुग्रहणमभ्युत्तरार्थमेव ॥

## अभ्यासस्यासवर्णे ॥ ५६ ॥

इवर्णोवर्णान्तस्याभ्यासस्यासवर्णे स्वरे इयुवौ भवतः ।

इयेप । उवोप । इयृयात् ॥ असवर्ण इति किम् ? ईषतुः । ऊपतुः ॥

## नोर्विकरणस्य ॥ ५७ ॥

नोर्विकरणस्योकारस्यागुणे स्वरादावुव् भवति । आप्नोतेरस्मात् । प्राप्नुवन्ति । प्राप्नुवन्तु । शक्नुवन्ति । शक्नुवन्तु ॥ नोरिति किम् ? चयवन्ति ॥ विकरणस्येति किम् ? तन्वन्ति ॥

## य इवर्णस्यासंयोगपूर्वस्यानेकाक्षरस्य ॥ ५८ ॥

अनेकाक्षरस्य धातोर्य इवर्णस्तस्यासंयोगपूर्वस्य यकारो भवति । अगुणे स्वरादौ । चिच्यतुः । चिच्युः । निन्यतुः । निन्युः । दिग्यिरे । निन्यिरे ॥ असंयोगपूर्वस्येति किम ? शिश्रियतुः । चिक्रियतुः ॥ अनेकाक्षरस्य धातोरिति किम ? अधीयते ॥

## इणश्च ॥ ५९ ॥

इणो धातोरगुणे स्वरादौ यकारो भवति । यन्ति । यन्तु ॥ चकारोऽनुक्तसमुच्चयार्थः । तेन इकोऽपि स्यात् । अधियन्ति । अधियन्तु ॥

## नोर्वकारो विकरणस्य ॥ ६० ॥

नोर्विकरणस्यासंयोगपूर्वस्य स्वरादावगुणे वकारो भवति । सुन्वन्ति । चिन्वन्ति ॥ विकरणस्येति किम ? नुवन्ति । नोनुवः ॥ असंयोगपूर्वस्येति किम् ? तक्ष्णुवन्ति ॥

## जुहोतेः सार्वधातुके ॥ ६१ ॥

जुहोतेरुकारस्य सार्वधातुके स्वरादावगुणे प्रत्यये परे वकारो भवति । जुह्वति । जुह्वतु ॥ अगुण इति किम् ? जुहवानि ॥ सार्वधातुक इति किम् ? जुहुवुः ॥ स्वरादाविति किम् ? जुहुयात् ॥

## भुवो वोऽन्तः परोक्षाद्यतन्योः ॥ ६२ ॥

भुवो धातोरन्तो वकारो भवति परोक्षाद्यतन्योः स्वरादयोः परतः । बभूव । बभूवतुः । बभूवुः । बभूविथ । अभूवन् । अभूवम् ॥ पुनर्वकारो गुणवृद्धिबाधनार्थः । नित्यत्वे द्गुणाधिकारः स्यात् ॥ स्वरादयोरिति किम् ? अभूत् । बभूवान् ॥ बभूवुष इत्यसिद्धं बहिरङ्गमन्तरङ्गे इति ॥

## गोहेरूदुपधायाः ॥ ६३ ॥

गोहेः कृतगुणस्य स्वरादौ परत उपधाया ऊद् भवति । गूहयति । गूहिता । गूहकः ॥ गोहेः कृतगुणस्येति किम् ? जुगुहुः ॥ उपधाग्रहणमुत्तरार्थं च ॥

## दुषेः कारिते ॥ ६४ ॥

दुषेरुपधाया ऊद् भवति कारिते परे । दूषयति ॥ कारित इति किम् ? दोषो वर्त्तते ॥ कारित इति मत्रा-पूर्वकत्वाद् वा चित्तविकारे । चित्तं दूषयति । चित्तं दोषयति । भर्त्तां दूषयति । भर्त्तां दोषयति ॥

## सानुबन्धानां ह्रस्वः ॥ ६५ ॥

घटादयो मानुबन्धा अभ्याख्याताः । तेषामुपधायाः कारिते परे ह्रस्वो भवति । घटयति । व्यथयति ॥
क्नगी ध्वगी सगी स्थगी संवरणे ॥ कगे नोच्यते । अस्यायमर्थ इति च नोच्यते । कगयति ॥ चन् च । वनु च नोच्यते । चन् च हिंसार्थः । वनु च कगेवत् । चनयति । वनयति । स्म आध्याने । स्मरयति । चिन्तायामन्यत्र न भवति । विस्मारयति ॥
जनी जॄष् क्नसु रञ्जोऽमन्ताश्च । जनी प्रादुर्भावे । जनयति ॥ जॄष् । जरयति ॥ क्नसु ह्वरणे । क्नसयति ॥ रञ्ज रागे । रजयति मृगान् । रञ्जेस्तु गरमणेऽनुषङ्गलोपः ॥ अमन्ताश्च । रमयति । यमयति ॥
ज्वलह्वलह्मलनमोऽनुपसर्गा वा । सोपसर्गास्तु नित्यं मानुबन्धाः । ज्वल दीप्तौ घटादिः । प्रज्वलयति ॥ तथा ह्वल ह्मल चलने । प्रह्वलयति । प्रह्मलयति ॥ अमन्तत्वात् । उपनमयति ॥
ग्लास्नावनुवमश्च । अनुपसर्गा इति किम् ? प्रग्लापयति । प्रस्नापयति । उपवनयति । उद्वमयति ॥ न कम्यमिचमः ॥ शमोऽदर्शने । प्रशमयति रोगान् । दर्शने तु न भवति । निशामयति रूपम् ॥
स्खदिरवपरिभ्यां च । अवस्खदयति । परिस्खदयति ॥ अवपरिभ्यामेवेति नियमादन्योपसर्गान्न भवति । प्रस्खादयति । उपस्खादयति ॥
फण गतौ पठ्यते मानुबन्धश्च । गतेरन्यत्र न भवति । फाण्टयति [illegible] ॥

भन्वे सुगमा इति नोदाहृता। अथम् उद्घाटितः कपाटः। चौरस्योत्काथयति। घटन्तादिन्॥ संक्रामयतीति शन्तृडन्तादिन्॥

## इचि वा॥ ६६॥

मानुबन्धानां धातूनां कारित इचि परे ह्रस्वो भवति वा। अघटि। अघाटि। अव्यथि। अव्याथि॥ चजि गतौ दाने च। टच हिंसायामिति घटादिपाठबलादनुपधाया अपि दीर्घत्वम्। तेन अचजि। अचाजि॥ अटचि। अटाचि॥

## जनिवध्योश्च॥ ६७॥

इजभावमिह वर्त्तते। जनिवध्योरिचि परे नित्यं ह्रस्वो भवति। अजनि। अवधि॥ यद्यपि बन्धने बधिस् तथापीचि हिंसायाम्। तथा च भवकर्मणोश्चान्ति वधकोऽपि न विद्यते॥ वधिः प्रकृत्यन्तरमित्येके॥

## ओतो यिन्आयौ स्वरवत्॥ ६८॥

ओतः परौ यिन् आयौ स्वरवद् भवतः। गव्यति। गव्यते॥ अवोऽपि न स्यात्। गवाजिनवदिष्टत्वात्॥

## औतश्च॥ ६९॥

औतः परौ यिनआयौ स्वरवद् भवतः। नाव्यति। नाव्यते। यथासंख्यभयात् पृथगुच्यते॥

## नाम्यन्तानां यण्आयियिन् आशीश्चिचेक्रीयितेषु ये दीर्घः॥ ७०॥

नाम्यन्तानां धातूनां यणादिषु ये च्वौ च परत आन्तरतम्याद् दीर्घो भवति। चीयते। सन्तूयति। अस्त्रीयते। पटूयति। चीयात्॥ च्वौ च। पटूकरोति॥ चेचीयते॥ य इति किम ? क्षपोष्ट। नामीति सम्भवदर्शनार्थमिदम्॥

## इणोऽनुपसृष्टस्य ॥ ७१ ॥

इणो धातोरनुपसृष्टस्यैवाशिषि ये दीर्घो भवति॥ ईयात्। ईयास्ताम्॥ अनुपसृष्टस्येति किम् ? अन्वियात्॥ यणो व्यवहितपाठाच्चिह्नानुवृत्तिरिति गम्यते। तेन समीयते। नियमो न स्यात्॥

## ऋत ईदन्तश्चिवेक्रीयितयिन्नायिषु ॥७२॥

ऋदन्तस्य च्विचेक्रीयितयिन्नायिषु परत ईदन्तो भवति। मात्रीकरोति। जेह्रीयते। स्वस्रीयति। दुहित्रीयते॥ ऋत इति किम् ? चेकीर्य्यते॥

## इरन्यगुणे ॥ ७३ ॥

ऋदन्तस्यानि विकरणेऽगुणे इकारो भवति। आद्रियते। आध्रियते॥ ऋत इति किम् ? किरति। गिरति॥ अगुण इति किम् ? स्मरति। आदेशादागमो विधिर्बलवानिति॥

## यणाशिषोर्ये ॥ ७४ ॥

ऋदन्तस्य यणाशिषोर्ये परे इकारोऽन्तो भवति। क्रियते। क्रियात्॥ य इति किम् ? क्षपोष्ट॥

## गुणोऽर्तिसंयोगाद्योः ॥७५॥

अर्तेः संयोगादेश्च धातोर्यक्याशिषोर्य परे गुणो भवति। अर्यते। अर्यात्। स्मर्यते। स्मर्यात्। असिद्ध बहिरङ्ग मन्तरङ्ग इति संस्क्रियते। संस्क्रियात् ॥

## चेक्रीयिते च ॥ ७६ ॥

अर्तेः संयोगादेश्च धातोश्चेक्रीयिते परे गुणो भवति। अराय्यते। सास्मर्यते ॥

## घ्राध्मोरी ॥ ७७ ॥

घ्रा। ध्मा। इत्येतयोश्चेक्रीयिते परे ईकारो भवति। जेघ्रीयते। देध्मीयते ॥ हन्तेर्घ्नीर्वा वक्तव्यम्। जेघ्नीयते। जङ्घन्यते ॥

## यिन्यवर्णस्य ॥ ७८ ॥

यिनि परेऽवर्णस्य ईकारो भवति। वस्त्रीयति। मालीयति ॥ च्वौ च। दीर्घो भवति। मालीस्यात् ॥ अशनायोदन्यधनाया बुभुक्षापिपासाकाङ्क्षासु निपाता रूढाः। अशनमिच्छति भोक्तुम्। अशनायति ॥ उदकमिच्छति पातुम्। उदन्यति ॥ धनमिच्छति क्षपणक्। धनायति ॥

## अदेर्घस्लृ सनद्यतन्योः ॥ ७९ ॥

अदेः स्थाने सनद्यतन्योः परतो घस्लृ आदेशो भवति। लृद् अनुबन्धः। जिघत्सति। अघसत् ।

## वा परोक्षायाम् ॥ ८० ॥

परोक्षायां परतोऽदेर्घस्लादेशो भवति वा । आद । आदतुः । जघास । जक्षतुः ॥ घस्लृ अदने । सोऽप्यत्र भाषायां सरन्विषय एव ॥

## वेञश्च वयिः ॥ ८१ ॥

वेञो धातोः परोक्षायां परतो वयिर्भवति वा । उवाय । ऊयतुः । ववौ । ववतुः ॥ इकारः स्वरूपग्राहकः ।

## हन्तेर्वधिराशिषि ॥ ८२ ॥

हन्तेर्वधिर्भवति । आशिषि परतः । वध्यात् । वध्यास्ताम् ॥

## अद्यतन्यां च ॥ ८३ ॥

हन्तेरद्यतन्यां च परतो वधिर्भवति । अवधीत् । अवधिष्टाम् ॥ अनात्मनेपदादिति इति वा दीर्घो न स्यात् । इज्निर्देशस्य स्वरूपग्राहकत्वात् ॥ यामन्तो व्यवस्थार्थोऽत्र स्मर्यते । तेनात्मनेपदे वा । आहत । आहसाताम् । आवधिष्ट । आवधिषाताम् ॥

## इणो गा ॥ ८४ ॥

इणो धातोरद्यतन्यां गादेशो भवति । अगात् । अगाताम् । इण्वद् इकोऽपि । अध्यगात् ॥

## इङः परोक्षायाम् ॥ ८५ ॥

इङः परोक्षायां गादेशो भवति । अधिजगे । अधिज

गाति। अधिजगिरे॥ इङ इति किम्? इट् गतौ। उदियाय॥

अद्यतनीक्रियातिपत्त्योर्वा गीरादेश इष्यते। अध्यगीष्ट। अध्यैष्ट। अध्यगीष्यत। अध्यैष्यत॥ इनि संयणोरपि गापयतेरध्ययनेऽपि इष्ति। अधिजिगापयिषति। अध्यजीगपत्॥ इङमु। अध्यापिपयिषति। अध्यापिपत्॥

## सनीणिङोर्गमिः ॥ ८६ ॥

सनि परे इणिङोर्गमिरादेशो भवति। ग्राम जिगमिषति। वेदानधिजिगांसते॥ इकोऽपि। अधिजिगमिषति॥ गमॢ बोधने सनि नाभिप्रायेण चेत् [illegible]। अर्थान् प्रतीपिषति॥ इट् गतौ [illegible] [illegible]। [illegible]। अधिगमयति। गमिरेव [illegible]। [illegible] [illegible]। शास्त्रमध्यापयतीति भवितव्यमेव।

## अस्तेर्भूरसार्वधातुके ॥ ८७ ॥

अस्तेर्भूरादेशो भवति। असार्वधातुकविषये। भविता। भूतः। भविष्यति। भव्यम्। स्वराद् य० [का० ४.२.१०]॥ तिपा निर्देशः किम्? असिता॥

## ब्रुवो वचिः ॥ ८८ ॥

ब्रुवो धातोर्वचिर्भवति। असार्वधातुकविषये। वक्ता। वक्ष्यति। वाच्यम्। ऋवर्णव्यञ्जनान्ताद् घ्यण् [का० ४.२.३५]॥

## चक्षिङः ख्याञ् ॥ ८९ ॥

भवति । रोचते । वर्त्तते । भवति । नयति ॥ अन्येष्व वि-
करण इति किम् ? नृत्यति । सुनोति । क्रीणाति । पुषाण ॥
विकरण इति किम् ? अदुहन् ॥

**करोतेः ॥ ४ ॥**

करोतेः स्वविकरणे गुणो भवत्येव । करोति । करोतु ॥
तनाद्युपलक्षणं करोतिरिति केचित् । तेन समर्णोति ॥

**मिदेः ॥ ५ ॥**

मिदेः स्वविकरणे गुणो भवत्येव । मेद्यति ॥ भौवा-
दिकस्य मेदतेरपि सिद्ध एव ॥

**अभ्यस्तानामुसि ॥ ६ ॥**

अभ्यस्तानामुसि परे नामिनो गुणो भवति । द्वित्व
बहुत्वयोश्च परस्मा इति प्रतिषेधे प्राप्ते वचनम् । अबिभयुः ।
अजुहवुः । अबिभरु । अजागरु ॥ अभ्यस्तानामुसीति
किम् ? जुहुवुः ॥

**न णकारानुबन्धचेक्रीयितयोः ॥ ७ ॥**

नाम्यन्तानां नाम्युपधानां च णकारानुबन्धे चेक्रीयिते
च परे गुणो न भवति । अचिक्रियत् । अपुषत् । अद्युतत् ।
नीयते । दुष्यते ॥ नरीनृत्यते । लोलूयते ॥

**अभ्यस्तस्य चोपधाया नामिनः स्वरे गुणिनि सार्वधातुके ॥ ८ ॥**

अभ्यस्तस्य चोपधाया नामिनः स्वरादौ गुणिनि सार्व

धातुके परे गुणो न भवति। नेनिजानि। अनेनिजम्॥ विशेषणासिग्रहणाज् जजनानोत्वलोपो न स्यात्। एवमुत्तरत्रापि योज्यम्॥ गुणिनीति किम्? गुणिन्यपि गुणो माभूत्। अनेनिजुः॥

## सनि चानिटि॥ ९॥

नामिन उपधाया अनिटि सनि गुणो न भवति। बिभित्सति। दित्सा। बुभुत्सते। जिघृक्षति॥ चकारादनामिनोऽपि क्वचित्। तेन धीप्सति। नलोपः स्यात्॥ अनिटीति किम्? चुकोपिषति॥

## सिजाशिषोश्चात्मने॥ १०॥

नामिन उपधायाः सिच्यात्मनेपदे आशिषि चानिटि गुणो न भवति। अभित्त। अच्छित्त। अभित्साताम्। अदुह्वहि। अदुग्ध। अदुग्धाः। दुहदिहलिहगुहामात्मने तवर्गे वा सगेव तत्र व्यवस्थितवानुवृत्तेः भिचोऽद्यतन्युपलक्षणत्वात् सिद्धम्॥ भित्सीष्ट। भुत्सीष्ट॥ अनिटीति किम्? अवर्धिष्ट। वर्धिषीष्ट॥ इहात्मनेग्रहणं गुणबाधिका वृद्धिरिति ज्ञापनार्थम्। तेन न्यनुवीत्। न्यधुवीत्। कुटादित्वादगुणे वृद्धिर्न स्यात्॥

## ऋदन्तानां च॥ ११॥

ऋदन्तानां च धातूनां सिजाशिषोरात्मनेपदेऽनिटि गुणो न भवति। अकृत। अकृषाताम्। कृषीष्ट॥ अनिटीति किम्? प्रावरिष्ट। प्रवरिषीष्ट॥ कथं तॄ। अतीर्ष्ट। तीर्षीष्ट।

स्तृ। अस्तीर्ष्ट। स्तीर्षीष्ट। वृ। अवूर्ष्ट। वूर्षीष्ट। सिजाशि-षोरात्मन इड्विकल्पे दिविर्त्तृकारस्योपलक्षणत्वात्॥

स्थादोश्च॥ १२॥

स्थादासंज्ञकयोश्च नामिनः सिच्यात्मनेपदे गुणो न भवति। समस्थित। समस्थिषाताम्। अदित। अदि-षाताम्। अधित। अधिषाताम्। नामिन इति किम्? स्थासीष्ट। दासीष्ट॥

भुवः सिज्लुकि॥ १३॥

भुवो धातोः सिज्लुकि सति गुणो न भवति। अभूत्। अभूताम्॥ भुव इति किम्? अस्थात्॥ सिज्लुकीति वच-नान्नामिनो निवृत्तिर्वेति गम्यते॥

सूतेः पञ्चम्याम्॥ १४॥

सूतेः पञ्चम्यामि गुणो न भवति। सुव्। सुवै। सुवा-वहै। सुवामहै॥

दीधीवेव्योश्च॥ १५॥

छान्दसावेतौ धातू इत्येके। पञ्चम्यामिति नेष्टानु-वृत्तिः पृथग्योगात्। दीधीवेव्योश्च गुणो न भवति। आ दीध्यै। आवेव्यै। आदीध्यनम्। आवेव्यनम्। आदीध्यकः। आवेव्यकः॥

रुदविदमुषां सनि॥ १६॥

रुदादीनां सनि गुणो न भवति। रुरुदिषति। विवि-

दिवति । सुसुपिषति ॥ पारिशेष्याद् विदिशानार्थः ॥ सनि व्यञ्जनादेर्युपधत्वाद् विकल्पेऽटौ वचनं नित्यार्थम् ॥

## नाम्यन्तानामनिटाम् ॥ १७ ॥

नाम्यन्तानां धातूनामनिटां सनि गुणो न भवति । चिचीषति । निनीषति । तुष्टूषति । लुलूषति । चिकीर्षति । बुभूर्षति । अनिटामिति किम् ? शिश्रयिषति ॥ शोभतीति नित्यत्वात् कारितलोपः स्यात् ॥

दीर्घाणां च कृतां दीर्घो गुणं बाधेत चेत्तदा ।
दीर्घजातिहरौ नाम इना लोपस्तु दुर्लभः ॥

## सर्वेषामात्मने सार्वधातुकेऽनुत्तमे पञ्चम्याः ॥१८॥

सर्वेषां धातूनां विकरणानां च नामिन उपधाया नाम्यन्तस्य च सार्वधातुके पञ्चम्युत्तमवर्जिते आत्मनेपदे गुणो न भवति । दुग्धे । सुते । चिनुते । कुरुते ॥ सार्वधातुक इति किम् ? धोक्ष्यते । स्तोष्यते ॥ अनुत्तमे पञ्चम्या इति किम् ? स्तवै । करवै ॥

## द्वित्वबहुत्वयोश्च परस्मै ॥ १९ ॥

सर्वेषां धातूनां विकरणानां सार्वधातुके पञ्चम्युत्तमवर्जिते द्वित्वबहुत्वयोश्च परस्मैपदे गुणो न भवति । दुग्धः । दुहन्ति । सुतः । सुवन्ति । चिनुतः । चिन्वन्ति । कुरुतः । कुर्वन्ति ॥ द्वित्वबहुत्वयोरिति किम् ? दोग्धि । स्तौति । करोति । चिनोति ॥ अनुत्तमे पञ्चम्या इति किम् ? दोहाव । दोहाम । चिनवाव । चिनवाम ॥

## परोक्षायां च ॥ २० ॥

सर्वेषां धातूनां परोक्षायां च द्वित्वबहुत्वयोश्च परस्मैपदे गुणो न भवति। दुदुहतुः। दुदुहुः। विव्यतुः। विव्युः॥ द्वित्वबहुत्वयोरिति किम्? दुदोह। निनयिथ॥

## सर्वत्रात्मने॥ २१ ॥

सर्वेषां धातूनां परोक्षायां च सर्वस्मिन्नात्मनेपदे गुणो न भवति। दुदुहे। दुदुहाते। दुदुहिरे। चक्रे। चक्राते। चक्रिरे॥

## आशिषि च परस्मै॥ २२ ॥

सर्वेषां धातूनां सर्वत्राशिषि च परस्मैपदे गुणो न भवति। चीयात्। चीयास्ताम्। दुह्यात्। दुह्यास्ताम्॥ परस्मा इति किम्? चेषीष्ट। धोक्षीष्ट॥

## सप्तम्यां च ॥ २३ ॥

सर्वेषां धातूनां सप्तम्यां परस्मैपदे गुणो न भवति। सुयात्। चिनुयात्। दुह्यात्॥

## हौ च ॥ २४ ॥

सर्वेषां धातूनां हौ परे गुणो न भवति। नुहि। दुग्धि। प्राप्नुहि॥ चिनु। सुनु। प्रत्ययलोपलक्षणत्वात्॥ कथम् एहि। आङ एत्वमिति॥

## तुदादेरनि ॥ २५ ॥

तुदादेरनि गुणो न भवति। तुदति। नुदति।

## आमि विदेरेव ॥ २६ ॥

विदेरेवामि परे गुणो न भवति । विदाञ्चकार । विदाम्बभूव ॥ विदेरेवेति किम् ? बोधयाञ्चकार । जागराञ्चकार ॥

## कुटादेरनिनिचट्सु ॥ २७ ॥

कुटादेर्गणस्य इन्इच्अटो वर्जयित्वान्येषु प्रत्ययेषु गुणो न भवति । उत्कुटिता । उत्कुटितुम् । उत्कुटिष्यति । उत्पुटिता । उत्पुटितुम् । उत्पुटिष्यति ॥ कुटादेरिति किम् ? लेखनीयम् ॥ अनिनिचट्स्विति किम् ? उत्कोटयति । उदकोटि । उच्चुकोट ॥ कथं कुचनीयम् । रूढित्वात् ॥

## विजेरिटि ॥ २८ ॥

विजेरिटि परे गुणो न भवति । ओविजी । उद्विजिता । उद्विजितुम् । उद्विजिष्यते ॥ कथम् उद्वेजिता । इना सिद्धम् ॥

## स्थादोरिरद्यतन्यामात्मने ॥ २९ ॥

स्थादासंज्ञकयोरद्यतन्यामात्मनेपदे इर्भवति । समस्थित ॥ समस्थिषाताम् । अदित । अदिषाताम् । अधित । अधिषाताम् ॥ आत्मन इति किम् ? अस्थात् । अदात् । अधात् ॥

## सुचादेरागमो नकारः स्वरादनि विकरणे ॥३०॥

सुचादेर्गणस्य स्वरात्परो नकारागमो भवति । अनि

विकरणे परे । मुच्यति । लुम्पति ॥ विकरण इति किम ? अमुचन ॥

मस्जिनशोर्धुटि ॥ ३१ ॥

मस्जिनशोः स्वरात्परो नकारागमो भवति धुटि परे । मङ्क्ता । मङ्क्ष्यति । नंष्टा । नङ्क्ष्यति ।

रधिजभोः स्वरे ॥ ३२ ॥

रधिजभोः स्वरात्परो नकारागमो भवति स्वरे परे । रन्धयति । अरन्धि । जम्भयति । अजम्भि ॥

नेटि रधेरपरोक्षायाम् ॥ ३३ ॥

रधेरिटि परे नकारागमो न भवति । अपरोक्षायाम । रधिता । रधिष्यति । रधितव्यम् ॥ अपरोक्षायामिति किम् ? ररन्धिव । ररन्धिम ॥

रभिलभोरविकरणपरोक्षयोः ॥३४॥

रभिलभोः स्वरात्परो नकारागमो भवति । अविकरणपरोक्षयोः स्वरे परे । आरम्भयति । आरम्भि । आरम्भो वर्त्तते । आलम्भयति । आलम्भि ॥ अविकरणपरोक्षयोरिति किम् ? आरभते । आलभते । रेभे । लेभे ॥

तृन्हिभ्यां हेर्धिः ॥ ३५ ॥

तृन्हिभ्यां परस्य हेर्धिर्भवति । तृण्ढि । तृण्ढि । भिन्द्धि । छिन्द्धि ॥ भिन्तात् । छिन्तात् । परत्वात् तातङ् ॥ भिन्द्धि । छिन्द्धि । पचाटक् ॥ कथं हन्धि ? यग्धि । सेटकत्वात् ।

अस्तेः ॥ ३६ ॥

अस्तेः परस्य हिर्धिर्भवति । अस । एधि । नित्यत्वाट्-लादेशे ह्लादित्वे सति वचनम् ॥

शा शास्तेश्च ॥ ३७ ॥

शास्तेः परस्य हिर्धिर्भवति । शास्तेश्च शा भवति । शाधि ॥ अधीति कृत इत्वं स्यात् ॥

लोपोऽभ्यस्तादन्तिनः ॥ ३८ ॥

अभ्यस्तात्परस्यान्तिनकारस्य लोपो भवति । ददति । ददतु । जाग्रति । जाग्रतु ॥ नलोपः साध्य इत्यनुक्तः ॥

आत्मने चानकारात् ॥ ३९ ॥

अनकारादात्मनेपदेऽन्तेर्नकारस्य लोपो भवति । कु-र्वते । कुर्वताम् । लुनते । लुनताम् । व्यतिलाते । व्यति-लाताम् ॥ अनकारादिति किम् ? पचन्ते । पचन्ताम् ॥

शेते रिरन्तेरादिः ॥ ४० ॥

शेतेः परस्यान्तेरादि रिर्भवति । शेरते । शेरताम् । अशेरत ॥ अन्तिग्रहणमन्तिनो रिरादिर्माभूत् ॥ वेत्तेर्वा वक्तव्यम् । संविदते । संविद्रते ॥

आकारादट औ ॥ ४१ ॥

आकारात्परस्य अट और्भवति । पपौ । तस्थौ ॥ आशिषि तुह्योस्तातङ् वा वक्तव्यम् । जीवतु । जीवतात् । जीवतम् । नन्दतु । नन्दतात् । नन्दतम् । छिन्तात् । कुरुतात् ॥ ङकारोऽगुणार्थः ॥

ऋदन्तस्येरगुणे ॥ ४२ ॥

ऋदन्तस्य धातोः श्रुतस्य स्थानिनोऽन्तरतमोऽगुणे प्रत्यये परे इर्भवति । चिकीर्षति । जिहीर्षति । तितीर्षति । ऋदन्तस्येति किम्? चक्रतुः ॥ कीर्त्तयोः क्विप [आ० ४ ५ ८६] इति निर्देशात् । कीर्त्तयति ॥

उरोष्ठ्योपधस्य च ॥ ४३ ॥

ओष्ठ्योपधस्य धातोर्ऋदन्तस्यागुणे प्रत्यये परे उर्भवति । पुपूर्षति । मुमूर्षति । बुभूर्षति । बोभूर्य्यते । दन्त्यो-ष्ठ्यादपि । प्रावुवूर्षति । संवुवूर्षति ॥ धातोरोष्ठ्योपधस्येति किम्? ऋ गतौ । समीर्णः ॥

इन्यसमानलोपोपधाया ह्रस्वश्चणि ॥ ४४ ॥

अविद्यमानसमानलोपोपधाया ह्रस्वो भवति । इनि चण् परे । अचीकरत् । अजीजपत् । अलीलवत् ॥ इन्ग्रहणमिन्सामान्यार्थम् । तेन शादिवन्त प्रयोजितवान् । अपीपदहीणा परिवादकेन । इत्यसमानलोपतैव ॥ असमानलोपोपधाया इति किम्? अससासत् ॥ उपधाया इति किम्? अचकाङ्क्षत् ॥ कथं गोनामवमाख्यातवान् । अजुगोनत् । ओतः स्थानिवद्भावात् ॥

न शास्वृदनुबन्धानाम् ॥ ४५ ॥

शासेर्ऋदनुबन्धानां चोपधाया ह्रस्वो न भवति । इनि चण् परे । अशशासत् । अडुढौकत् ॥ शासेरिति किम्? आङः शास इच्छायाम् । आशीशसत् ॥ श्रोणेर्ऋ-

दनुबन्धो ज्ञापनार्थः ॥ नित्यमपि द्विर्वचनं ऋस्वत्वेन बाध्यते । तेन मा भवानटिटत् ॥

भ्राजृ । भासृ । भाषृ । एषामृदनुबन्धो नाद्रियते । भ्राज अबिभ्रजत् । भ्रास अबिभ्रसत् । भास अबोभसत् । दीप अदीदिपत् । जीव अजीजिवत् । मील अमीमिलत् । पीड़ अपीपिड़त् । कण अचीकणत् । वण अवीवणत् । भण अबीभणत् । श्रण अशीश्रणत् । हेठ अजीहिठत् । लुप्लृ अलूलुपत् ॥ भ्राजनं भ्राजस् तमचीकरत् । अबभ्राजत् । समानलोपत्वात् । तेन भ्राजादीनां वेति न वक्तव्यम् ॥

## लोपः पिबतेरीच्चाभ्यासस्य ॥ ४६ ॥

पिबतेरुपधाया लोपो भवति । अभ्यासस्येच्च भवति । इनि चण्परे । अपीप्यत् ॥ पिबतेरिति किम् । पै ओवै । अपीपयत् ॥ पा रक्षणे । अपोपलत् ॥

## तिष्ठतेरित् ४७ ॥

ऋस्व ईकारोऽभ्यासस्येह । तिष्ठतेरुपधाया इद् भवति । इनि चण्परे । अतिष्ठिपत् ॥

## जिघ्रतेर्वा ॥ ४८ ॥

जिघ्रतेरुपधाया इद् भवति वा । इनि चण्परे । अजिघ्रिपत् । अजिघ्रपत् ॥ कथम् अवीवृधत् । अववर्धत् । अमीमृजत् । अममार्जत् । अचीकृपत् । अचकल्पत् । अचीकृतत् । अचिकीर्तत् । इनि चणि ऋवर्णस्य संज्ञा-

पूर्वकत्वात् कोर्त्तीषोः क्रिय [का० ४. ५. ८६] इति ज्ञापकस्य नित्यत्वात् ॥

॥ इति दौर्गसिंह्यां वृत्तावाख्याते पञ्चमः पादः समाप्तः ।

---

## अनिदनुबन्धानामगुणेऽनुषङ्गलोपः ॥ १॥

अनिदनुबन्धानां धातूनामगुणे प्रत्यये परेऽनुषङ्गलोपो भवति । भ्रस्यते । ध्वस्यते । नष्टः । नष्टवान् ॥ अनिदनुबन्धानामिति किम् ? मञ्ज्यते । वञ्च्यते । अतएव वर्जनादिदनुबन्धानां लोपोऽस्तीति ॥ तथा च हंहणमिति स्वरान्तत्वान्न स्यात् । नञा निर्दिष्टस्यानित्यात् ॥

लङ्गिकम्प्योरुपतापशरीरविकारयोः स्यात् । विलगितः । विकपितः ॥

त्वनफादीनां श्नुन्कान्तानामनि न च लुप्यते । तफ तुन्फ तुम्फौ । तुम्फतीत्यादि ।

## नशञ्जश्च विकरणात् ॥ २ ॥

अनिदनुबन्धाना चकारेण योगः । परेऽगुण इति सामान्यम् । इदनुबन्धानामनिदनुबन्धानां च गुणिन्यगुणे च नशञ्जश्च विकरणादनुषङ्गस्य लोपो भवति । भनक्ति । भङ्क्तः । भञ्जन्ति । हिनस्ति । हिंस्तः । हिंसन्ति ॥

## परोक्षायामिन्धिश्रन्थिग्रन्थिदम्भीनामगुणे ॥३॥

इन्ध्यादीनां परोक्षायामगुणे परतोऽनुषङ्गस्य लोपो

भवति। समीधे। समीधाते। समीधिरे। वचनादाम् नास्ति॥ ऐधत्। ऐधताम्। ऐधन्॥ इत्यादीनामेवेति नियमात्। शश्रंसे। बभञ्जतुः॥

## दन्शिसन्जिस्वन्जिरन्जीनामनि॥ ४॥

दन्श्यादीनाम् अनि विकरणेऽनुषङ्गस्य लोपो भवति। दशति। सजति। परिष्वजते। रजति॥ कथं परिष्वजेते। अन्तरङ्गत्वात् स्थानिवद्भावाच्च॥ दन्श दशन इति निर्देशात्। दशनम्॥ कथम् अभञ्जि। अभाजि। भञ्जेरिचि भञ्जनेऽपि वृत्ति॥

## अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु॥५॥

धातोरुपधाया अस्य दीर्घो भवति। नामिनां च वृद्धिर्भवति। इन्। इच्। अट्। एषु परतः। पाचयति। अपाचि। पपाच। लावयति। अलावि। लुलाव। नाययति। अनायि। निनाय। कारयति। अकारि। चकार॥ धातोरिति किम्? स्वचयति॥ कथं पटुमाख्यातवान्। अपीपटत्। इष्ठौ अन्त्यस्वरलोपः। धातोर्नामिनो गुणे कृत्वा उपधाया दीर्घ सिद्धः॥ नामिग्रहणं लिङ्गार्थमेव बहुवचनं वा॥ कथम् अचकासत्। अजहलत्। संज्ञापूर्वकत्वाद् वृद्धिरनित्येति समानलोपत्वात् सन्वद्भावो न स्यात्॥ तथा। अथ उत्तमे वा। अहं पपच। अहं पपाच। अहं निनय। अहं निनाय। अहं लुलव। अहं लुलाव। अहं चकर। अहं चकार॥

## ञ्णिति परश्चैव स्वराख्यानाम्॥ ६॥

परस्मैपदे सिचि परतः स्वरान्तानां धातूनां वृद्धि-र्भवति । नामिन एव । अरावीत् । अलावीत् । अचैषीत् । अनैषीत् ॥ अर्थात् स्वरान्तग्रहणमुपदेशार्थं तेन । उदवोढाम् ॥ सिचीति किम्? नयाव ॥ परस्मा इति किम्? अच्योष्ट ॥

ऊर्णोतेर्वा । प्रौर्णावीत् । प्रौर्णवीत् ॥

## व्यञ्जनान्तानामनिटाम् ॥ ७ ॥

परस्मैपदे सिचि परतो व्यञ्जनान्तानां धातूनाम-निटां नामिनो वृद्धिर्भवति । उपधाया एव । अभैत्सीत् । अरौत्सीत् । अतार्क्षीत् ॥ अनिटामिति किम्? अकोषीत् ।

## अस्य च दीर्घः ॥ ८ ॥

परस्मैपदे सिचि परतो व्यञ्जनान्तानां धातूनाम् अनिटामस्य च दीर्घो भवति । अपाक्षीत् ॥ पृथग्योगात् । अभाङ्क्षीत् ।

## वदव्रजरलन्तानाम् ॥ ९ ॥

क्षण । अक्षणीत् ॥ श्वस । अश्वसीत् ॥ अनिटामिति नञा निर्दिष्टस्यानित्यत्वात् ॥

**श्विजाग्रोर्गुणः ॥ १० ॥**

सिचि परस्मै परे श्विजाग्रोर्गुणो भवति । अश्वयीत् । अजागरीत् ॥ वृद्धेरपवादः ॥

**अर्त्तिसर्त्त्योरणि ॥ ११ ॥**

अर्त्तिसर्त्त्योरणि गुणो भवति । मा भवानरत् । असरत् । कथम् अजरत् । अदर्शत् । ऋवर्णस्योपलक्षणत्वात् ॥

**जागर्त्तेः कारिते ॥ १२ ॥**

जागर्त्तेः कारिते परे गुणो भवति । जागरयति ॥

**यणाशिषोर्ये ॥ १३ ॥**

जागर्त्तेर्यणाशिषोर्ये परे गुणो भवति । जागर्य्यते । जागर्य्यात् ॥ य इति किम् ? जागरिषीष्ट । इड्व्यञ्जनेति वृद्धिः स्यात् ॥

**परोक्षायामगुणे ॥ १४ ॥**

जागर्त्तेः परोक्षायामगुणे गुणो भवति । जजागरतुः । जजागरुः ॥ अगुण इति किम् ? जजागार ॥

**ऋतश्च संयोगादेः ॥ १५ ॥**

संयोगादेर्धातोर्ऋतश्च परोक्षायामगुणे गुणो भवति । सस्मरतुः । सस्मरुः ॥ कथं सञ्चस्करतुः । सञ्चस्करुः । असिद्धं बहिरङ्गमन्तरङ्गमित्यनित्येयम् ॥

### ऋदन्तानां च ॥ १६ ॥

ऋदन्तानां च परोक्षायामगुणे गुणो भवति। तेरतुः। तेरुः। विशशरतुः। विशशरुः। विददरतुः। विददरुः। निपपरतुः। निपपरुः॥ कथं विशश्रतुः। विशश्रुः। विदद्रतुः। विदद्रुः। निपप्रतुः। निपप्रुः। शृदृपामर्थे श्राद्राप्राय वर्त्तन्ते॥

### ऋच्छ ऋतः ॥ १७ ॥

पुनर्ग्रहणं गुणार्थम्। ऋच्छ ऋतः स्थाने परोक्षायां गुणिन्यगुणे च गुणो भवति। आनर्छ। आनर्छतुः। आनर्छुः॥ कथम्। आरतुः। नित्यत्वान्निमित्ताभावाद्वा नागमविघातः स्यात्॥

### शीङः सार्वधातुके ॥ १८ ॥

शीङः सार्वधातुकेऽगुणे गुणो भवति। एकवर्णत्वाद्-पान्ति। शेते। शयीत। शेताम्। अशेत॥

### अयीये ॥ १९ ॥

शीङ ईकारोऽय् भवति ये परे। शय्यते। अधिशय्य गतः॥ कथं समुह्यते। समुह्य गतः। ऊहत्यर्थे वहिरिति॥ अगुणे ये तु सोपसर्गस्य ऊहतेर्निष्पत्तिरभिधानात्। तेन ह्रस्वो न वाच्यः॥

### आयिरिच्यादन्तानाम् ॥ २० ॥

आदन्तानां धातूनामिचि परे आयिर्भवति निर्दिष्ट-

ष्यात; ष्याते । अष्यायि । अदायि । दायिष्यते । अदायिष्यत । दायिषीष्ट । दायिता । इड्वर्जमिति ॥

## शाच्छासाह्वाव्यावेपामिनि ॥ २१ ॥

शाच्छासाह्वाव्यावेपाम् इनि परे आयिर्भवति । शो शाययति । छो छाययति । सो साययति । ह्वेञ् ह्वाययति । व्येञ् संव्याययति । वेञ् वाययति । पा पाने । पै शोषे । पाययति ॥

## अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यादन्तानामन्तः पो यलोपो गुणश्च नामिनाम् ॥ २२ ॥

अर्त्यादीनामादन्तानां च इनि परे पकारोऽन्तो भवति । यथासम्भवं यलोपो गुणश्च नामिनाम् । तिपा धातुरेव निर्दिश्यते । अर्पयति । ह्रेपयति । व्लेपयति री रेषणे रीङ् स्रवणे वा । रेपयति । क्नोपयति । क्ष्मापयति । ध्मापयति । दापयति । अध्यापयति ॥

## पातेर्लोऽन्तः ॥ २३ ॥

पातेरिनि परे लकारोऽन्तो भवति । पालयति । पाल रक्षणे चौरादिकोऽप्यस्ति पातेरायिः स्यादिति वचनम् । पुनरन्तग्रहणम् आदेशो वा स्यादिति ॥

## धूञ्प्रीणात्योर्नः ॥ २४ ॥

धूञ्प्रीणात्योरिनि परे नकारोऽन्तो भवति । धूनयति । प्रीणयति ॥ धूञ्प्रीणात्योरिति किम् ? धू विधूनने । विधावयति । प्रीङ् प्रीतौ । प्राययति ॥

घृतं विलीनयति । विलीनं करोतीतीन् । घृतं विलाल-
यति । ललते रूपम् । स्ने हद्रवीकरणे लियः कारिते वृत्ति-
र्नास्त्यनभिधानात् ॥

पक्षेणोपवाजयतीति वजते रूपम् । वाधातोः कम्पने
कारिते न वृत्तिः ॥

सत्यार्थवेदानामन्त आप् कारित एव चुरादौ । सत्याप-
यति । अर्थापयति । वेदापयति ॥ कथं कारापयति ।
वर्णापयति । शब्दापयति । आपनमापः कारस्यापः
कारापः तं करोतीतीन् । हेतौ साधुरेवेष्टव्यं वा ॥

## स्फायेर्वादेशः ॥ २५ ॥

स्फायेरिनि परे वादेशो भवति । स्फावयति । आगमः
स्यादित्यादेशवचनम् ॥

## शदेरगतौ तः ॥ २६ ॥

शदेरगत्यर्थस्य इनि परे त आदेशो भवति । फलानि
शातयति ॥ अगताविति किम् ? गाः शादयति । गमय-
तीत्यर्थः ॥

रुहर्थे रुपिरिति बीहीन रोपयति । कायमध्यारोपयति ।
अर्थं समारोपयति ॥ रुहेस्तु । रोहयति । आरोहयति
हस्ती हस्तिपकम् ॥

## हन्तेस्तः ॥ २७ ॥

हन्तेरिनि परे तकारोऽन्तो भवति । घातयति ॥ पुन-
स्तग्रहणं गत्यर्थम् । तेन ग्रसाद् गां वातयति । गमयती-
त्यर्थः ॥

### हस्य हन्तेर्घिरिनिचोः ॥ २८ ॥

हन्तेर्हस्य इनिचोः परतो घिर्भवति । घातयति । अघानि । हान्तस्य धातोर्विशेषणं स्यादिति पुनर्हन्तिग्रहणम् ॥

### लुप्तोपधस्य च ॥ २९ ॥

हन्तेर्लुप्तोपधस्य च हस्य घिर्भवति । घ्नन्ति । आघ्नते ॥ लुप्तोपधस्येति किम् ? क्लमापहः । तमोपहः ॥

### अभ्यासाच्च ॥ ३० ॥

अभ्यासात्परस्य हन्तेर्हस्य घिर्भवति । जघान ॥ हन्तेरभ्यासादिति किम् ? हननीयितुमिच्छति । जिहननीयिषति ॥
हेरचणीति वक्तव्यम् । जिघीषति । प्रहाययितुमिच्छति । प्रजिघाययिषति ॥ अचणीति वचनात् । प्राजीहयत् ॥

### जेर्गिः सन्परोक्षयोः ॥ ३१ ॥

जयतेः सन्परोक्षयोर्गिर्भवति । जिगीषति । जिगाय । विजिग्ये ॥ जिनातेर्न घिविकलत्वात् । जिज्यतुः ॥

### चेः किर्वा ॥ ३२ ॥

चिञः सन्परोक्षयोः किर्भवति वा । चिकीषति । चिचीषति । चिकाय । चिचाय । चिक्ये । चिच्ये ॥ कि क्ति आने परस्मैपदीति वचनम् ॥

### सघोऽल्लोपः स्वरेऽवङ्गुत्वे ॥ ३३ ॥

सन्स्वरे च ॥ ३८ ॥

धातोराकारस्य लोपो भवति। सन्ध्यक्षरे च परतः। व्यतिरे। व्यतिले॥

अस्तेः सौ ॥ ३९ ॥

अस्तेः सौ परेऽन्तस्य लोपो भवति। असि॥ कथम् आशीः। लाक्षणिकत्वात्॥ आध्वम्। आसाध्वम्। इति सस्य तृतीयेऽपि ध्वे उच्चारणस्याभेदात्॥

ह एकारे वक्तव्यः। व्यतिहे॥ कथम् ईहामासे। तिपा धातुस्वरूपनिर्देशात्॥

अभ्यासस्वरयोरस्य तौ सलोपश्च ॥ ४० ॥

इह धातुप्रस्तावेऽकारसन्ध्यक्षरयोः परयोरकारस्य ता-वकारसन्ध्यक्षरे वर्णौ भवतः। यथासङ्ख्यम्। तयोश्च निमि-त्तभूतयोर्लोपो भवति। चिकीर्षति। दीव्यन्ति। पच्यन्ते। पचे॥ अस्येति किम्? यान्ति॥ असन्ध्यक्षरयोरिति किम्? पचति॥ अस्य लोप इति सिद्धे तौ तल्लोपश्चेति किम्? पचन्ते। नलोपो माभूत्॥

दीधीवेव्योरिवर्णयकारयोः ॥ ४१ ॥

दीधीवेव्योरन्तस्य लोपो भवति। इवर्णयकारयोः परयोः। आदीधिता। आवेविता। आदीधीत। आवेवीत। आदीध्यते। आवेव्यते॥ न यथासंख्यमिष्टेति न तु प्रत्येकं धातवो द्विवचनात्॥

नामि व्यञ्जनान्तादायेरादेः ॥ ४२ ॥

नाम्यन्ताद् व्यञ्जनान्ताच्चायेरादेर्लोपो भवति । अन्नो-यते । रैयते । विदुष्यते । अनुडुह्यते ॥ ब्राह्मणीवाचरति । नित्यत्वात् पुंवद्भावः । ब्राह्मणायते ॥ सन्निपातलक्षणं स्यादिति नाभिधानम् ॥

**गमहनजनखनघसामुपधायाः स्वरादावनण्यगुणे ॥ ४३ ॥**

गमादीनामुपधायाः स्वरादावण्वर्जितेऽगुणे लोपो भवति । जग्मतुः । जग्मुः । जघ्नतुः । जघ्नुः । जनी जन जज्ञे । चख्नतुः । चख्नुः । जक्षतुः । जक्षुः ॥ स्वरादाविति किम् ? गम्यते ॥ अनणीति किम् ? अगमत् । अघसत् ॥ अगुण इति किम् ? गमिष्यति ॥

**कारितस्यानामिड्विकरणे ॥ ४४ ॥**

आमिड्विकरणादन्यस्मिन् प्रत्यये कारितस्य लोपो भवति । अचीकरत् । अचीकमत । अररचत् । कार्यते । कारणा । इत्यादि । यत्वादयो बाध्यन्ते ॥ अनामिड्विकरण इति किम् ? कारयामास । कारयिता । कारयति । अहं कारये । सद्भावादस्वरान्तत्वाच्च गुणः ॥

**यस्यापत्यप्रत्ययस्यास्वरपूर्वस्य यिन्‌आयिषु ॥ ४५ ॥**

यिन्‌आयौ द्वौ बहुवचनं गणार्थम् । यस्मिंस्त्यकार उच्चा-रणार्थः । अपत्यप्रत्ययसम्बन्धिनो यस्यास्वरपूर्वस्य यिन्‌आ-यिनिमित्तयोरस्वरधर्मेकारेषु लोपो भवति । गार्गीयति । गार्गायते । गार्ग्यं साधु गार्ग्यां इति श्रुतिरभेदात् । द्वे

नकारान्तेश्च कुदादपत्यमात्रे गर्गादित्वात् य्य । कौरव्य स्यापत्यमित्यौ कौरविः । नैपादिः । गार्ग्यस्यायं गार्गी य । गार्गाणां समूहो गार्गकम । समूहेऽकण् । काल गाजन्यकम । गणस्तम्भनियमिति गार्गी स्यात् । गार्गी म्योगव ॥ अनात्मपर इति किम्? गार्ग्यायणः ॥ यिन आशिष्विति किम्? गार्ग्यमाचष्टे गार्ग्यतीति ॥ यिन आद्येष्विति न्याय्य पाठः । तद्धितानामाकृतिप्रधानत्वात् । तथा च सौमो देवताऽस्या. सौमी ऋक् च दृश्यते ॥ अस्य रपूर्वस्येति किम? आत्रेयीयमि । आत्रेयायते । आत्रेयी स्यात । आत्रेयी कृतो ॥

मत्स्यस्य यस्य लोक र ईये चागस्त्यसूर्य्ययो ।
तिष्यपुष्ययोर्नक्षत्रे अनि यस्य विभञ्जनात् ॥

मत्सी । अगस्त्यस्यापत्यमित्यण् । आगस्त्यस्यायम आगस्तीय । आगस्त्यस्येयम आगस्ती । सूर्य्यस्याय सौर्यः । तत्र भव' सौरीय । सूर्य्यस्येय सौरी दिक् । तैषमहः । तैषी रात्रिः । पौषमहः । पौषी रात्रि । गणात पृथग्विधिरुत्तरार्थ ॥

## नलोपश्च ॥ ४६ ॥

नकारो लुप्यते येन स नलोपो योग । अर्थात् यिन आख्यातेलोप एव करणीय । विदुष्यति । विदुष्यत । एव राजीयति । पथीयति ॥ पु ष्यतीत्यपि ॥ नियमः किम ? दोष्यतीत्यपि ॥ काय चतुर्य्यति । अनुडुह्यति । गीर्य्यति । धूर्य्यति । शब्दाययत्यादिर्नियमः । सर्पिष्यति । धनुष्यति ।

सिचो धकारे परे लोपो भवति। अलविढ्वम्। अच्योढ्वम्॥ अयमर्थमिति सस्य तृतीयेऽपि ध्व उच्चारणस्याभेदात्॥

## धुटश्च धुटि॥ ५१॥

धुटः परस्य सिचो लोपो भवति। धुटि परे। अभित्त। अभित्थाः॥ धुट इति किम्? अमंस्त॥ धुटीति किम्? अभित्साताम्॥

## ह्रस्वाच्चानिटः॥ ५२॥

ह्रस्वात्परस्यानिटः सिचो लोपो भवति। धुटि परे। अकृत। अकृथाः। समस्थित। आहत॥ ह्रस्वादिति किम्? अच्योष्ट। नेटः परस्य चेति सुखार्थम्। तेन। अपारिष्टाम। अयोनिष्ट॥

## इटश्चेटि॥ ५३॥

इटः परस्य सिचो लोपो भवति। ईटि परे। अलावीत्। अकोषीत्॥ इट इति किम्? अभैत्सीत्॥ ईटीति किम्? अकनिषम्॥

## स्कोः संयोगाद्योरन्ते च॥ ५४॥

धातोः संयोगाद्योः सकारककारयोर्लोपो भवति धुट्यन्ते च। आरिषते। आलिषते। आचष्टे। भ्रष्टा। भ्रक्ष्यति॥ त्वष्टु। त्वष्टिः। क्तौ नेट्॥ अन्ते चेत्युत्तरार्थम्। भाषायामपि चेक्रीयितलुगन्तमित्यन्ये। अवाभ्रट्॥ स्कोरिति किम्? अकार्ष्टाम्। मृज अमार्ट्। धुट्यन्त इति किम्? भज्जते। आचक्ष्महे॥

## चवर्गस्य किरसवर्णे ॥ ५५ ॥

चवर्गस्य किर्भवति । असवर्णे धुट्यन्ते च ॥ वक्ता । योक्ता । अनैनक् । अवैवेक् ॥ असवर्ण इति किम । इच्छति । उज्झति ॥

## हो ढः ॥ ५६ ॥

धातोर्हकारस्य ढो भवति धुट्यन्ते च । लेढा । लेक्ष्यति । अलेट् ॥

## दादेर्घः ॥ ५७ ॥

धातोर्दादेरवयवस्य हस्य घो भवति धुट्यन्ते च । अधोक्ष्यत । अधोक् ॥ कथं दोग्धा । आद्यन्तवद्भावात् ॥

## नहेर्धः ॥ ५८ ॥

नहेर्हस्य धो भवति धुट्यन्ते च । नद्धा । नत्स्यति । अनात्सीत् ॥

## भृज्जादीनां षः ॥ ५९ ॥

भृज्जादीनामन्तस्य षो भवति धुट्यन्ते च । भ्रष्टा । भ्रक्ष्यति । स्रष्टा । स्रक्ष्यति । मार्ष्टा । अमार्ट् । मार्क्ष्यति । यज यष्टा । राज् राट्‌ । भ्राज् भ्राट् ॥ भ्रस्जेर्भृजि-रिहोपलक्षणम् । निपातनस्येष्टविषयत्वात् सम्प्रसारणादन्यत्र विभाषा । भ्रष्टा । भर्ष्टा । भ्रज्जनम् । भर्ज्जनम् ॥ सम्प्रसारणे तु । भृज्जति । भृज्जते ॥

## छशोः ॥ ६० ॥

छशोश्च षो भवति धुट्यन्ते च। प्रष्टा। प्रक्ष्यति। क्रोष्टा। क्रोक्ष्यति। अचोक्रोट्॥ निमित्ताभावाद् द्विर्वा पाठः॥

## भाषितपुंस्कं पुंवदायौ ॥ ६१ ॥

भाषितपुंस्कं पुंवद् भवति। आयौ परे। ब्राह्मणी-वाचरति। ब्राह्मणायते। श्येनी श्येनायते। हरिणी हरि-णायते। एनी एतायते। लोहिनी लोहितायते। श्येत-हरितलोहितेभ्यस्तो न इति नदादौ। च्व्यर्थे तु न भवति गौणत्वात्। अलोहिनी लोहिनी भवति। लोहिनीयते। इत्यन्ये॥ पुमानिव पुंवत् स्त्रीति लोकतः सिद्धम्। तदा-धिकारबलाद् अमुख्यमपि नपुंसकं पुंवदिति। तेनाति नूयते॥ भाषितः पुमान्यस्मिन्नर्थे इति समासात्। द्रौणी-यते। कथं श्वश्रूयते। श्वशुरस्य श्वश्रूरूङन्तो निपातनात्। नासौभावत्र श्वशुरत्वम् अपि तु विशिष्टमेव रूढम्॥ कथं गर्भीयते शालिः। अन्तर्वर्त्तित्वमात्रविवक्षयेति॥

## आदातामाथामादेरिः ॥ ६२ ॥

अकारात्परयोरातामाथामित्येतयोरादेरिर्भवति। पचे-ताम्। पचेथाम्॥ अकारादिति किम्? व्यत्यपाताम्॥

## आते आथे इति च ॥ ६३ ॥

अकारात्परयोराते आथे इत्येतयोरादेरिर्भवति। प-चेते। पचेथे॥ अविकृतनिर्देशात् स्वरे विकृतिर्नास्तीति। इति चैवं प्रकारे द्रष्टव्यः। तेन पचावहे आवामिति स्वरे विकृतिर्न स्यात्॥

## याशब्दस्य च सप्तम्याः ॥ ६४ ॥

अकारात्परस्य याशब्दस्य सप्तम्या इर्भवति । पचेत् । पचेताम् । पचेः ॥ अकारादिति किम् ? अद्यात् ॥

## यामुसोरियमियुसौ ॥ ६५ ॥

अकारात्परयोर्यामुसोरियमियुसौ भवतः । यथासंख्यम् । पचेयम् । पचेयुः ॥ कथम् आह । आहतुः । आहुः । आत्थ । आहथुः । ब्रुवस्त्यादिषु पञ्चसु निपाता वा । तथा विदेर्नवसु । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म ॥

## शमादीनां दीर्घो यनि ॥ ६६ ॥

शमादीनां दीर्घो भवति यनि परे । शाम्यति । दाम्यति ॥ मदीपर्यन्तः शमादिः ॥ यनीति किम् ? शम्यते ॥

## ष्ठिवुक्लम्वाचमामनि ॥ ६७ ॥

एषामनि परे दीर्घो भवति । ष्ठीवति । क्लामति । आचामति ॥ आङिति किम् ? विचमति । चमति ॥

## क्रमः परस्मै ॥ ६८ ॥

क्रमः परस्मैपदेऽनि दीर्घो भवति । क्रामति ॥ कथं क्राम । ह्रेर्लोपात् ॥ परस्मा इति किम् ? पराक्रमते । उपक्रमते ॥

## गमिष्यमां छः ॥ ६९ ॥

सामान्यमनुवर्त्तते । एषामन्तस्य छो भवति । अनि

परे। गच्छति। सङ्गच्छते। इच्छति। यच्छति। आय
च्छति॥

पः पिबः ७० ॥

पाधातोरनि परे पिबादेशो भवति। पिबति॥
अदन्तो वा। अनिपाऊपस्येति किम्? पै ओवै। पायति।

घ्रो जिघ्रः॥ ७१॥

घ्राधातोरनि परे जिघ्रादेशो भवति। जिघ्रति॥

ध्मो धमः॥ ७२॥

ध्माधातोरनि परे धमादेशो भवति। धमति॥

स्थस्तिष्ठः॥ ७३॥

स्थाधातोरनि परे तिष्ठादेशो भवति। तिष्ठति।

म्नो मनः॥ ७४॥

म्नाधातोरनि परे मनादेशो भवति। मनति॥

दाणो यच्छः॥ ७५॥

दाण्धातोरनि परे यच्छादेशो भवति। यच्छति॥

दृशेः पश्यः॥ ७६॥

दृशेरनि परे पश्यादेशो भवति। पश्यति॥

अर्तेर्ऋच्छः॥ ७७॥

अर्तेरनि परे ऋच्छादेशो भवति। ऋच्छति॥ तिव
निर्देशार्थ एव॥

सर्तेर्धावः ॥ ७८ ॥

सर्त्तेरनि परे धावादेशो भवति। धावति ॥ ननु धावु गतावप्यस्ति जवाभिधाने यथा स्यादिति वचनम्। तेन म्रियामनुसरति ॥

शदेः शीयः ॥ ७९ ॥

शदेरनि परे शीयादेशो भवति। शीयते ॥

सदेः सीदः ॥ ८० ॥

सदेरनि परे सीदादेशो भवति। सीदति ॥

जा जनेर्विकरणे ॥ ८१ ॥

जनेर्विकरणे जादेशो भवति। जनी। जायते ॥ यणि तु ये वा स्यात्। जायते। जन्यते ॥

ज्ञश्च ॥ ८२ ॥

ज्ञश्च विकरणे जादेशो भवति। जानाति ॥

प्वादीनां ह्रस्वः ॥ ८३ ॥

पूजादीनां विकरणे ह्रस्वो भवति। पुनाति। लुनाति। स्त्री चेत्यतो स्वादिग्रादिव्यवच्छित्तये हत्॥ पूङस्तु पवते। मूङ् मवते ॥

उतो वृद्धिर्व्यञ्जनादौ गुणिनि सार्वधातुके। ८४॥

धातोरुतो वृद्धिर्भवति। व्यञ्जनादौ गुणिनि सार्वधातुके परे। यौति। रौमि। नौमि। एर नौति। स्नौति।

कथं जुहोति। जुहोतिरिति निर्देशात्॥ धातोरिति किम्? सुनोति। तनोति॥

## ऊर्णोतेर्गुणः॥ ८५॥

परप्रयोगेनात्र वा गम्यते। ऊर्णोतेर्व्यञ्जनादौ गुणिनि सार्वधातुके परे गुणो भवति वा। प्रोर्णोति। प्रोर्णौति॥

## ह्यस्तन्यां च॥ ८६॥

ऊर्णोतेर्व्यञ्जनादौ गुणिनि ह्यस्तन्यां च नित्यं गुणो भवति। प्रौर्णोत्। प्रौर्णोः॥ चकारोऽनुक्तसमुच्चयार्थः। तनेटि वा स्यात्। प्रोर्णविता। प्रोर्णुविता॥ प्रोर्णवीतु। प्रोर्णुवीतु। इत्यपि स्यात्॥

## तृहेरिड् विकरणात्॥ ८७॥

प्रकृतत्वात्सार्वधातुकमनुवर्त्तते। तृहेर्विकरणात्पर इडागमो भवति। व्यञ्जनादौ गुणिनि सार्वधातुके परे। तृणेढि। तृणेक्षि। तृणेह्मि॥

## ब्रुव ईड् वचनादिः॥ ८८॥

ब्रुव ईड् भवति वचनादिर्भूत्वा व्यञ्जनादौ गुणिनि सार्वधातुके। ब्रवीति। ब्रवीतु। अब्रवीत्॥

चर्करीतादिति केचित्। बोभवीति। बोभोति॥

## अस्तेर्दिस्योः॥ ८९॥

अस्तेः परयोर्दिस्योर्वचनादिरीड् भवति। आसीत्। आसीः। शाङ्कय्याम् त्वमसि॥ तिपा धातुस्वरूपनिर्देशात्। अभूत्॥

सिचः ॥ ८० ॥

सिचः परयोर्दिस्योर्वचनादिरीड् भवति । अकार्षीत् । अकार्षीः ॥ आगमशासनमनित्यमिति केचित् । मा भैः ॥

रुदादिभ्यश्च ॥ ८१ ॥

रुदादिभ्यः परयोर्दिस्योर्वचनादिरीड् भवति । अरोदीत् । अरोदीः । अस्वपीत् । अस्वपीः । अश्वसीत् । अश्वसीः । प्राणीत् । प्राणीः । अजक्षीत् । अजक्षीः । पञ्चैते रुदादयः ॥

अदोऽट् ॥ ८२ ॥

अदः परयोर्दिस्योर्वचनादिरड् भवति । आदत् । आदः ॥ रुदादेरपि केचित् । अरोदत् । अरोदः ॥

सस्य सेऽसार्वधातुके तः ॥ ८३ ॥

सस्य तकारो भवति । असार्वधातुकविषये से । जिघत्सति । वत्स्यति ॥ असार्वधातुक इति किम् ? वस्से ॥

अणि वचेरोदुपधायाः ॥ ८४ ॥

वचेरुपधाया ओद् भवति । अणि परे । अवोचत् । अवोचः ॥ कथं पुस्तकवाच. । असार्वधातुक इति विशेषणात् । एवमुत्तरत्रापि ॥

अस्यतेः स्थोऽन्तः ॥ ८५ ॥

अस्यतेरन्तः स्थो भवति । अणि परे । अपास्थत् ॥

पतेः पप्तिः ॥ ८६ ॥

पतेः पतिर्भवति। अणि परे। अपपत्॥ चिरद् वक्तव्यः। अचरत्॥

## कृपे रो लः॥ ९७॥

कृपे रेफस्य लकारो भवति। कल्प्ता। कल्पयति। कल्पः॥ कथं क्लृप्तः। क्लृप्तिरिति रश्रुतेर्लश्रुतिरिति वक्तव्यं वा। इह ऋकारस्यस्य रेफस्यावर्णात्मन ऌकारस्यो लकारोऽवर्णात्मान्तरतम्याद् भवन्। ऋकारस्यस्य ऌकार एव स्याद् अव्यतिरिक्तत्वात्॥ कथं कृपा। लाक्षणिकत्वात्। कृपणादयो ह्यौणादिका इति॥

## गिरतेश्चेक्रीयिते॥ ९८॥

गिरते रेफस्य लकारो भवति। चेक्रीयिते परे। गर्हितं गिरति। निजेगिल्यते॥

## वा स्वरे॥ ९९॥

गिरते रेफस्य लत्वं भवति वा स्वरे परे। गिरति। गिलति। निगरणम्। निगलनम्॥ निगाल्यत इतीनः स्थानिवद्भावात्॥ गलः प्राण्यङ्गे विषे तु गर इति॥ कपिरिकादेर्लोकतः सिद्धिः। कपिरिका। कपिलिका। रोहिणी। लोहिणी। रोम। लोम। पर्यङ्कः। पल्यङ्कः। परिघः। पलिघः। परियोगः। पल्ियोगः। चूडा। चूला। वडभी। वलभी। जडम्। जलम्। जडधिः। जलधिः। डलयोरेकत्वम्॥ तथोपसर्गस्यायतौ। परायते। पलायते॥ निर्दुरोर्वा स्यात्। निरयणम्। निलयनम्। दुरयणम्। दुलयनम्॥ अतिव्यवहिते नेष्टम्। प्रत्ययते॥

## तृतीयादेर्घढधभान्तस्य धातोरादिचतुर्थत्वं स्ध्वोः ॥ १०० ॥

धातोरवयवस्य तृतीयादेर्घढधभान्तस्यादिचतुर्थत्वं भवति । आन्तरतम्यात् । सकारे ध्वे च परतः । धुक्षति । अधुग्ध्वम् । अधुक्षत । अघुड्ढ्वम् । बुभुक्षते । अभुड्ढ्वम् । धीप्सति । भोत्स्यते । निघोक्ष्यते । इत्याद्यन्तवद्भावात् ॥ स्ध्वोरिति किम् ? दिदग्धिषति । दुग्धः । दुग्धवान् ॥ पुनर्धातुग्रहणमिह सुखार्थं च ॥

## लोपे च दिस्योः ॥ १०१ ॥

धातोरवयवस्य तृतीयादेर्घढधभान्तस्यादेश्चतुर्थत्वं भवति । दिस्योर्लोपे च सति । अधोक् । अजीगोट् । अबोभोत् ॥ दिस्योरिति किम् ? अदुग्धाः । वर्णाश्रयत्वात् प्रत्ययलोपलक्षणं नाप्नोति ॥

## तथोश्च दधातेः ॥ १०२ ॥

दधातेर्धान्तस्यादेश्चतुर्थत्वं भवति । तथोः स्ध्वोश्च परतः । धत्तः । धत्थः । धत्से । धद्ध्वे ॥ धान्तस्येति किम् ? दधाति । दधासि ॥

॥ इति दौर्गसिंह्यां वृत्तावाख्याते षष्ठः पादः समाप्तः ॥

---

## इडागमोऽसार्वधातुकस्यादिर्व्यञ्जनादेरयकारादेः ॥ १॥

धातोर्विहितस्यासार्वधातुकस्य व्यञ्जनादेरयकारादेरादिरिडागमो भवति। भविता। भविष्यति। भवितव्यम्॥ पुनर्धात्वधिकारो धातुसंज्ञाविहितासार्वधातुकार्थः। तेन ष्टस्नाति। शृणोति। जुगुप्सते। मीमांसते॥ असार्वधातुकस्येति किम्? शेते। वेत्सि॥ इकार इटि च [का० ३. ४. २८] इत्यादौ विशेषार्थः॥ व्यञ्जनादेरिति किम्? बभूव॥ अयकारादेरिति किम्? भूयात्॥

## स्नुक्रमिभ्यां परस्मै ॥ २॥

परस्मैपदविषये यौ स्नुक्रमौ ताभ्यां परस्यासार्वधातुकस्य व्यञ्जनादेरयकारादेरादिरिडागमो भवति। प्रस्नविता। प्रस्नविष्यति। क्रमिता। क्रमिष्यति। चिक्रमिषति। परस्मैपदविषय एवेति नियमात्। व्यतिस्नोष्यते। प्रचिक्रंसते। उपचिक्रंसते। प्रोपाभ्यां क्रमो वृत्यादिरादिकर्मणि॥ प्रस्नवितव्यम्। प्रक्रमितव्यम्। इत्यसमानविषयत्वादिट्॥ कथं प्रक्रन्ता। उपक्रन्ता। 'आत्मनेपदविषयस्य क्रमेः कर्तरि कृत्सीट्प्रतिषेधः॥ प्रस्नवितेवाचरति। प्रस्नवितीयते। आचिरयमात्मनेपदी॥

## रुदादेः सार्वधातुके ॥ ३॥

रुदादेर्गणात् सार्वधातुके व्यञ्जनादेरयकारादेरादिरिडागमो भवति। रोदिति। रुदितः। स्वपिति।

स्वपितः । श्वसिति । श्वसितः । प्राणिति । प्राणितः । ज-
क्षिति । जक्षितः ॥ रुदादेः इति परत्वाद् यथा भवितव्यम् ॥

रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा ।
जक्षितिश्चैव विज्ञेयो रुदादिः पञ्चको गणः ॥

ईशः से ॥ ४ ॥

ईशः सादौ सार्वधातुके आदिरिडागमो भवति । ईशिषे । ईशिष्व ॥

ईडजनोः स्ध्वे च ॥ ५ ॥

ईडजनोः स्ध्वे च सार्वधातुके परे आदिरिडागमो भवति । ईडिषे । ईडिष्व । ईडिध्वे । ईडिध्वम् । व्यतिजज्ञिषे । व्यतिजज्ञिध्वे । व्यतिजज्ञिध्वम् ॥ जन जनने । श्न जनौ यना व्यवहितत्वात् ॥ स्ध्वे चेति पठितत्वाच्चकारेण ईशिरनुकृष्यते । ईशिध्वे । ईशिध्वम् ॥

से गमः परस्मै ॥ ६ ॥

परस्मैपदस्य यो गमिस्तस्मात् स आदिरिडागमो भवति । गमिष्यति । जिगमिषति । अधिजिगमिष त्वम् । जिगमिषा । जिगमिषुः । जिगमिषितव्यम् ॥ परस्मैपदस्येति किम् ? अधिजिगांसते । सङ्गंसीष्ट ॥ केचिद् योगं विभज्यात्मनेपदे इटमिच्छन्ति । तन्मतेन अधिजिगमिषुः । अधिजिगमिषितव्यम् ॥ अनिडयं सनीत्येके । तदा । अधिजिगांसुरिति ॥

इण्टद्मात् क्वे ॥ ७ ॥

हन्तेरृदन्ताच्च धातोः स्ये परे आदिरिडागमो भवति । हनिष्यति । हनिष्यमाणः । करिष्यति । करिष्यमाणः । स्वरिष्यति । स्वरिष्यमाणः । अस्वरिष्यत् ॥

### अञ्जेः सिचि ॥ ८ ॥

अञ्जेः सिच्यादिरिडागमो भवति । आञ्जीत् । आञ्जिष्टाम् ॥ ऊदनुबन्धत्वाद् विकल्पे प्राप्ते नित्यार्थं वचनम् ॥

### स्तुसुधूञ्भ्यः परस्मै ॥ ९ ॥

एभ्यः परस्मैपदे सिच्यादिरिडागमो भवति । प्रास्तावीत् । प्रासावीत् । प्राधावीत् ॥ परस्मा इति किम् ? प्रास्तोष्ट । प्रासोष्ट । प्राधोष्ट ॥ धूञ् कम्पनेऽपि । अधावीत् ॥

### यमिरमिनम्यादन्तानां सिरन्तश्च ॥ १० ॥

एषां परस्मैपदे सिच्यादिरिडागमो भवति । सिचान्तो भवति । अयंसीत् । अरंसीत् । अनंसीत् । अयासीत् । अयासिष्टाम् । अम्लासीत् । अम्लासिष्टाम् । अदरिद्रासीत् । अदरिद्रासिष्टाम् । अन्तग्रहणाद् दरिद्रातेरालोपो न स्यात् ॥ कथम् अदरिद्रीत् । अदरिद्रिष्टाम् । आगमस्यानित्यत्वाद् विभाषैव ॥

### स्मिङ्पूङ्रञ्ज्वशूकॄगृदृधृप्रच्छां सनि ॥ ११ ॥

एषां समीपे सनीडागमो भवत्यादिः । स्मिङ् । सिस्मयिषते ॥ पूङ् । पिपविषते । पूञस्तु । पुपूषति ॥ ऋ । अरिरिषति ॥ अञ्जू । अञ्जिजिषति ॥ अशू । अशिशिषते ॥

कॄ । चिकरिषति ॥ गॄ । जिगरिषति ॥ दृङ् । दिदरिषते ॥ धृङ् अवस्थाने । दिधरिषते ॥ प्रच्छ । पिपृच्छिषति ॥

प्रच्छिसहचरिताः कॄ गॄ धृ तौदादिकाः । कॄञ् हिंसायां । चिकरिषति । चिकीर्षति ॥ गॄ शब्दे । जिगरिषति । जिगीर्षति ॥ धृञ् धारणे दिधरिषति । दिधीर्षति ॥ कॄग्रोर्ज्ञापकस्य सविकल्पत्वाद् अन्येषामॄदन्तानां वा स्यादेव ॥ कथं प्रावुवूर्षते । प्राविवरिषते । सवुवूर्षति । सविवरिषति । वृङ्वृञोर्नञानिर्दिष्टस्यानित्यत्वात् ॥

ऋदन्तवृङ्वृञां सनीड् वा स्यादात्मने च सिजाशिषोः ।
संयोगादेरृतो वाच्यः सृडसिद्धो बहिर्भव ॥

तॄ । अतरिष्ट । अतीर्ष्ट । तरिषीष्ट । तीर्षीष्ट ॥ वृ । अवरिष्ट । अवृत । वरिषीष्ट । वृषीष्ट ॥ ध्वृ । अध्वरिष्ट । अध्वृत । ध्वरिषीष्ट । ध्वृषीष्ट ॥ समस्कृत । संस्कृषीष्ट । असिद्धं बहिरङ्गमन्तरङ्ग इति ॥

## इटो दीर्घो ग्रहेरपरोक्षायाम् ॥ १२ ॥

ग्रहेः परस्येटो दीर्घो भवति । न तु परोक्षायाम । ग्रहीता ॥ अग्रहीत् । इट्त्वात् मिथो लोपं स्यात् । अस्य च दीर्घो न स्यात् ॥ कथं ग्राहिता । ग्राहिष्यते । इञ्वदिटोऽश्रुतत्वात् ॥ अपरोक्षायामिति किम् ? जगृहिव । जगृहिम ॥

ऋदन्तवृङ्वृञोऽपि वा दीर्घो न परोक्षाशिषोरिटः ।
न परस्मै सिचि प्रोक्त इति योगविभञ्जनात् ॥

तॄ । तरिता । तरीता ॥ वृङ् वृञ् वा । वरिता । वरीता ॥

वर्जने तु । विशशरिव । विशशरिम । ववरिथ । तरिषीष्ट । वरिषीष्ट । अतारिष्टाम् । अवारिष्टाम् ॥

## अनिडेकस्वरादातः ॥ १३ ॥

एकस्वराद्धातोराकारान्तात् परमसार्वधातुकमनिड् भवति । दाता । दास्यति । दातव्यम् ॥ एकस्वरादिति किम् ? दरिद्रिता ॥

अनात्मनेपदस्थात्तु वृतादेरिड् न स्ये सनि ।

क्लृपस्त्वां च क्लृपेनैव कृतादेर्वापि सेऽसिचि ॥

वृतु । वर्त्स्यति । विवृत्सति ॥ वृधु । वर्त्स्यति । विवृत्सति ॥ शृधु । शर्त्स्यति । शिशृत्सति ॥ स्यन्दू । स्यन्त्स्यति । सिस्यन्त्सति ॥ कृपू । कल्प्स्यति । चिक्लृप्सति । कल्प्तासि । कृपे स्वस्त्वा वा कृचादित्वम् ॥ कृतो । कर्त्स्यति । कर्तिष्यति ॥ एवं चृती हिंसायाम् । चर्त्स्यति । चर्तिष्यति ॥ उछृदिर् । छर्त्स्यति । छर्दिष्यति ॥ उतृदिर् । तर्त्स्यति । तर्दिष्यति ॥ नृती । नर्त्स्यति । नर्तिष्यति ॥ असिचीति किम् ? अकर्तीत् ॥

## इवर्णादश्विश्रिडीङ्शीङः ॥ १४ ॥

इवर्णान्तात् श्विश्रिडीङ्शीङ्वर्जितादेकस्वरात् परमसार्वधातुकमनिड् भवति । चेता । चेष्यति । नेता । नेष्यति । अश्विश्रिडीङ्शीङ इति किम् ? श्वि श्वयिता । श्रि श्रयिता ॥ डीङ् डयिता । शीङ् शयिता ॥ एकस्वरादिति किम् ? अटोधिता । अवेविता ॥

उतोऽयुरुणुस्नुक्षुक्ष्णुवः ॥ १५ ॥

उकारान्तादेकस्वरात् युरुणुस्नुक्षुक्ष्णुवर्जितात् परम-सार्वधातुकमनिड् भवति । होता । स्तोता ॥ अयुरुणु-स्नुक्षुक्ष्णुव इति किम् ? यविता । रविता । नविता । स्नविता । क्षविता । क्ष्णविता ॥ उत इति किम् ? लविता ॥ एक-स्वरादिति किम् ? प्रोर्णविता ॥

ऋतोऽवृङ्वृञः ॥ १६ ॥

ऋदन्तादेकस्वरात् वृङ्वृञ्वर्जितात् परमसार्वधातुक-मनिड् भवति । कर्त्ता । हर्त्ता ॥ अवृङ्वृञ इति किम ? वरिता ॥ ऋत इति किम् ? कॄ करिता ॥ एकस्वरादिति किम् । जागरिता ॥

शकेः कात् ॥ १७ ॥

शकेः कान्तादनिड् भवति । शक्लृ शक्तौ । शक्ता । शक्ष्यति ॥

पचिवचिसिचिरिचिमुचेश्चात् ॥ १८ ॥

एभ्यः पञ्चभ्योऽनिड् भवति । डुपचष् पाके । पच व्य-क्तीकरणे वा । पक्ता ॥ वच वचि । वक्ता ॥ सिच । सेक्ता ॥ रिचिर् । रेक्ता ॥ मुच्लृ । मोक्ता ॥

प्रच्छेश्छात् ॥ १९ ॥

प्रच्छेश्छान्तादनिड् भवति । प्रष्टा । प्रक्ष्यति ॥

दृजिरजिरञ्जिभुजिभजिभञ्जिसञ्जित्यजिभ्रस्-

ञ्जियजिमस्जिसृजिनिजिविजिस्वञ्जेर्जात् ॥२० ॥

एभ्यः पञ्चदशभ्योऽनिड् भवति । युजिर् युजि । योक्ता ॥ रुजो । रोक्ता ॥ रञ्ज । रङ्क्ता ॥ भुज भुजो । भोक्ता ॥ भज । भक्ता ॥ भञ्ज । भङ्क्ता ॥ सञ्ज । सङ्क्ता । त्यज । त्यक्ता ॥ भ्रस्ज । भ्रष्टा ॥ यज । यष्टा ॥ टुमस्जो । मङ्क्ता ॥ सृज । स्रष्टा ॥ णिजिर् । नेक्ता ॥ विजिर् । वेक्ता ॥ न त्वोविजी । ईदनुबन्धत्वात् ॥ ष्वञ्ज । स्वङ्क्ता ॥

अदितुदिनुदिक्षुदिस्विद्यतिविद्यतिविन्दतिविनत्तिच्छिदिभिदिहदिशदिसदिपदिस्कन्दिखिदेर्दात्२१

एभ्यः षोडशभ्योऽनिड् भवति ॥ अद । अत्ता ॥ तुद । तोत्ता ॥ णुद । नोत्ता ॥ क्षुदिर् । क्षोत्ता ॥ ष्विद । स्वेत्ता ॥ विद सत्तायाम् । विद्लृ लाभे । विद विचारे वा । वेत्ता ॥ छिदिर् । छेत्ता ॥ भिदिर् । भेत्ता ॥ हद । हत्ता ॥ शद्लृ । शत्ता ॥ पद । पत्ता ॥ स्कन्दिर् । स्कन्त्ता ॥ खिद दैन्ये । खिद परिघाते वा । खेत्ता ॥

राधिरुधिक्रुधिक्षुधिबन्धिशुधिसिध्यतिबुध्यतियुधिव्यधिसाधेर्धात् ॥ २२ ॥

एभ्य एकादशभ्योऽनिड् भवति ॥ राध । राद्धा ॥ रुधिर् । रोद्धा ॥ क्रुध । क्रोद्धा ॥ क्षुध । क्षोद्धा ॥ बन्ध । बन्द्धा ॥ शुध । शोद्धा ॥ सिध । सेद्धा ॥ बुध अवगमने । बोद्धा ॥ युध । योद्धा ॥ साध । साद्धा ॥

इनिमन्यतेर्नात् ॥ २३ ॥

आभ्यामनिड् भवति । इन । इन्ता ॥ मन ज्ञाने । मन्ता ॥ कथम् अवधीत् । नाय नान्तः ॥

आपितपितिपिस्वपित्रपिशपिक्षुपिक्षिपिलि-
पिलुपिसृपेः पात् ॥ २४ ॥

एभ्य एकादशभ्योऽनिड् भवति ॥ आप्लृ । आप्ता । तप धूप सन्तापे । तप ऐश्वर्ये वा । तप्ता ॥ तिप्ट ॥ तेप्ता ॥ ञिष्वप । स्वप्ता ॥ डुवप । वप्ता ॥ शप । शप्ता ॥ छुप । छोप्ता ॥ क्षिप । क्षेप्ता ॥ लिप । लेप्ता ॥ लुप्लृ । लोप्ता ॥ सृप्लृ । सर्प्ता ॥ कथं तर्प्ता । दर्प्ता । रधादित्वाद् विभाषेट ॥

यभिरभिलभेर्भात् ॥ २५ ॥

एभ्यस् त्रिभ्योऽनिड् भवति । यब्धा । रब्धा । लब्धा ॥

यमिरमिनमिगमेर्मात् ॥ २६ ॥

एभ्यश्चतुर्भ्योऽनिड् भवति । यन्ता । रन्ता । नन्ता । गन्ता ॥

रिशिरुशिक्रुशिलिशिविशिदिशिदृशिस्पृशि-
मृशिदंशेः शात् ॥ २७ ॥

एभ्यो दशभ्योऽनिड् भवति ॥ रिश रुश हिंसायाम । रेष्टा । रोष्टा ॥ क्रुश । क्रोष्टा ॥ लिश । लेष्टा ॥ विश वेष्टा ॥ दिश । देष्टा ॥ दृशिर् । द्रष्टा ॥ स्पृश । स्प्रष्टा ॥ मृश । म्रष्टा ॥ दन्श । दंष्टा ॥

## क्षिपिपुष्यतिकृपिश्लिष्यतिलिपिपिपिविपि-शिपिशुपिगुपिदुपेः पात् ॥ २८ ॥

एभ्य एकादशभ्योऽनिड् भवति । क्षिप । क्षेप्ता ॥ पुष्यति । पोष्टा ॥ कृपति कर्पति वा । कष्टा ॥ श्लिष्यति । श्लेष्टा ॥ लिप । लेप्टा ॥ पिपॢ । पेप्टा ॥ विपॢ । वेप्टा ॥ गिपॢ । गेप्टा ॥ शुप । शोप्टा ॥ दुप । दोप्टा ॥

## वसतिघसेः सात् ॥ २९ ॥

आभ्यामनिड् भवति । वस्ता । जिघत्सति ॥ नार्थं दान्त इति ॥

## दहिदिहिदुहिमिहिरिहिरुहिलिहिलुहि-नहिवहेर्हात् ॥ ३० ॥

एभ्यो दशभ्योऽनिड् भवति । दह । दग्धा ॥ दिह । देग्धा ॥ दुह । दोग्धा ॥ मिह । मेढा ॥ रिह । रेढा ॥ रुह । रोढा ॥ लिह । लेढा ॥ लुह । लोढा ॥ नह । नद्धा ॥ वह । वोढा ॥ रिहिलुही सौत्रौ धातू केचिन्न पठन्त्येव ॥

## ग्रहगुहोः सनि ॥ ३१ ॥

ग्रहगुहोः सनि नेड् भवति । ग्रह । जिघृक्षति ॥ गुह । जुघुक्षति ॥

## उवर्णान्ताच्च ॥ ३२ ॥

उवर्णान्ताद्धातोः सनि नेड् भवति । वर्णग्रहणं कगु-स्नुद्व्यर्थम् ॥ रुरूषति । नुनूषति । सुस्नूषति । चुच्यूषति । सुष्णूषति । लुलूषति । पुपूषति ॥

## इवन्तर्धभ्रस्जदन्भुश्रियूर्णुभरज्ञपिसनितनिपतिदरिद्रां वा ॥ ३३ ॥

एषां सनि परे इडागमो न भवति वा ॥ इवन्त। दिदेविषति। दुद्यूषति ॥ ऋधु। अर्दिधिषति। ईर्त्सति ॥ भ्रस्ज। बिभ्रज्जिषति। बिभ्रक्षति ॥ दम्भु। दिदम्भिषति। धिप्सति। धीप्सति ॥ श्रिञ्। शिश्रयिषति। शिश्रीषति ॥ यु। यियविषति। युयूषति ॥ ऊर्णुञ्। प्रोर्णुनविषति। प्रोर्णुनूषति ॥ भर। बिभरिषति। बुभूर्षति ॥ ज्ञपि। जिज्ञपयिषति। ज्ञीप्सति ॥ सनु। सिसनिषति। सिषासति ॥ तनु। तितनिषति। तितांसति ॥ पतॢ। पिपतिषति। पित्सति ॥ दरिद्रा। दिदरिद्रासति। दिदरिद्रिषति ॥ भ्रस्जभ्रयूनामप्राप्ते विभाषा ॥

## भुवः सिज्लुकि ॥ ३४ ॥

भुवो धातोः सिज्लुकि सति नेड् भवति। अभूत्। अभूताम् ॥ सिज्लुकीति किम्? व्यत्यभविष्ट ॥

## स्वृदृभृस्तुद्रुस्रुश्रुव एव परोक्षायाम् ॥ ३५ ॥

एभ्य एव परोक्षायां नेड् भवति। स्व। सस्वर ॥ दृञ्। दृङ्। वव्रवहे। ववृमहे ॥ डुभृञ् भृञ् वा। बभृव ॥ ष्टुञ्। तुष्टुव ॥ द्रु। दुद्रुव ॥ स्रु। सुस्रुव ॥ श्रु। शुश्रुव ॥ एभ्य एवेति किम्? पेचिव। शेकिव। ददिव। ररन्धिव। नेशिव। रधादित्वाद् विभाषापि बाध्यते। परत्वाद् विकल्प इत्येके। ररन्धिव। रेध्व इति ॥

## थल्य कारात् ॥ २६ ॥

ऋकारान्ताद्धातोस् थलि नेड् भवति । दधर्थ । जहर्थ ॥ थलीति किम्? जह्रिव। जह्रिम ॥ ऋकारान्तादिति किम्? सृज् । ससर्जिथ ॥

नित्यानिटां स्वरान्तानां सृजिदृश्योश्च वेट् थलि ।

तृचि नित्यानिटः स्युर्ये ऋद्धेर्दो नित्यमिट् थलि ॥

पपक्थ । पेचिथ ॥ पपाथ । पपिथ ॥ चिचेथ । चिचयिथ ॥ ससष्ठ । ससर्जिथ ॥ ददृष्ठ । ददर्शिथ ॥ तृचि योऽकारवान् । नित्यानिडिति विशेषणात् । अदेर्घस् । जघसिथ ॥ वेञो वयि । उवयिथ ॥ अर्त्तेर्विकल्पेटत्वात् । आनञ्जिथ । ववरिथ । आरिथ । विव्ययिथ । आदिथ ॥

## कृञोऽसुटः ॥ २७ ॥

असुटः कृञः परोक्षायां थलि च नेड् भवति । चकृव । चकृम । चकर्थ ॥ असुट इति किम्? सञ्चस्करिव । सञ्चस्करिम । सञ्चस्करिथ ॥

स्यसिजाशीःश्वस्तनीषु भावकर्मार्थकासु च ।

स्वरहनग्रहदृशामिड् व्यश्वेति वक्तव्यम् ॥

चेष्यते । चायिष्यते ॥ दास्यते दायिष्यते ॥ एवम् अचेष्यत । अचायिष्यत ॥ अदास्यत । अदायिष्यत ॥ हनिष्यते । घानिष्यते । अहनिष्यत । अघानिष्यत ॥ ग्रहीष्यते । ग्राहिष्यते । अग्रहीष्यत । अग्राहिष्यत ॥ द्रक्ष्यते । दर्शिष्यते । अद्रक्ष्यत । अदर्शिष्यत ॥ सिचि च ॥ अचेषाताम् । अचायिषाताम् ॥ अवधिषाताम् । अघानिषाताम् ॥ अग्रहीषाताम् । अग्रा-

हिषाताम् ॥ अदृचाताम् । अदर्शिषाताम् ॥ आशिषि च ॥ चेषीष्ट । चायिषीष्ट ॥ दासीष्ट । दायिषीष्ट ॥ वधिषीष्ट । घानिषीष्ट ॥ ग्रहीषीष्ट । ग्राहिषीष्ट ॥ दृक्षीष्ट । दर्शिषीष्ट ॥ श्वस्तन्यां च ॥ चेता । चायिता ॥ दाता । दायिता ॥ हन्ता ॥ घानिता ॥ ग्रहीता । ग्राहिता ॥ द्रष्टा । दर्शिता ॥ इज्वद्भावादिटस्तु कारितलोपः स्यात् । कारिष्यते । कारयिष्यते ॥ चोरिष्यते । चोरयिष्यते ॥ मानुबन्धानां ह्रस्वो नित्यम् । गमिष्यते ॥

## सुड् भूषणे सम्पर्युपात् ॥ ३८ ॥

भूषणेऽर्थे सम्पर्युपात् परस्य कृञः सुडादिर्भवति ॥ संस्कर्त्ता । सञ्चस्कार । समस्कार्षीत् । परिष्कर्त्ता । परिचस्कार । पर्य्यस्कार्षीत् । अड्व्यवधानेऽपि षत्वमिष्यते ॥ उपस्कर्त्ता । उपचस्कार । उपास्कार्षीत् ॥ एवं समवायेऽपि वक्तव्यम् । भूषणसमवायाभ्यामन्यत्रापि दृश्यते । संस्कृतमिदमन्नमिति । उपात् प्रतियत्नविकृतवाक्याध्याहारेषु सुड् वक्तव्यः । असिपत्रस्योपस्कुरुते । उपस्कृतं भुङ्क्ते । विकृतं भुङ्क्त इत्यर्थः । उपस्कृतं जल्पति । वाक्याध्याहारं जल्पतीत्यर्थः ॥

॥ इति दौर्गसिंह्यां वृत्तावाख्याते सप्तमः पादः समाप्तः ॥

---

## पदान्ते धुटां प्रथमः ॥ १ ॥

पदान्ते वर्त्तमानानां धुटाम् अन्तरतमः प्रथमो भवति । त्वक्नाथः । षण्मुखानि । ग्रावभट्टीकानम् । तच्छत्रम् । ककु-

ऊभाम: । सर्वप्रथमप्रसङ्गं स्यात् ॥ अलेट् । अलेड् ।
आमोत् । अमाद् । वा विरामे [ का० २. ३. ६२ ] इति
बाधकत्वात् प्रथमतृतीयौ ॥ पदग्रहणम् अप्रकृतस्यापि
लिङ्गस्य परिग्रहार्थं तेन च धातोरन्तो न स्यात् । यदिति ।
पचते ॥ धुटामिति किम् ? अहन् । अपचम् ॥

## रसकारयोर्विसृष्टः ॥ २ ॥

पदान्ते वर्तमानयो रेफसकारयोर्विसृष्टो भवति ।
अबिभः । पयाः ॥ पदान्त इति किम् ? बिभर्त्ति । आस्महे ।
अत एवारम्भः ॥ कथम् अभिनस्त्वम् । अभिनत्त्वम् । अच्छिन-
स्त्वम् । अच्छिनत्त्वम् । सौ पदान्तेऽरेफसकारयोरपि वा इष्टो
रत्व स्यात् ॥

## घढधभेभ्यस्तथोर्धोऽधः ॥ ३ ॥

घढधभेभ्यः परयोस्तथोर्धो भवति । न तु धाञ् ।
अदुग्ध । अदुग्धाः । अलीढ । अलीढाः । अबुद्ध । अबुद्धाः ।
अलब्ध । अलब्धाः ॥ अध इति किम् ? धत्तः । धत्थः ॥

## षढोः कः से ॥४॥

षढोः को भवति से परे । पक्ष्यति । पिपक्षति ।
लेक्ष्यति । लिलिक्षति ॥ स इति किम् ? पिनष्टि । लेढि ॥

## तवर्गस्य षटवर्गाद् टवर्गः ॥ ५ ॥

षाट्टवर्गाच्च परस्य तवर्गस्य टवर्गो भवति । वपुष्टरम् ।
वपुष्टा । ईट्टे । पिनष्टि । कुष्णाति । ईड्ढे । लीढः ।

अन्नोढुम् ॥ टवर्गाट्टवर्ग इति किम । वक्ता । पपक्थ । इति किमर्थम् ॥ कथं मधुलिट् तरति । मधुलिट्तरः । असत्वात् ॥

## ढे ढलोपो दीर्घश्चोपधायाः ॥ ६ ॥

ढे परे ढलोपो भवति । उपधायाश्च दीर्घः । लीढः । मूढः ॥ कथं लेढा । द्रोढा । अन्तरङ्गत्वाद् गुणे कृते ढलोप एव स्यात् ॥ उपधाग्रहणस्य सत्तापूर्वकत्वाद् ऋतो न स्यात् । तृढ । तृढः ॥ दृढ । दृढः ॥

## सहिवहोरोदवर्णस्य ॥ ७ ॥

सहिवहोर्ढे परे ढलोपो भवति । अवर्णस्योद् भवति । सोढा । वोढा ॥ कथम् ऊढः । ऊढवान् । अन्तरङ्गत्वान्नित्यत्वात् सम्प्रसारणम् ॥ वर्णग्रहणं किम् ? उदवोढाम् । सिद्धस्य दीर्घत्वेऽपि न स्यात् ॥

## धुटां तृतीयश्चतुर्थेषु ॥ ८ ॥

धातूनां धुटां चतुर्थेष्वेव तृतीयो भवति । दोग्धा । दिग्धि । चकाद्धि । लब्धा ॥ चतुर्थेष्वेवेति नियमात् । गन्धाति । दिग्धः ॥

## अघोषेष्वशिटां प्रथमः ॥ ९ ॥

अघोषेषु परतो धातूनामशिटां धुटां प्रथमो भवति । धोक्षि । भेत्ता । युयुत्सते । आरिप्सते ॥ अशिटामेवेति किम् ? अक्षि ॥

## भ्रजः स्वरात् स्वरे द्विः ॥ १० ॥

भ्रज, स्वरात् परस्य स्वरे द्विर्भवति। भ्रजो। बभ्रजौ। बभ्रज्जाति। बभ्रजिरे॥ आद्यव्याकरणमतमेतत्॥

## अस्य वमोर्दीर्घः ॥ ११ ॥

अकारस्य वमोः परतो दीर्घो भवति। पचामि। पचाव। पचामः। दीव्यामि। दीव्यावः। दीव्यामः॥ अस्येति किम्? दध्वः। दध्मः। यदि स्याद्दीर्घस्तदाल्लोपो न स्यात्॥ कथं पचमानः। अपचम्। वमोर्विभक्त्योराद्ययोः साहचर्य्यात्॥

## स्वरान्तानां सनि ॥ १२ ॥

स्वरान्तानां धातूनां सनि परे दीर्घो भवति। चिकीर्षति। जुहूषति। चिचीर्षति। शिश्रयिषति। बिभरेषतीति गुणेनाबाधितत्वात् स्वरान्तानामिति सुखार्थमेव॥

## हनिङ्गमोरुपधायाः ॥ १३ ॥

इङो गम, इङ्गमः। हनुइङ्गमोरुपधाया दीर्घो भवति सनि परे। जिघांसति। अधिजिगांसते॥ इङो गम इति किम्? सञ्जिगंसते॥ तितांसति। तितनिषतीति वा वक्तव्यम्।

## नामिनो वोरकुर्छुरोर्व्यञ्जने ॥ १४ ॥

नात्र तदन्तविशेषणम्। वोरुपधाया धातोर्नामिनो दीर्घो भवति व्यञ्जने परे। न तु कुर्छुरोः चिकीर्षति। बुभू-

पति । दीव्यति । सीव्यति । कूर्दते । खूर्दते ॥ धातोरिति किम् ? कुर्कुरः ॥ कथं कुर्कुरीयते । नामधातुत्वात् ॥ नामिन इति किम ? कर्त्ता । भव्यम् ॥ वोरिति किम ? नृत्यति ॥ अकुर्च्छुरोरिति किम् ? कुर्य्यात् । दीर्घविधिं प्रति न स्थानिवदिति । छुर्य्यते ॥ कथं रो रैवणे । रिय्यतुः ॥ वो 'गजने ।' विव्यतुरिति । अभ्यासप्रतिषेध इति ॥ व्यञ्जन इति किम् ? किरति । तुवति ॥

## सस्य ह्यस्तन्यां दौ तः ॥ १५ ॥

सस्य ह्यस्तन्यां दौ परे तो भवति । अचकात् । अन्वशात् ॥ ह्यस्तन्यामिति किम् ? अभैत्सीत् । ईटस्तद्ग्रहणेन ग्रहणात् ॥ ह्यस्तन्यां सौ वा वक्तव्यम् । अचकास्त्वम् । अचकात्त्वम् ॥

## अड्धात्वादिर्ह्यस्तन्यद्यतनीक्रियातिपत्तिषु ॥ १६ ॥

ह्यस्तन्यादिषु परतो धातोरादिरङागमो भवति । अकरोत् । अकार्षीत् । अकरिष्यत् ॥ धातोरिति किम् ? न्यविशत ॥

## स्वरादीनां वृद्धिरादेः ॥ १७ ॥

स्वरादीनां धातूनां ह्यस्तन्यादिष्वादेः स्वरस्य वृद्धिर्भवति । आन्तरतम्यात् । ऐधत । ऐधिष्ट । ऐधिष्यत ॥ कथम् ऐज्यत । औप्यत । औह्यत । अन्तरङ्गत्वादडागमे यणि सम्प्रसारणे सन्धौ च वृद्धिः । पदान्तरङ्गा वा यणादयः ॥

## अवर्णस्याकारः ॥ १८ ॥

स्वरादीनां धातूनामादेरवर्णस्याकारो भवति ह्यस्तन्यादिषु परतः । आटत् । आटीत् । आटिष्यत् । आप्नोत् । आपत् । आप्स्यत् ॥ अवर्णः सर्वमुखस्थानमित्येके । एकदेशेनान्तरतम्यात् । सर्वो ह्रस्वो मा भूदिति वर्णग्रहणम् ॥

## अस्तेः ॥ १९ ॥

अस्तेर्ह्यस्तन्यामगुणेऽवर्णस्याऽऽकारो भवति । आस्ताम् । आसन् । व्यत्यास्त । परोऽप्यवर्णस्याकारो लोपेन बाध्यतेऽस्तिमात्राश्रयत्वात् ॥

## एतेर्ये ॥ २० ॥

एतेर्ये ह्यस्तन्यादि परेऽटोऽवर्णस्याऽऽकारो भवति । आयन् । अध्यायन् ॥ परापि वृद्धिरेकाश्रयित्वेन यत्वेन बाध्यते ॥ य इति किम् ? अगात् ॥

## न मामास्मयोगे ॥ २१ ॥

मायोगे मास्मयोगे च ह्यस्तन्यादिष्वडागमो न भवति । मा भवान् करोत् । मास्म करोत् । जुगुप्सत एनमदृष्टभाव मैवं भवानचरमायुक्त इति मतम् ॥ मा भवान् कार्षीत् । मा स्म कार्षीत् । संयुक्ते न स्यादिति मास्मग्रहणम् ॥ साहचर्यादिमटौ न स्यात् । मा भवानपठत् ॥

## नाम्यन्ताद्धातोराशीरद्यतनीपरोक्षासु षो ढः ॥ २२ ॥

नाम्यन्ताद्धातोरागमाद्यतनीपरोक्षाशीःषु यो धकारस्तस्य ढकारो भवति। चेषीढ्वम्। कषीढ्वम्। अध्यगीढ्वम्। ममस्विढ्वम्। तुष्टुढ्वे। चकृढ्वे॥ अन्तग्रहणं भूतपूर्वनाम्यन्तार्थम्। तेन प्रावरिषीढ्वम्। अलविढ्वम्। लुलुविढ्वे॥ धातोरिति सञ्ज्ञापूर्वकत्वादनित्यार्थम्। तेनास्य सेटस्तु विभाषा सिद्धा। प्रावरिषीढ्वम्। प्रावरिषीध्वम्। अलविढ्वम्। अलविध्वम्। दिदीयिढ्वे दिदीयिध्वे इत्यपि॥

## मर्जो मार्जिः॥ २३॥

मर्ज इत्येतस्य मार्जिरादेशो भवति। मार्ष्टि। मार्क्ष्यति। अमार्ट्। मार्जो वर्त्तते॥ मर्ज इति किम्? मृष्टः॥

अगुणे स्वरे वा वक्तव्यम्। परिमृजन्ति। परिमार्जन्ति॥

## धात्वादेः षः सः॥ २४॥

धातोराद्यवयवस्य षकारस्य सकारो भवति। षह सहते॥ षिच्। सिञ्चति॥ धातोरिति किम्? षट्। षण्ड॥ आदेरिति किम्? लषितुम्॥ कथं षण्डीयति? नामधातुत्वाद् धातोश्चारम्भको यिन् न षकार इति॥ ष्ठिवु क्लम्वाचमामनि [का० ३ ६. ६७] इति निर्देशात्। ष्ठीवति। ष्ठिवेरपि षकारठकारपरस्य सकार परो वेति मतम्। तेन टेष्ठीव्यते। तेष्ठीव्यत इति सिद्धम्॥

ष्वष्केर्न स्यादिति वक्तव्यम्। ष्वष्कते। निमित्तादिकारस्याथ सकारस्य षत्वार्थं षोपदेशो धातूनामिति। तथ

च स्वरदन्त्यपराः सादयः षोपदेशाः । षिङ्ष्विदिष्वदिष्व पयश्च सृपिसृजिस्तृस्त्यासेकृसेकवर्जम् ॥

## णो नः ॥ २५ ॥

धात्वादेर्णकारस्य नकारो भवति । णीञ् नयति । णम नमति ॥ धात्वादेरिति किम् ? क्वणति ॥ अथ णकारो यानि । नामधातुत्वात् ॥ इह्यप्युपसर्गादसमासे णोपदेशस्य णत्वार्थो नकारपाठः ॥ सर्वे नादयो णोपदेशाः । नृतिनन्दिनर्दिन-क्किनाटिनटिनृनाथृनाधृवर्जम् ॥

## निमित्तात्प्रत्ययविकारागमस्थः सः षत्वम् ॥२६॥

अन्त्यार्थोऽयमारम्भः । निमित्तान्नामिकरात् परः प्रत्य-यविकारागमस्थ. सः षत्वमापद्यते ॥ नामिनस्तावत् । चिचीषति । लुलूषति । सर्पिष्षति । धनुष्यति ॥ कात । शक्ष्यति । विवक्षति ॥ रात् । चिकीर्षति ॥ विकारस्थ. । सिषेव । सुष्वाप ॥ आगमस्थः । परिष्करोति । वचनाद् भिन्नपदेऽपि व्यपदेशिवद्भावात ॥ प्रत्ययविकारागमस्थ इति किम् ? सृप्तृ । सिसृप्सति ॥ सेकृ । सिसेकिषते । तस्यैवापि शब्दस्याव प्रपञ्चः ॥

नाम्युपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतीनाम् अड-न्तरोऽपि । अभिषुणोति । अभ्यषुणोत् । अभिषुवति । अभ्य षुवत् । अभिष्यति । अभ्यष्यत् । अभिष्टौति । अभ्यष्टौत् । अभिष्टोभते । अभ्यष्टोभत ॥

स्थासेनिसेधतिसिचसञ्जस्वञ्जाम्  अड्भ्यासान्तरोऽपि ।

अभिष्ठास्यति । अभ्यष्ठात् । अभितष्ठौ ॥ सेनया अभि याति । अभिषेणयति । अभ्यषेणयत् । अभिषिषेणयिषति ॥ अभिषेधति । अभ्यषेधत् । प्रतिषिषेधयिषति । प्रत्यषेधत् । प्रतिषिषेधिषति ॥ अभिषिञ्चति । अभ्यषिञ्चत । अभिषिषि क्षति ॥ अभिषजति । अभ्यषजत् । अभिषिषङ्क्षति ॥ परि-ष्वजते । पर्यष्वजत । परिषिष्वङ्क्षते ॥

सदेरप्रतेः ॥ निषीदति । न्यषीदत । निषिषत्सति ॥ अप्रते-रिति किम् ? प्रतिसीदति । प्रत्यसीदत् । प्रतिसिषत्सति ॥

प्रतेरपि स्तम्भे ॥ प्रतिष्टभ्नाति । प्रत्यष्टभ्नात् । प्रतितष्टम्भ ॥ एवम् अभिष्टभ्नाति । अभ्यष्टभ्नात् । अभितष्टम्भ ॥ अवाद् औजित्यनिकटाश्रयेषु । समवष्टम्भ । अवष्टब्धा सेना । दण्डमवष्टभ्यास्ते ॥ एष्विति किम् ? अवस्तब्धो वृषलः । शीतेन सङ्कुचित इत्यर्थः ॥

वेश्च स्वनो भोजने ॥ विष्वणति । अवष्वणति । व्यष्वणत् । अवाष्वणत् । विषष्वाण । अवषष्वाण । सशब्दं भुङ्क्त इत्यर्थः ॥ एवमन्येऽप्यनुसर्तव्याः ॥

## शासिवसिघसीनां च ॥ २७ ॥

निमित्तात्परः शासिवसिघसीनां च सः षत्वमाप द्यते । शिष्यते । उषितः । जक्षतुः ॥ अविकारस्य इत्यारम्भः ॥

## स्तौतीनन्तयोरेव सनि ॥ २८ ॥

निमित्तात्परः प्रत्ययविकारागमस्थः स्तौतीनन्तयो-रेव सनि षत्वभूते सः षत्वमापद्यते । तुष्टूषति । सिषेधयि-

यति। सुष्वापयिषति॥ स्तोतोनन्तर्गोरिति किम्? सिसि-
चति। सुसूषति॥ णत्वभूत इति किम्? तिष्ठासति। सुष-
पति॥ कथं सापुपयिषते। षिकोयते षत्वं पश्चात् सन्॥
अर्थात् प्रक्षोधिषति। सनोऽव्यवस्यानस्यासस्यानिमित्तात्
षत्वं स्यादेव॥

स्विदिस्वदिसहीनामिनन्तानां नेष्यते। सिस्वेदयिषति।
सिष्वादयिषति। सिसाहयिषति॥ तत्रैवापि शब्देनान्य-
दपि व्यभिचार्यते। तथा सिचयोकोयिते न स्यात्। सेसि-
च्यते॥ सुनोतेः स्ये। अभिसाध्यते॥ सेधतेर्गतौ। अभिसेध-
यति गाम्। गमयतीत्यर्थः॥ एवमन्योऽप्यनुसर्त्तव्यः॥

## लुग्लोपे न प्रत्ययकृतम्॥ २९॥

लुका लोपे सति प्रत्यये परे यत् कार्य्यं प्रकृतेस्तन्न
भवति। लुका लोपो यस्येति विग्रहः। गर्गाः। वत्साः।
कलिङ्गाः। यत्त। कति। दुग्धे। विकरणलुकि न गुणः।
लुकीति न कृतं लुग्लोपयोर्विशेषप्रतिपत्त्यर्थम्। तेन प्रत्यय
लोपे प्रत्ययलक्षणमवधार्य्यते। अभित्। अच्छित्॥ प्रत्य-
यकृतमिति किम्? परस्मान् पम्। उदगु। अद्य॥
कतोह। पचाम॥

## स्वरविधिः स्वरे द्विर्वचननिमित्ते कृते द्विर्वचने॥३०॥

द्विर्वचननिमित्ते स्वरादौ प्रत्यये परे प्रकृतेः पूर्वस्मिन्
परस्मिन् वा द्विर्वचने कृते स्वरस्य स्थाने विधिर्भवति।
पपतुः' आटिटत्। जग्मतुः। इयाय। निनाय। निनयिथ।

लुनाव। लुलविथ। निन्यतुः। चक्रतुः॥ स्वरविधिरिति किम्? अचूचुरत्। सपरस्वरायाः सम्प्रसारणे पश्चाद् द्विर्वचनम्॥ स्वर इति किम? जेघ्नीयते॥ द्विर्वचननिमित्त इति किम्? दुद्यूषति॥ येन विना यन्न भवति तत्तस्य निमित्तम्॥ इटो विधिना सति द्विर्वचनमिति तेन। अरिरिषतीति सिद्धम्॥ चाख्यम्। इयेष। उवोष। न स्या नियत्वम। असवर्णे इति वचनात्॥

## योऽनुबन्धोऽप्रयोगी॥ ३१॥

अनुबध्यत इत्यनुबन्धः। अप्रयुक्तिरप्रयोगः। अनुबन्धो यः सोऽप्रयोगी। अनुच्चारणीयो भवति। इङ्। अधीते॥ डुकृञ्। कुरुते। एवमन्योऽपि॥

## शिडिति शादयः॥ ३२॥

शादयो वर्णा हपर्यन्ताः शिडिति संज्ञिताः॥ शिटप्रदेशाः। शिट्परोऽघोषः [का० ३. ३. १०] इत्येवमादयः॥

## सम्प्रसारणं य्वृतोऽन्तःस्थानिमित्ताः॥ ३३॥

इश्च उश्च ऋश्चेति द्वन्द्वः। तकारः सुखनिर्देशार्थः। अन्तःस्थैव निमित्तमुत्पत्तिर्येषां तेऽन्तःस्थानिमित्ता य्वृत सम्प्रसारणमिति संज्ञिताः॥ सम्प्रसारणप्रदेशाः। सपरस्वरायाः सम्प्रसारणमन्तःस्थायाः [का० ३. ४. १] इत्येवमादयः॥ अन्तःस्थानिमित्ता इति किम्? स्थितः। स्थितवान्। सदीर्घमस्य न स्यात्॥

## अर् पूर्वे द्वे सन्ध्यक्षरे च गुणः॥ ३४॥

अर् पूर्वे द्वे सन्ध्यक्षरे च गुण इति संज्ञिता.। एक पूर्वमेकारमपेक्ष्यापर ओकारमपेक्ष्येति ॥ गुणप्रदेशाः । नाम्यन्तयोर्धातुविकरणयोर्गुणः [ का० ३. ५. १ ] इत्येवमादयः ॥

## आरुत्तरे च वृद्धिः ॥ ३५ ॥

आर् उत्तरे च द्वे सन्ध्यक्षरे वृद्धिरिति संज्ञिताः। आर् । ऐ । औ ॥ वृद्धिप्रदेशा.। वृद्धिरादौ सणे [का० ३. ६. ४८] इत्येवमादयः ॥

इति दौर्गसिंह्यां वृत्तावाख्यातेऽष्टमः पादः समाप्त ॥

॥ इत्याख्यात समाप्तम् ॥

---

अथ कृत ॥

वृक्षादिवदमी रूढाः कृतिना न कृताः कृत; ।
कात्यायनेन ते सृष्टा विबुद्धिप्रतिबुद्धये ॥

## सिद्धिरिज्वद्‌ ञ्णानुबन्धे ॥ १ ॥

ञानुबन्धे णानुबन्धे च कृत्प्रत्यये परे धातोरिचीव कार्यस्य सिद्धिरितिदिश्यते ॥

इज्वद्भावेऽस्योपधाया दीर्घो वृद्धिश्च नामिनाम् ।
हन्तेर्घो जनवधोर्ह्रस्वः कुटादीनां गुणो भवेत् ॥
आदादन्तानामायिश्च इनोचीति निबन्धनात् ।
न ह्रस्वो मानुबन्धानामिचि वा वचनेन च ॥

पाठ. । पाठकः । कारः । का—; । मान· । मानकः ।

जनः। जनकः। वधः। वधकः। उत्कोटः। उत्कोटकः। पायः। पायकः॥ मिद्ग्रिहणं भिन्नकर्तृकत्वान्मङ्गलार्थम्॥

**हन्तेस्तः॥ २॥**

हन्तेर्नकारस्य तकारो भवति। ञानुबन्धे णानुबन्धे च कृत्प्रत्यये परे। घातः। घातकः॥ कथं भ्रौणहत्यमिति रूढितः सिद्धः॥

## न सेटोऽमन्तस्यावमिकमिचमाम्॥ ३॥

इञ्मावमिह मर्ध्यते। सेटोऽमन्तस्य वमिकमिचमिवर्जितस्यैव सत कार्यं न भवति। अशमि। अतमि॥ ञानुबन्धे कृतोञ्वञ्ञायाच। शमः। शमकः। शमी। तमः। तमकः। तमी॥ सेट इति किम्? अयामि। यामः। यामकः॥ अवमिकमिचमामिति किम्? अवामि। अकामि। आभिधानादाङ्पूर्वश्चमिः। आचामि। वामः। कामः। आचामः॥ कथम् आमः। अम रोग इति चौरादिक इति दीर्घः॥ वौ यमेर्णआनिर्दिष्टस्यानित्यत्वात्। विश्रामः॥ कथम् उद्यमः। यम चेति चौरादिको मानुबन्धश्च॥ उपरम इति च दृश्यते॥

**प्रत्ययलुकां चानाम्॥ ४॥**

प्रत्यये लुग् येषां धातूनामेकदेशस्य ते प्रत्ययलुकोऽर्थात् अनामित्यनकाराणाम्। प्रत्ययलुकां धातूनां नलोपवर्जितानां यत् प्राप्तं तत्र भवति। अर्थात् तस्मिन्नेव प्रत्यये परे। समिधिता। समिधकः। अट्टयदि। दृषदकः। चिन्॥

लोलुवः । सरीसृपः । तस्य लुगचि । अस्योपधाया दीर्घो गुणश्च न स्यात् ॥ प्रत्ययस्य लुग् येभ्य इत्यणिः । भिद्यात् । वेत्तीति । इश्नलोर्लुकि प्रतिषेधः स्यात् ॥ अनामिति किम् ? इन्धेर्याञ् । रुधः ॥ उन्दे मनि । ओद्म । रञ्जिः । रागः ॥ कथं कुञ्चेर्निकुचितमिति सन्निपातलक्षणत्वाद्-गुणस्य ॥

## सार्वधातुकवच्छे ॥ ५ ॥

शानुबन्धे कृति परे सार्वधातुक इव कार्यं भवति । जुह्वत् । पचमानः । कृशः श च [का० ४. ५. ७७] क्रिया । यस्य यद्दृष्टं तस्य तदेव श्रुतत्वात् ॥

## टे न गुणः ॥ ६ ॥

टानुबन्धे कृति परे गुणो न भवति । बिभ्यत् । विदन् । सुन्वन् । कतोऽप्यपि मधु लिहानायिन्वाना: ॥

## के यणवच्च योक्तवर्जम् ॥ ७ ॥

कानुबन्धे कृति परे यणीव कार्यं भवति । य उक्त वर्जयित्वा । कृतः । कृतवान् । गृहीत्वा । इष्टिः । यणवद्भावे-ऽगुणत्वं सम्प्रसारणं च स्यात् ॥ योक्तवर्जमिति किम् ? ज्ञातः । जितः । स्मृतः । इकारागमदीर्घगुणा न स्युः ॥

## जागुः शत्र्यन्तञ्व्योः ॥ ८ ॥

जागर्तेः कृति परे यणीव कार्यं भवति । न तु शन्-ञ्व्योः । यणि गिर्योर्वे । जागरूकः । जागरितः । जागर्तिः ॥

कतीति किम् ? जागर्यात् ॥ अग्रन्तुङ्व्योरिति किम् ? जाग्रत् । जागृवि । कृगृजागृभ्यः क्विः ॥

## गुणी क्त्वा सेड् अरुदादिक्षुधकुषक्लिशगुधमृडमृदवदवसग्रहाम् ॥ ९ ॥

अरुदादिक्षुधादीनां क्त्वा सेड् गुणी भवति । यस्मिन् यो भवति स तस्येति विवक्षायामिन । शयित्वा । देवित्वा । ग्रसित्वा ॥ क्त्वेति किम् ? निकुचितिः ॥ शीङादीनां सेड् निष्ठैवेति नियमश्च स्यात् ॥ सेडिति किम ? कृत्वा ॥ अरुदादिक्षुधादीनामिति किम ? रुदविदमुषां सनि [का० ३ ५ १६] इत्यत्र रुदिसहचरितो विदिर्ज्ञानार्थः । रुदित्वा । विदित्वा । मुषित्वा । क्षुधित्वा । कुषित्वा । क्लिश क्लिशू क्लिशित्वा । गुधित्वा । व्युपधत्वाद्वा न स्यात् ॥ मृडित्वा । मृदित्वा । वद उदित्वा । वस निवास एव यजादित्वाद् उषित्वा । क्षुधिवसोश्च [ का० ४ ६ ८७ ] इतीट् ॥ गृहीत्वा ॥

## स्कन्दस्यन्दोः क्त्वा ॥ १० ॥

अनयोः क्त्वा गुणी भवति । स्कन्दिर् स्कन्त्वा । स्यन्द स्यन्त्वा ॥ असेडर्थमिदं पुनः क्त्वाग्रहणम् ॥ यप् गुणी माभूत् । प्रस्कद्य । प्रस्यद्य ॥

## व्यञ्जनादेर्व्युपधस्यावो वा ॥ ११ ॥

उश्च इश्च वी । ते उपधे यस्य स व्युपधः । व्यञ्जनादेर्धातोरुकारेकारोपधस्यावकारान्तस्य क्त्वा सेड् गुणी

भवति वा। द्युतित्वा द्योतित्वा॥ लिखित्वा। लेखित्वा॥
अव्यनादेरिति किम्? एषित्वा। ओषित्वा॥ अथ इति
किम्? देवित्वा॥

सनीति वा वक्तव्यम्। करुचिषते दरोचिषते लिलिखि-
षति लिलेखिषति॥

## तृषिमृषिकृशिवञ्चिलुञ्चऋतां च॥ १२॥

एषां धातूनां क्त्वा सेड् गुणो भवति वा। तृषित्वा
तर्षित्वा। मृषित्वा। मर्षित्वा॥ कृश तनूकरणे। कृशित्वा
कर्शित्वा॥ वचित्वा वञ्चित्वा॥ लुचित्वा। लुञ्चित्वा॥ ऋत
इति सौत्रो धातुः। ऋतित्वा अर्तित्वा॥

## थफान्तानां चानुषङ्गिणाम्॥ १३॥

थान्तानां फान्तानां चानुषङ्गिणां क्त्वा सेड् गुणो
भवति वा। श्रथित्वा श्रन्थित्वा॥ ग्रथित्वा ग्रन्थित्वा॥
गुफित्वा गुम्फित्वा॥ अनुषङ्गिणामिति किम्? कोथित्वा।
रेफित्वा। अगुणत्वे विकल्पो न स्यात्॥

## जान्तनशामनिटाम्॥ १४॥

जान्तनशामनिटामनुषङ्गिणां क्त्वा गुणो भवति वा।
भक्त्वा भङ्क्त्वा॥ रक्त्वा रङ्क्त्वा॥ नष्ट्वा नंष्ट्वा। मस्जि-
नशोर्धुटीति नकारागमः॥ अनिटामिति किम्?
अञ्जित्वा॥

## शीङ्पूङ्धृषिक्ष्विदिस्विदिमिदां निष्ठा सेट्॥१५॥

शीङादीनां निष्ठा सेड् गुणो भवति। शयितः। शयि

तवान् ॥ पवितः । पवितवान् । पूक्लिशोर्वा [का० ४.६. ८८.] इतीट् ॥ एवं धर्षितः । धर्षितवान् ॥ क्ष्वेदितम् । मेदितम् । प्रक्ष्वेदितः । प्रस्वेदितः । प्रमेदितः । आदनुबन्धात् भावादिकर्मणोर्वा [का० ४.६.८२] इतीट् ॥ सेडिति किम् ? पूतः । घृष्टः ॥ उत्तरत्र वा वचनान्नित्यमिहेति ॥

## मृषः क्षमायाम् ॥ १६ ॥

क्षान्तौ वर्तमानान्मृषो धातोर्निष्ठा सेड् गुणी भवति । मर्षितः । मर्षितवान् ॥ क्षमायामिति किम् ? अपमृषितं वाक्यमाह ॥

## भावादिकर्मणोर्वोदुपधात् ॥ १७ ॥

उदुपधाद्धातोर्भाव आदिक्रियायां च निष्ठा सेड् गुणी भवति वा । द्योतितमनेन द्युतितमनेन ॥ प्रद्योतितः प्रद्युतितः । आदिकर्मणि क्तः कर्तरि च । व्यवस्थितविभाषया गुधेर्न स्यात् ॥ गुधितम् ॥

## ह्लादो ह्रस्वः ॥ १८ ॥

ह्लादो दीर्घो ह्रस्वो भवति निष्ठामात्रे । प्रह्लन्नः । प्रह्लन्नवान् ॥ प्रह्लत्तिरिति क्तौ चेष्यते ॥

## छादेर्घस्मन्त्रन्क्विप्सु ॥ १९ ॥

छादेर्घस् मन् त्रन् क्विप् । एषु परतो दीर्घो ह्रस्वो भवति । उरश्छदः । प्रच्छदः । एकोपसर्गस्यैव घे व्यवस्थितवाधिकारात् । तेन समुपच्छादः ॥ अर्चिशुचिरुचिहुसृपिच्छादिच्छर्दिभ्य इस् । छादयतीति छदिः । छदिषी ।

छर्दीषि॥ मन्। छद्म॥ वन्। छाद्यतेऽनेनेति छद्मम्॥ क्विप्। तनुच्छत्॥

## दीर्घस्योपपदस्यानव्ययस्य खानुबन्धे॥ २०॥

दीर्घान्तस्योपपदस्यानव्ययस्य खानुबन्धप्रत्ययान्ते धातौ परे ह्रस्वो भवति। वधुम्मन्या दासी। ग्रामणिम्मन्यो दासः। कुरुम्मन्या। कालिम्मन्या। हरिणिम्मन्येति विवक्षितकर्तृक-र्मैकवस्तुप्राप्तं पुंवद्भावं बाधते परत्वात्॥ दीर्घग्रहणं तद-न्तसुखार्थमित्येके। मालम्मन्या॥ उपपदस्येति किम्? पटुः प्रियंवदा॥ अनव्ययस्येति किम्? दिवामन्या रात्रिः॥

## नामिनोऽम् प्रत्ययवच्चैकस्वरस्य॥ २१॥

उपपदस्यानव्ययस्यैकस्वरस्य नामिनः परोऽम्भवति। खानुबन्धप्रत्ययान्ते धातौ परे। स च प्रत्यय इव मानि-ध्याद् द्वितीयैकवचनवत्। यथा। रविकरस्तम्बु क्रिशन्न-यमिव रक्त इति गम्यते॥ नावम्मन्यः। नरम्मन्यः। गा-म्मन्यः। श्रियम्मन्यः॥ नामिन इति किम्? स्वमान्यः॥ एकस्वरस्येति। किम्? सेनानिम्मन्यः॥

## ह्रस्वारुषोर्मोऽन्तः॥ २२॥

उपपदस्यानव्ययस्य ह्रस्वान्तस्यारुषश्च मकारोऽन्तो भवति खानुबन्धप्रत्ययान्ते धातौ परे। नाडिन्धमः। अङ्गमेजयः। अरुन्तुदः। संयोगादेर्धुटः [ का० २. ३. ५५ ] इति सलोपः॥ अनव्ययस्येति किम्? मुकारः काटः॥

## सत्यागदास्तूनां कारे॥ २३॥

सत्यादीनां कारशब्दे परे मोऽन्तो भवति ॥ सत्यं करोतीति सत्यङ्कारः । एवम् अगदङ्कारः । अस्तुङ्कारः ॥ उपोक्तादिपदानामपि कारे । येऽजन्तेऽपीच्छन्ति । सत्यस्य कारः सत्यङ्कारः । एवमन्यत्रापि मकारवर्णागमो दृश्यते । लोकम्पृणः । भ्राष्ट्रमिन्धः । अग्निमिन्धः । भद्रङ्करणम् । उष्णङ्करणम् । मध्यन्दिनम् ॥ श्येनम्पाता तैलम्पाता क्रीडा ॥

## गिलेऽगिलस्य ॥ २४ ॥

गिलादन्यस्य गिलशब्दे परे मोऽन्तो भवति । गिरतेः कप्रत्ययः ॥ तिमेर्गिलः । तिमिङ्गिलः ॥ एवं विपुङ्गिलम् ॥ अगिलस्येति किम् ? गिलगिलः ॥

अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तरः ।
तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघव ! ॥

## उपसर्गात्सुदुर्भ्यां लभेः प्राग् भात् खलघञोः ॥ २५ ॥

उपसर्गात्परस्य लभेर्भात् प्राङ् मकारागमो भवति । खलघञोः परतः । न तु सुदुर्भ्याम् । ईषत्प्रलम्भः । सुप्रलम्भः । दुष्प्रलम्भः ॥ घञि च । प्रलम्भः । विप्रलम्भः ॥ उपसर्गादेवेति नियमात् । ईषल्लभः । लाभो वर्तते ॥ असुदुर्भ्यामिति किम् ? सुलभः । दुर्लभः ॥ केवलाभ्यामेवेष्यते तेन । अतिसुलम्भः । अतिदुर्लम्भः ॥ कथम् अतिसुलभः । अतिदुर्लभः । पश्चादतिना समासः ॥

## आङो यि ॥ २६ ॥

आङः परस्य लभेर्भात् प्राङ् मकारागमो भवति यकारादौ प्रत्यये परे । आलम्भ्या गौः ॥

## उपात् प्रशंसायाम् ॥ २७ ॥

उपात्परस्य लभेर्भात् प्राङ् मकारागमो भवति प्रशंसायां गम्यमानायां ये परतः। उपलम्भ्यानि धनानि। प्रशंसनीयानीत्यर्थः॥ प्रशंसायामिति किम्? उपलभ्यं शक्यम्। उपलभ्यम्॥ कथम् आलभ्य। उपलभ्यते। लभेर्थकार इति विशेषणात्॥

## वा कृति रात्रेः ॥ २८ ॥

कृदन्ते परे रात्रेर्मोऽन्तो भवति वा। रात्रिञ्चरः। रात्रिचरः। रात्रिमटः। रात्र्यटः। पचादित्वादच्॥ रात्रिम्मन्य इति नित्यम् उपपदाश्रयत्वात्॥

## पुरन्दरवाचंयमसर्वंसहद्विषन्तपाश्च ॥ २९॥

एतेऽण्प्रत्ययान्ता निपात्यन्ते। पुरं दारयतीति पुरन्दर इन्द्रः। वाचं यच्छतीति वाचंयमो व्रत एव। सर्वं सहते सर्वंसहः। द्विषं तापयतीति द्विषन्तपः॥ यत्लक्षणेनानुत्पन्नं तत्सर्वं निपातनात् सिद्धम्॥ भगं दारयतीति भगन्दरो रोगो रूढित एव॥

## धातोस्तोऽन्तः पानुबन्धे ॥ ३० ॥

ह्रस्वारुषोर्मोऽन्तः [का० ४. १. २२] इत्यतो ह्रस्वोऽनुवर्तते। धातोर्ह्रस्वान्तस्य पानुबन्धे कृति परे तोऽन्तो भवति। अग्निचित्। सोमसुत्। प्रकृत्य। इत्वरः॥ धातोरिति किम्? उपपदस्य माभूत्। ग्रामणीः। सेनानिकुलम्॥ ह्रस्वग्रहणमिति। असिद्धं बहिरङ्गमन्तरङ्गे इति॥

झस्वान्तस्येति किम् ? आनीय । आपूय ॥ कथम् उपेत्य । साधनायत्तत्वात् क्रियायाः प्रत्ययकार्य्यमेव ॥ अन्तग्रहणं सुखार्थम् ॥

## ओदौद्भ्यां क्यः स्वरवत् ॥ ३१ ॥

ओदौद्भ्यां क्यः स्वरवद् भवति । लव्यम् । अवश्यला-व्यम् ॥ ओदौद्भ्यामिति किम् ? चेयम् ॥ क्य इति किम् ? उपोयते । प्रोयत । इह कद्ग्रहणादन्यत्र सामान्यमवग-म्यते ॥

## जिक्ष्योः शक्ये ॥ ३२ ॥

जिक्ष्योः शक्येऽर्थे विहितः क्यः स्वरवद् भवति । जेतुं शक्यं जय्यम । क्षेतुं शक्यं क्षय्यम् ॥ शक्य इति किम् ? जेयम् । क्षेयम् ॥ जिक्ष्योरिति किम् ? चेतुं शक्यः । चेय ॥

## क्रीञस्तदर्थे ॥ ३३ ॥

तस्यार्थो द्रव्यविनिमयः । क्रीञः परस्तदर्थे वर्त्तमान-क्यः स्वरवद् भवति । क्रय्या गौः । कश्चित् क्रेष्यतीति कृत्वा हट्टेऽवतारिता गौरित्यर्थः ॥ तदर्थ इति किम् ? क्रेयं मे धान्यं नास्ति क्रय्यम् । न प्रसारितमित्यर्थः ॥

## वेर्लोपोऽपृक्तस्य ॥ ३४ ॥

वेः कृतसंज्ञकस्यापृक्तस्य वर्णान्तरेणासंयुक्तस्य लोपो भवति । क्विप् । घृतस्पृक् ॥ विण् । अर्धभाक् ॥ विच् । तालपाः ॥ कृत इति किम् ? उपेध्यिवांसमाचष्टे । उपेध्य-

वयतीति क्विप्। उपेयिवः। उपेयिवौ ॥ अपृक्तस्येति किम्? क्विबादीनां विशेषकत्वानुबन्धानामपृक्तस्य कार्यापन्नचितस्य वकारस्य लोपार्थं तेनेह न स्यात्। जागृविः। कृगजागृभ्यः क्विः ॥

## य्वोर्व्यञ्जनेऽये ॥ ३५ ॥

यकारवकारयोर्व्यञ्जने परे यकारवर्जिते लोपो भवति। क्नूयी। क्नूतः। क्नूतवान्। दिदिवान्। सिषिवान् ॥ व्यञ्जन इति किम्? क्ष्मायिता। देविता ॥ अय इति किम्? प्रक्नूय्य। प्रदीव्य ॥ कथं कण्डूः। लोल्। वर्णाश्रयेऽपि प्रत्ययलोपलक्षणं क्वचित् ॥ लव्धा। लव्धुमित्योष्ठ्योऽयं वकारः ॥

## निष्ठेटीनः ॥ ३६ ॥

निष्ठायामिटि परे इनो लोपो भवति। कारितः। कारितवान्। गणितः। गणितवान् ॥ इटीति किम्? संज्ञपितः पशुः ॥ इवन्तर्ध [का० ३. ७. ३२] इत्यादिना सनि वेट्।

वेटामेकस्वरत्वात्तु संज्ञपित इहास्ति ते।
प्राप्ते प्रागिणो लोप एकस्वरान्न चेट् यदि ॥

## नाल्विष्ण्वाय्यान्तेत्नुषु ॥ ३७ ॥

आलु। इष्णु। आय्य। अन्त। इत्नु। एषु परत इनो लोपो न भवति। स्पृहयालुः। पारयिष्णुः। स्पृहयाय्यः। स्पृहिगृहिपतिदयिभ्य आय्यः ॥ गण्डयन्तः। मण्डयन्तः।

गण्डिमण्डिजिनन्दिभ्यः झच् ॥ स्तनयित्नुः । स्तनिकृषिपु-पिशटिमटिभ्य इन इत्नः ॥

## लघुपूर्वोऽय् यपि ॥ ३८ ॥

लघुपूर्वं इन अय् भवति यपि परे । वचनादेकवर्णव्य-वधानेऽपि । प्रशमय्य । विगणय्य ॥ लघुपूर्वं इति किम् ? सम्प्रधार्य गतः ॥ आपः परस्य वा वक्तव्यम् । प्राप्य गतः । प्रापय्य गतः ॥ इङादेशस्य लाक्षणिकत्वात् अध्याप्य गतः ॥

## मीनात्यादिदादीनामाः ॥ ३९ ॥

मीनातिमिनोतिदीङां दामागायतिपिबतिस्थास्यति-जहातीनां च यपि परे आकारो भवति । मीञ् प्रमाय । डुमिञ् परिमाय । दीङ् उपदाय ॥ दामादीनामीत्वबाध-नार्थमिदं । प्रदाय । प्रधाय । मेङ् माङ् प्रमाय । प्रगाय । प्रपाय । प्रस्थाय । षो अवसाय अवहाय ॥

## क्षेर्दीर्घः ॥ ४० ॥

क्षेर्दीर्घो भवति यपि परे । प्रक्षीय । उपक्षीय ॥ कथं प्रक्षित्य गतः । क्षिष् हिंसायामिति लाक्षणिकत्वात् ॥

## निष्ठायां च ॥ ४१ ॥

निष्ठायां च क्षेर्दीर्घो भवति । प्रक्षीणः । प्रक्षीणवान् । प्रक्षीयतेऽस्मिन्निति प्रक्षीणमिदं छात्रस्य ॥ दीर्घ इति यत्न-पूर्वकत्वादनित्यार्थः । तेन भावकर्मणोर्न स्यात् । क्षितम-नेन । प्रक्षितश्छात्रो भवता ॥ आक्रोशदैन्ययोश्च वा ।

क्षितायुः । क्षीणायुः ॥ दैन्ये च । क्षितकः । क्षीणकः ॥ क्षितोऽयं क्षीणोऽयं तपस्वी । कर्त्रधिकरणयोरेवावापि ॥

### स्फायः स्फीः ॥ ४२ ॥

निष्ठायां च स्फायः स्फीरादेशो भवति । स्फीतः । स्फीतवान् ॥ स्फायीति । इदनुबन्धबलादादेशोऽयमनित्य इति । स्फातः । स्फातवान् । इडेट् प्रतिषिध्यते ॥

### प्यायः पीः स्वाङ्गे ॥ ४३ ॥

स्वमङ्गं स्वाङ्गम् । स्वाङ्गे वर्त्तमानस्य प्यायतेर्धातोर्निष्ठायां च पीर्भवति । पीनं मुखम् । पीनवन्मुखम् ॥ स्वाङ्ग इति किम् ? प्यानः स्वेदः । प्याना बुद्धिः । प्यानं मुखं शालायाः । प्यानः शोथः । कथं पीनो बाहुरध्यायां पलितः । कथं पीनं मुखं प्रतिमायाः ॥ स्वाङ्गेव

अद्रवं मूर्त्तिमत् स्वाङ्गं प्राणिस्थमविकारजम् ।
अतत्स्थं तत्र दृष्टं च तेन चेत् तत् तथायुतम् ॥

पीनाङ्गयोगात् पीनो वटुरिति । पीनः श्लेषा । पीनो वायुरित्युपमानात् ॥ आपीनोऽन्धुः । आपीनमूधः । आङोऽन्धूधसोरेव ॥

### शृतं पाके ॥ ४४ ॥

श्रातेः श्रपयतेश्च शृतमिति निपात्यते । पाकेऽर्थे । क्षीरहविषोरेव निपातनस्येष्टविषयत्वात् । शृतं क्षीरम् । शृतं हविः ॥ अन्यहेतौ न स्यात् । क्षीरं श्रपितं देवदत्तेन यज्ञदत्तेनेति ॥ क्षीरहविषोरिति किम् ? श्राणा यवागूः । श्रपिता यवागूः ॥

## प्रस्त्यः सम्प्रसारणम् ॥ ४५ ॥

प्रपूर्वस्य स्त्यायतेर्निष्ठायां सम्प्रसारणं भवति । प्रस्तीतः । प्रस्तीतवान् ॥ भेष स्त्या इति समासात् । प्रसंस्तीमः । प्रसंस्तीमवान् । अन्तरङ्गत्वात् कृते सम्प्रसारणे मत्वं तु स्यात् पश्चे ॥

## द्रवघनस्पर्शयोः श्यः ॥ ४६ ॥

द्रवघने स्पर्शे चार्थे श्यायतेर्निष्ठायां च संप्रसारणं भवति । शीनं घृतम् । शीतो वायुः । द्रवीभूय घन कठिनमित्यर्थः । त्वगिन्द्रियग्राह्यो गुणविशेषः स्पर्श इति ॥ द्रवघनस्पर्शयोरिति किम् ? संश्यानो वृश्चिकः । शीतेन सङ्कुचित इत्यर्थः ॥

## प्रतेश्च ॥ ४७ ॥

प्रतिपूर्वस्य श्यायतेर्निष्ठायां सम्प्रसारणं भवति । प्रतिशीनः । प्रतिशीनवान् । प्रतिपूर्वोऽयं रोग एव वर्तते ॥

## वाभ्यवाभ्याम् ॥ ४८ ॥

अभ्यवाभ्यां परस्य श्यायतेर्निष्ठायां सम्प्रसारणं भवति वा । अभिशीनः । अभिश्यानः । अवशीनः । अवश्यानः । उभयत्र विभाषेयम् ॥

## न वेञ्ज्योर्यप्यपि ॥ ४९ ॥

वेञ् । ज्या । इत्येतयोर्यपि परे सम्प्रसारणं न भवति । प्रवाय । प्रज्याय ॥ एतौ यजादिग्रहादी ॥

व्यश्च ॥ ५० ॥

व्येञश्च यपि परे सम्प्रसारणं न भवति । प्रव्याय । उप-
व्याय ॥ यजादिरयम् ॥

सम्परिभ्यां वा ॥ ५१ ॥

सम्परिभ्या परस्य व्येञ सम्प्रसारणं भवति वा ।
यपि परे । सव्याय सवीय । परिव्याय परिवीय ॥ ममी
न विभाषेत्यन्ये ॥

तद्दीर्घमन्त्यम् ॥ ५२ ॥

तत्सम्प्रसारणं दीर्घमापद्यते । अन्त्यं चेत् । हूतः ।
सवीतः । प्रस्तीतः । निवहः । संवीय । अन्तरङ्गत्वात्
तकारागमं बाधते ॥ अन्त्यग्रहणमाख्यातार्थं च । तद्ग्र-
हणमभिन्नवृद्ध्यर्थम् । तेन सपरस्वरायाः स्थाने सम्प्रसा-
रणं सिद्धम् ॥

वः कौ ॥ ५३ ॥

वेञः काविव सम्प्रसारणं दीर्घमापद्यते । ऊः । उवौ ।
उवः ॥ काविति किम् ? उत । उतवान् ॥

ध्याप्योः ॥ ५४ ॥

ध्याप्योः सम्प्रसारणं कौ परे दीर्घमापद्यते । धीः ।
आपीः ॥ वचनात् सम्प्रसारणं सिद्धम् ॥

पञ्चमोपधाया धुटि चागुणे ॥ ५५ ॥

पञ्चमान्तस्योपधाया दीर्घो भवति कौ धुट्यगुणे। प्रशान्। प्रतान्। शान्तः। शान्तवान्। शान्तिः। शान्त्वा॥ धुटीति किम्? अवमत्य॥ अगुण इति किम्? गन्ता॥ दीर्घ इति संज्ञापूर्वकत्वात् क्रमेः क्त्वाप्रत्यये वा। क्रन्त्वा क्रान्त्वा॥

## छ्वोः शूठौ पञ्चमे च॥ ५६॥

छकारवकारयोः स्थाने श् ऊठ्। इत्येतौ भवतो यथासंख्यम्। कौ धुट्यगुणे पञ्चमे च। विट् गोविट्। प्रट् पथिप्राट्। दिव् अक्षद्यूः। पृष्टः। पृष्ट्वा। द्यूतः। द्यूत्वा। दुद्यूषति। विश्नः। प्रश्नः॥ सर्वधातुभ्यो मन्। स्योमा। अन्तरङ्गत्वाद् यत्वमेव॥ छस्य द्विःपाठो नैमित्तिकस्याप्यभावो वा॥

## श्रिव्यविमविज्वरित्वरामुपधया॥५७॥

एषामुपधया सह वकारस्योड् भवति कौ धुट्यगुणे पञ्चमे च। श्रिवु। स्रूः। स्रुवौ। स्रुवः॥ अव। ऊः। उवौ। उवः॥ मव। मूः। मुवौ। मुवः॥ ज्वर। जूः। जुरौ। जुरः॥ त्वर। तूः। तुरौ। तुरः॥ स्रूतः। स्रूतवान्। स्रूतिः॥ ऊतिः। मूतिः। जूर्त्तिः॥ तूर्त्तिः॥ मन्। स्रोमा॥ अवतेरन्त्यस्वरादिलोपः। ओम्॥

## राल्लोप्यौ॥ ५८॥

रेफात् परौ छकारवकारौ लोप्यौ भवतः। कौ धुट्यगुणे पञ्चमे च। मुर्छा। मूः। मुरौ। मुरः॥ धुर्वी। धूः।

धरी । धुरः ॥ मूर्तिः । मूर्तः । निष्ठानत्वं नेष्यते ॥ ङ्यापु ण पञ्चमानुवृत्तिर्न प्रयोजयति ॥

## वनतितनोत्यादिप्रतिषिद्धेटां धुटि पञ्चमोऽन्तः ॥ ५९ ॥

वनतेस्तनोत्यादेः प्रतिषिद्धेटश्च पञ्चमो लोप्यो भवति धुट्यागुणे यथासम्भवम् आतत्वाद्भवति । वनु । वतः । तवान् । वतिः । वत्वा ॥ तनोत्यादिर्मनुबोधने पर्यन्तः । तः । ततवान् । ततिः । तत्वा ॥ प्रतिषिद्धेटश्च । यतः । तवान् । यतः । यतवान् ॥ ऋणुक्षणुतृणु । एषां न दीर्घः । ऋतम् । क्षतम् । तृतमिति पक्षे येषामिडस्ति ऽप्यनिट उच्यन्ते ॥

## यपि च ॥ ६० ॥

वनतितनोत्यादिप्रतिषिद्धेटां यपि च परे पञ्चमो लोप्यो भवति । वनु प्रवत्य । तनु प्रतत्य । षणु प्रसत्य । हन प्रहत्य । मन प्रमत्य ॥ एषामिति किम् ? प्रगम्य ॥

## वा मः ॥ ६१ ॥

प्रतिषिद्धेटां वा मकारो लोप्यो भवति यपि परे । प्राप्ते विभाषा । प्रयम्य प्रयत्य प्रणम्य प्रणत्य ॥

## न तिकि दीर्घश्च ॥ ६२ ॥

वनतितनोत्यादिप्रतिषिद्धेटां तिकि दीर्घो न भवति न च पञ्चमो लोप्यो भवति । वन्यात् । वन्तिः । तन्यात् । तन्तिः । यम्यात् । यन्तिः । वध्यात् । इत्यादि ।

उन्देर्मनि ॥ ६३ ॥

उन्देर्मनि पञ्चमो लोप्यो भवति । ओद्म । ओद्मनी ॥

घञीन्धेः ॥ ६४ ॥

इन्धेर्घञि पञ्चमो लोप्यो भवति । एध ॥

स्यदो जवे ॥ ६५ ॥

स्यन्देर्घञि स्यद इति दीर्घाभावो निपात्यते वेगेऽर्थे । स्यन्द् । स्यदः ॥

अवोदहिमश्रथप्रश्रथाश्च । इति निपातयितव्या । अव पूर्वस्य उन्देः । अवोदः ॥ हिमपूर्वस्य प्रपूर्वस्य च श्रन्थेः । हिमश्रथः । प्रश्रथः ॥

रञ्जेर्भावकरणयोः ॥ ६६ ॥

रञ्जेर्भावकरणयोर्विहिते घञि पञ्चमो लोप्यो भवति । रञ्जनं रागः ॥ भावे घञ् । रज्यतेऽनेनेति रागः ॥ भावकरणयोरिति किम् ? रजत्यस्मिन्निति रङ्गः ॥

वुण्घिनिणोश्च ॥ ६७ ॥

रञ्जेर्वुणि घिनिणि च पञ्चमो लोप्यो भवति । शिल्पिनि वुण् । रजकः । रजकी ॥ युजभुजेत्यादिना घिनिण् । रागी ॥ चकारोऽनुक्तसमुच्चयार्थः । तेन युण्यपि । रजनम । रजनी ॥

दंशेः स्वरेऽनिटि वा ॥ ६८ ॥

संहेः स्वरादावनिटि पञ्चमो लोप्यो भवति वा । संवहेवा: । संहकः । वहेयम् । संहणम् । वर्हति । संवहति ॥ अनिटीति किम् ? संहितव्यम् ॥ स्वर इति किम् ? संहेमन् हन्यते । परिसंह्या । परिहरिटः । स्त्रियां क्तिः ॥ कथं संह्यते । संह्यते । वर्हिता । संहिता । येषां मतस्त्वन्तरमस्ति तेषां मते व्यञ्जनादावित्यपि स्यात् ॥

## यममनतनगमां क्वौ ॥ ६९ ॥

एषां पञ्चमो लोप्यो भवति क्वौ परे । आतश्चाद् भवति । यम । संयत् ॥ मन । सम्मत् ॥ तनु । परीतत् । ह्रस्वस्य दीर्घता ॥ गम्लृ । जगत् ॥

हनेः सिध्यात्मने दृष्टः सूचनार्थे यमेरपि ।
विवाहे तु विभाषेव सिजाशिषोर्गमेस्तथा ॥

आहत ॥ उपायत । उपायंस्त कन्यां छात्रः ॥ समगत । समगंस्त ॥ सङ्गसीष्ट । सङ्गंसीष्ट ॥

## विड्वनोरा ॥ ७० ॥

विटि वनि च प्रत्यये परे पञ्चमस्याकारो भवति । विट् । अब्जाः । गोषाः । सनोतेः षत्वम् ॥ वनिप् । विजावा । अग्रेगावा । ओणृ अयावरी । वनो र च ॥ घृणघृवा । क्वनिप् । सानुनासिकमप्याकारमिच्छन्ति ॥

## घुटि खनिसनिजनाम् ॥ ७१ ॥

धुडादौ प्रत्यये परे एषां पञ्चमस्याकारो भवति ।

खातः । खातिः । सातः । सातिः । जातः । जातिः ॥ सनि च । सिषासति ॥

## ये वा ॥ ७२ ॥

एषां पञ्चमस्याकारो भवति वा ये परे । प्रखाय प्रखन्य । प्रसाय प्रसन्य । प्रजाय प्रजन्य ॥ एवं खायते खन्यते । चाखायते चङ्खन्यते ॥ जा जनेर्विकरणे नित्यम् । जायते ॥ व्यवस्थितविभाषया घ्यणि ये न स्यात् । खान्यम् । सान्यम् । जन्यम् ॥ तनोतेर्यणि वा वक्तव्यम् । तायते । तन्यते ॥

## सनस्तिकि वा ॥ ७३ ॥

सनोतेस्तिकि परे पञ्चमस्याकारो भवति वा । सनुतात् । सातिः । सन्तिः ॥ पुनर्वावचनाल्लोपश्च । सतिः ॥

## स्फुरिस्फुल्योर्घञ्योतः ॥ ७४ ॥

अनयोर्घञि परे ओत आकारो भवति वा । विस्फारः । विस्फोरः । विस्फालः । विस्फोलः ॥

## इञ्जहातेः क्त्वि ॥ ७५ ॥

वा न वर्त्तते । क्त्वाप्रत्यये परे जहातेरिट् भवति । हित्वा गतः ॥ जहातेरिति किम् ? हाङ् हात्वा ॥

## द्यतिस्यतिमास्थां त्यगुणे ॥ ७६ ॥

एषां तकारादावगुणे इट् भवति । दो । दितः । दितवान् । दितिः । दित्वा । सो । अवसितः । अव-

सितवान् ॥ मा । मितः । मितवान् ॥ स्था । स्थितः । स्थितवान् ॥ अगुण इति किम् ? दाता । माता । स्थाता ॥ तिपा निर्देशः किं धेट् । धीतः । धीतवान् ॥ सनु । सातः । सातवान् ॥

### वा छाशोः ॥ ७७ ॥

छाशोस्तकारादावगुण इट् भवति वा । अवच्छितः अवच्छातः । अवच्छितिः अवच्छातिः । निशितः निशातः । निशितिः निशातिः । श्यतेर्व्रते नित्यं व्यवस्थितविभाषया । संशितो ब्राह्मणः । अन्यथा शिता- सिद्धमेव ॥

### दधातेर्हिः ॥ ७८ ॥

दधातेस्तकारादावगुणे हिर्भवति । हितः । हितवान् । हितिः । हित्वा ॥ दधातेरिति किम् ? धेट् । धीतः । धीतवान् ॥ या न वर्त्तते धात्वन्तरत्वात् ॥

### चरफलोरुदस्य ॥ ७९ ॥

अनयोरस्य तकारादावगुण उट् भवति । चूर्त्तः । चूर्त्तिः । प्रफुल्लः ॥ प्रफुल्लिः ॥

### दद् दोऽधः ॥ ८० ॥

दासञ्ज्ञकस्य धेट्वर्जितस्य तकारादावगुणे दद् भवति । दत्तः । दत्तवान् । दत्तिः । दत्त्वा ॥ दासञ्ज्ञकस्येति

धीतवान् ॥ दान्ते इत्यत्र धान्ते धत्वं स्यात् सन्निपात लक्षणस्य वर्णग्रहणे निमित्तत्वात् ॥

## स्वरादुपसर्गात् तः ॥ ८१ ॥

उपसर्गात् स्वरान्तात् परस्य दासंज्ञकस्य घेड्वर्जितस्य तकारादावगुणे प्रत्यये परे तकारो भवति । प्रत्तम् । नीत्तम् । परीत्तम् । इति कश्चिन्नामिनो ह्रस्वस्य दीर्घता ॥ स्वरादिति किम्? निर्दत्तम् । दुर्दत्तम् । सस्वरोऽस्वरावयवादेशो न कश्चिद्दोष इति ॥ कथं निर्दत्तम् । अवदत्तम् । प्रदत्तमिति वादिकर्मणि प्रादिसमासो निपाते वा ॥

## यपि चादो जग्धिः ॥ ८२ ॥

तकारादावगुणे यपि च परेऽदो जग्धिर्भवति । जग्धः । जग्धवान् । जग्धिः । जग्ध्वा । प्रजग्ध्य गतः । कथम् अन्नम् । अदोऽनन्न इति ज्ञापकात् ॥ अगुण इति किम्? अत्तव्यम् ॥

जग्धौ सिद्धेऽन्तरङ्गत्वाद् यपि चेति यदुच्यते ।
ज्ञापयत्यन्तरङ्गाणां यपा भवति बाधनम् ॥ इत्यतो ॥

प्रणम्य । आपृच्छ्य । प्रदीव्य । पञ्चमोपधाप्रभृतीनां दीर्घादयो न भवन्ति ॥

## घञलोर्घस्लृः ॥ ८३ ॥

अदेर्घञि अलि च घस्लृर्भवति । लृकार उच्चार-

गार्थः। घासः॥ उपसर्गेऽदेरल्। विघसः। प्राप्नोति प्रघसः। अचि वक्तव्यम्॥

## क्तक्तवन्तू निष्ठा॥ ८४॥

क्तक्तवन्तू निष्ठासंज्ञकौ भवतः। शब्दस्य नित्यत्वादन्यान्यानि भाविनीर्नेतरेतराश्रयदोष इति। शीर्णः। शीर्णवान्॥ भिन्नः। भिन्नवान्॥ निष्ठाप्रदेशाः। निष्ठा [का० ४.२.८२] इत्येवमादयः। क्ता सकारान्तस्य छान्दसभावादसंख्यमित्यव्ययमेव॥

॥ इति दीर्गसिंह्यां वृत्तौ कृत्सु प्रथमः पादः समाप्तः॥

## धातोः॥ १॥

धातोरिति पञ्चम्यन्तोऽनुक्तोऽविशेषे। धातोरित्ययमधिकारो वेदितव्यः। कर्त्तव्यम्। करणीयम्॥ धातोरिति किम्? कुम्भता॥ कुम्भं करोतीति भावकर्मणोर्नव्यादयः॥ युपदि सप्तमः [का० ३.१.६] इति सप्तम्यन्तं नोपपदम्॥ उक्तं सिद्धमनुविषये न स्यात्। अथ धातोस्तोऽन्तःपानुबन्धः [का० ४.१.३०] इत्यतो धातोरनुवर्त्तते। दुद्यूषतोलुङ न सिध्यति॥

## सप्तम्युक्तमुपपदम्॥ २॥

धात्वधिकारेऽत्र सूत्रे सप्तम्या निर्दिष्टमुपपदसंज्ञं भवति। कर्मण्यण् का० ४.३.१ नाम्नि स्थश्च [का० ४.३.५] इत्येवमादयः॥ उक्तमिति किम्? सप्तम्यन्तमात्रे माभूत्। स्तम्बेरमः। कुरुचरः॥

## तत् प्राङ् नाम चेत् ॥ ३ ॥

तदुपपदं नाम चेद् धातोः प्राग् भवति । कुम्भकारः । ग्रामस्थः ॥ नामेति किम् । भोक्तुमिच्छति ॥

## तस्य तेन समासः ॥ ४ ॥

तस्य नामोपपदस्य तेन कृदन्तेन धातुना सह समासो भवति । गोदः । जलजम् । ओघजम् ॥ यथा हि प्रादयः क्रियाद्योतका उपसर्गा इति धातोः प्रागेव सिद्धास्तथोर्यादयोऽपि क्रियायोगे तस्वस्तिभ्य एव प्राक् सिद्धाः । प्रकृत्य । ऊरीकृत्य । उररीकृत्य ॥ तथा शुक्लीकृत्य । पटपटाकृत्य । नाम्नां युक्तार्थत्वात् समासोऽपि सिद्ध एव ॥ यथाभिधानमिति त्रयोऽपि योगा वक्ष्यमाणाभ्यां सह प्रपञ्चार्था एव । धातोरित्ययमपि वामरूपे कृत्सम्बन्धादिति ॥

## नाव्ययेनानमा ॥ ५ ॥

तस्य नामोपपदस्याव्ययकृदन्तेनामन्तवर्जितेन प्राग्भावसमासौ न भवतः । कृत्वामम् । अलं कृत्वा ? भोक्तुं कालः । कालो भोक्तुम् ॥ तस्येति किम् । प्रकृत्य ॥ अनमेति किम् ? निमूलकाषं कषति ॥

## तृतीयादीनां वा ॥ ६ ॥

तृतीयायामुपदंशे [का० ४. ६. ७१] इत्यारभ्य यान्युपपदानि तानि तृतीयादीनि । तेषाममन्तानामपि प्राग्भावसमासौ न भवतो वा । मूलकोपदंशं भुङ्क्ते । मूल

कोपदग्धं भुङ्क्ते । भ्राष्ट्रादपकर्षं भ्राष्ट्रापकर्षं धाना भक्षयति ॥ तृतीयादीनामिति किम् ? समर्थो भोक्तुम् ।

## कृत् ॥ ७ ॥

अधिकारोऽयम् । माध्यैव सम्बध्यते प्रथमान्तत्वात् तेन वक्ष्यमाणाः प्रत्ययाः कृत्संज्ञका वेदितव्याः । कर्तरि कृत् [का० ४.६.४६] पाचकः । पक्ता । एवमन्येऽपि ॥

## वाऽसरूपोऽस्त्रियाम् ॥ ८ ॥

न विद्यते समानं रूपं यस्येति असरूपः । स्त्र्यधिकारविहितं वर्जयित्वाऽसरूपकृत्प्रत्ययो बाधको वा भवति ॥

विकल्पितेऽपवादेऽपि बाधनं तदवस्थितम् ।
उत्सर्गे न च लाभस्तद्बाधकत्वं विकल्पितम् ॥

स्वराद्यः [का० ४.२.१०] अपवादस्तद्विषये तव्यानीयौ । चेयम् । चेतव्यम् । चयनीयम् ॥ एवं नन्द्यादेर्युः । नन्दनः ॥ नन्दकः । नन्दयिता । एवमन्येऽपि ॥ असरूप इति किम् ? आपि यो न स्यात् । कार्यम् । कविषयेऽण् न स्यात् । गोदः । अनुबन्धोऽप्रयोगीति सारूप्यमेव ॥ अस्त्रियामिति किम् ? चिकीर्षा । क्तिर्न स्यात् । तथा । ईषणा । अन्वसा । पुरेव ॥ वाशब्दो व्यवस्थावाचीति क्तयुट्तुमुन्खलर्थेषु वासरूपविधिर्नास्तीति ॥

## तव्यानीयौ ॥ ९ ॥

धातोः परौ तव्यानीयौ कृत्संज्ञकौ भवतः । कर्तव्यम् । करणीयम् ॥ कृत्यत्वाद् भावे कर्मणि च स्यात् ।

केलिम । कर्मकर्त्तरीष्यते । भिदेलिमा माषाः । पचेलिमास्तण्डुलाः ॥ वास्तव्य इति कर्त्तरि दीर्घश्च रूढित्वात् ॥

**स्वराद् यः ॥ १० ॥**

स्वरान्ताद् धातोर्यो भवति । चेयम् । चेतव्यम् ॥ स्वरादिति सुखार्थमेव ॥

**शकिसहिपवर्गान्ताच्च ॥ ११ ॥**

शकिसहिपवर्गान्ताच्च धातोर्यो भवति । शक्यम् । सह्यम् । जप्यम् । लभ्यम् ॥

**आत्खनोरिच्च ॥ १२ ॥**

आकारान्ताद् धातोः खनेश्च यो भवति । अनयोरन्तस्येकारो भवति । देयम् । धेयम् । खेयम् ॥ अत एवं कृतेऽसिद्धं बहिरङ्गमन्तरङ्गे इत्यनित्येयम् ॥

**यमिमदिगदां त्वनुपसर्गे ॥ १३ ॥**

एषामुपसर्गाभावे तु यो भवति । यम्यम् । मद्यम् । गद्यम् ॥ अनुपसर्ग इति किम् ? प्रयाम्यम् । प्रमाद्यम् । प्रगाद्यम् ॥ यमो नियमार्थं वचनम् ॥

**चरेराङि चागुरौ ॥ १४ ॥**

अनुपसर्गे चरेर्यो भवति । आङि चागुरौ । चर्यम् । आचर्यो देशः ॥ आङीति किम् ? अभिचार्यम् ॥ अगुराविति किम् ? आचार्यो गुरुः ॥

## पण्यावद्यवर्या विक्रेयगर्ह्यानिरोधेषु ॥१५॥

पण्यमिति निपात्यते विक्रेयेऽर्थे । पण्यं विक्रेयद्रव्यम् । पाण्यमन्यत् ॥ नञ्पूर्वस्य वदेरवद्यमिति निपात्यते गर्ह्येऽर्थे । अवद्यं गर्ह्यम् । अनुद्यमन्यत् ॥ नाम्नि वदः क्यप् च ॥ वृङो वर्या । इत्यनिरोधे गम्यमाने । वृत्याऽन्या ॥ स्त्रीलिङ्गनिर्देशादिति मतम् । वार्या ऋत्विजः ॥

## वह्यं करणे ॥ १६ ॥

वह्यमिति निपात्यते करणेऽर्थे । वह्यं शकटम् ॥ वाह्यमन्यत् ॥

## अर्य्यः स्वामिवैश्ययोः ॥ १७ ॥

अर्य्य इति निपात्यते स्वामिनि वैश्ये चार्थे । अर्य्यः स्वामी । अर्य्यो वैश्यः ॥ आर्य्योऽन्यः ॥

## उपसर्य्या काल्या प्रजने ॥ १८ ॥

प्राप्तः कालो यस्याः सा काल्येति सञ्ज्ञिता । प्रजन प्रजनो गर्भग्रहणम् । प्रजने प्राप्तकाला चेत् । उपसर्य्येति निपात्यते । उपस्रियत इत्युपसर्य्या गौः । ऋतुमतीत्यर्थः ॥ उपसार्य्याऽन्या ॥

## अजर्य्यं सङ्गते च ॥ १९ ॥

अजर्य्यमिति निपात्यते सङ्गते कर्त्तरि । न जीर्य्यतीत्यजर्य्यं सङ्गतम् ॥ सङ्गत इति किम्? अजरिता कम्बलः ॥

**नाम्नि वदः क्यप् च ॥ २० ॥**

नाम्न्युपपदे वदेः क्यब् भवति । चकाराद् यश्च । ब्रह्मणो वदनं ब्रह्मोद्यम् ब्रह्मवद्यम् । ब्रह्मणोद्यते कथा । ब्रह्मोद्या ब्रह्मवद्या ॥ नाम्नीति किम्? वाद्यम् । अनुवाद्यम् ॥

**भावे भुवः ॥ २१ ॥**

नाम्न्युपपदे भावे भुवः क्यब् भवति । ब्रह्मभूयं गतः । ब्रह्मत्वं गत इत्यर्थः ॥ नाम्नीति किम्? भव्यम् । प्रभव्यम् ॥ भावग्रहणमुत्तरार्थमिह सुखार्थं च ॥

**हनस्त च ॥ २२ ॥**

नाम्न्युपपदे हन्तेर्भावे क्यब् भवति । तकारश्चान्तादेशः । ब्रह्मणो हननम् ब्रह्महत्या ॥ भाव इति किम्? अघात्यो मृग. ॥ नाम्नीति किम्? घातः । उपघातः ॥ हन्तेर्भावे ध्यण् न दृश्यते । यदि स्यात् तोऽन्तो नास्ति ध्यणो ह्यनुबन्धकत्वात् ॥

**इञ्जहजुषीण्शासुस्तुगुहां क्यप् ॥ २३ ॥**

नाम्नि भावे चेति निवृत्तम् । एषां क्यब् भवति । वृञ् इत्य. । वृङस्तु वार्या ऋत्विजः ॥ इङ् आदृत्यः ॥ जुषी जुष्यः ॥ इण् इत्य. । इङस्तु उपेयम् ॥ शासोऽदनुबन्धः सुखार्थः । शिष्य ॥ स्तुत्यः । गुह्यः ॥ अवश्यस्तुत्यः इति पुनः क्यब्ग्रहणात् ॥ कथम् । अनिवार्यो गजैरन्यैः स्वभाव-

इव देहिनाम् । इति सम्भक्तिरन्यत्रापि स्यात् इनन्तो वा ॥

ऋदुपधाच्चाक्लृपिचृतेः ॥ २४ ॥

ऋदुपधाद् धातोः क्लृपिचृतिवर्जितात् क्यप् भवति । वृत्यम् । वृध्यम् ॥ अक्लृपिचृतेः किम्? विकल्प्यम् । विचर्त्यम् ॥ ऋदिति तपरः सुखार्थः ॥

भृञोऽसंज्ञायाम् ॥ २५ ॥

भृञोऽसंज्ञायां क्यप् भवति । भरणम् भृत्यम् । भ्रियत इति वा भृत्यः ॥ असंज्ञायामिति किम्? भार्या नाम क्षत्रिया । भार्या वधूः ॥ ननु च संज्ञायामपि स्त्रियां क्यप्स्ति न तस्य भावे विधानात् ॥

ग्रहोऽपिप्रतिभ्यां वा ॥ २६ ॥

अपिप्रतिभ्यां परात् ग्रहेः क्यप् भवति वा । अपिगृह्यम् अपिग्राह्यम् । प्रतिगृह्यम् प्रतिग्राह्यम् ॥

पदपक्ष्ययोश्च ॥ २७ ॥

पक्षे भवः पक्ष्यो वर्गः । पदपक्ष्ययोरर्थयोर्ग्रहेः क्यप् भवति ॥ प्रगृह्यं पदं यत् स्वरेण न सन्धीयते । अवगृह्यं पदं यस्यावग्रहः क्रियते ॥ पक्षेऽनुगृह्या सेना ॥ चकारात् अन्येरपि भाषायां पार्श्वे । गृह्यका शुकाः । पञ्जरका इत्यर्थः ॥ ग्रामगृह्या स्त्री । ग्रामबाह्येत्यर्थः ॥

वौ नीपूञ्भ्यां कल्कमुञ्जयोः ॥ २८ ॥

वावुपपदे नीपूञ्भ्यां कल्कमुञ्जयोरर्थयोः क्यप् भवति

यथासंख्यम् । विनीयः कल्कः । विनेयमन्यत् ॥ विपूयो मुञ्जः । विपव्यमन्यत् ॥

## कृवृषिमृजां वा ॥ २९ ॥

कृञादिभ्यो विभाषया क्यप् भवति । कृत्यम् कार्यम् । वृष्यम् वर्ष्यम् । मृज्यम् मार्ग्यम् ॥

दुहिशंसिभ्यां क्वचित् । दुह्यम् दोह्यम् । शस्यम् शंस्यम् । कृत्ययुटोऽन्यत्रापि [ का० ४. ५. ९२ ] इति वचनात् ॥ तथा मृषोद्यमिति क्वचित् ॥ तथा पाणिसमवाभ्यां सृजो घ्यणेव । पाणिसर्ग्या समवसर्ग्या रज्जुः ॥ तथा समो वा भृञः क्यप् । संभृत्यः सम्भार्यः ॥ तथा तकि-चतिपतिशसियजिभ्यो य एव । तक्यम् । चत्यम् । पत्यम् । शस्यम् । यज्यम् ॥ तथा गुहो घ्यणपि । गुह्यम् गोह्यम् ॥ तथा जयतेर्हलौ क्यबेव । जित्या हलिः । महद्धलं हलिरुच्यते ॥

## सूर्यरुच्याव्यथ्याः कर्त्तरि ॥ ३० ॥

एते निपात्यन्ते कर्त्तरि । सृ गतौ । सुवति लोकान् सरति वेति सूर्यः । रोचत इति रुच्यः । न व्यथत इत्यव्यथ्यः ॥

## भिद्योद्ध्यौ नदे ॥ ३१ ॥

एतौ नदे कर्त्तरि निपात्येते । भिनत्ति कूलानीति भिद्यो नदः । उज्झत्युदकमित्युद्ध्यो नदः ॥ कथं भेद्यो नदः इति कर्मविवक्षायाम् ॥

## पुष्यसिध्यौ नक्षत्रे ॥ ३२ ॥

एतौ निपात्येते नक्षत्रे कर्त्तर्यधिकरणे वा । पुष्णाति कार्याणि पुष्यन्त्यस्मिन्निति वा पुष्यः । साधयति कार्याणि सिध्यन्त्यस्मिन्निति वा सिध्यः । पुष्य एव ॥

## युग्यं पत्रे ॥ ३३ ॥

युग्यमिति निपात्यते पत्रे वाहनेऽर्थे । युज्यतेऽनेनेति युज्यत इति वा युग्यम् ॥

## कृष्टपच्यकुप्ये संज्ञायाम् ॥ ३४ ॥

एतौ निपात्येते संज्ञायाम् । कृष्टे पच्यन्ते स्वयमेव । कृष्टपच्या व्रीहयः ॥ गुप्यत इति कुप्यम् सुवर्णरजताभ्यामन्यत् ॥

## ऋवर्णव्यञ्जनान्ताद् घ्यण् ॥ ३५ ॥

ऋवर्णान्ताद् व्यञ्जनान्ताच्च धातोर्घ्यण् भवति । कृ कार्यम् । हृ हार्यम् । पाक्यम् । वाक्यम् ॥ णकार इज्ज्ञावार्थः । घकारः सामान्याभिधानार्थः ॥

## आसुयुवपिरपिलपित्रपिदभिचमां च ॥ ३६ ॥

आङ्पूर्वात् सुनोतेर्योत्यादिभ्यश्च घ्यण् भवति । आसाव्यम् । याव्यम् । वाप्यम् । राप्यम् । लाप्यम् । अपत्राप्यम् । दनभुरिह कृतनलोपः । अवदाम्यम् । आचाम्यम् ॥

## उवर्णादावश्यके ॥ ३७ ॥

अवश्य भाव आवश्यकम् । उवर्णान्ताद् धातोरवश्

भावे गम्यमाने घ्यण् भवति। नाव्यम। लाव्यम। अव श्यम् लाव्यम् अवश्यलाव्यम। अवश्यम कृत्ये मस्य लुक। लव्यमन्यत्॥

पाय्यधाय्यमानसामिधेन्योः॥ ३८॥

पा धा इत्येतयोर्मानसामिधेन्योरर्थयोर्यथासङ्ख्य घ्यण् भवति। पाय्य मानम। वचनात् स्वार्थे त्यजति। पेयमन्यत्॥ इधात्यग्निमिति धाय्या सामिधेनी समिदा धानमन्त्र॥ उपचारादृत्विग्विषयेऽपि वर्त्तते। धाय्या शंसन्ति। धेयमन्यत॥

आङो र्नियोऽसम्मतानित्ययोः स्वरवत्॥३९॥

आङीरुपपदयोर्नियो धातोरसम्मतानित्ययोर्यथासङ्ख्य घ्यण् भवति स च स्वरवत्। प्रणाय्यश्चौर.। असम्मत इत्यर्थ॥ आनाय्यो दक्षिणाग्नि। यो गार्हपत्यादानीय प्रणीयते स चानित्यो रूढित॥ कथ ज्येष्ठाय पुत्राय पिता ब्रह्म ब्रूयात् प्रणाय्याय चान्तेवासिन इत्यन्यत्रापोति वचनात्॥

सञ्चिकुण्डपः क्रतौ॥ ४०॥

सपूर्वाच्चिनोति कुण्डपूर्वाच्च पिबति, क्रतावभिधेये घ्यण् भवति। स च स्वरवत्। सञ्चीयतेऽसौ। सञ्चाय्य क्रतु। कुण्डैः पीयते असौ कुण्डपाय्य, क्रतु। समासकाञ्चि याग क्रतुरर्थात्। सोम पीयतेऽस्मिन्नित्यभिधानादधि कारणेया।

राजसूयश्च ॥ ४१ ॥

क्रतावभिधेये राजसूयश्च निपात्यते ।, षुञ् अभिषवे । राज्ञा सोतव्यो राजा वास्मिन् सूयत इति राजसूयः क्रतुः ॥

सान्नाय्यनिकाय्यौ हविर्निवासयोः ॥४२॥

एतौ हविर्निवासयोर्यथासंख्यं निपात्येते । सान्नाय्यम् हविः विशिष्टमेव । यत् । सन्नेयमन्यत् ॥ निकाय्यो निवासः निचेयमन्यत् ॥

परिचाय्योपचाय्यावग्नौ ॥ ४३ ॥

एतावग्नावर्थे निपात्येते । परिचीयतेऽसौ परिचाय्योऽग्नि ॥ उपचीयत इत्युपचाय्योऽग्निः ॥

चित्याग्निचित्ये च ॥ ४४ ॥

एतावग्नावर्थे निपात्येते । चीयत इति चित्योऽग्निः । अग्नेश्चयनम् अग्निचित्या भावे ॥ समूह्य इत्यूहिना सिद्धम् । अस्यापि क्वचिद् वहत्यर्थे प्रयोगः । संवाह्य इति साम्नी भवत्येव ॥

अमावस्या वा ॥ ४५ ॥

अमेह सहार्थे । अमापूर्वाद् वसतेर्ध्यणि कालाधिकरणे दीर्घाभावो निपात्यते वा । सहवसतोऽस्यां चन्द्रार्काविति अमावस्या । अमावास्या तिथिः । यल्लक्षणेनानुत्पन्नं तत् सर्वं निपातनात् सिद्धम् ।

ते कृत्याः ॥ ४६ ॥

ते तव्यादयः कृत्यसंज्ञका भवन्ति ॥ कृत्यप्रदेशाः। भावकर्मणोः कृत्यक्तखलर्थाः [का० ४, ६, ४७] इत्येवमादयः ॥

## वुण्तृचौ ॥ ४७ ॥

धातोः परौ वुण्तृचौ भवतः। कर्त्तरि कृतः। पाचकः। पक्ता ॥ कथं ? गले चुप्यत इति गलेचोपकः। पादाभ्यां ह्रियते। पादहारकः निपातनात् ॥

## अच् पचादिभ्यश्च ॥ ४८ ॥

सर्वे धातवः पचादिषु पठ्यन्ते। तेभ्यः पचादिभ्योऽज् भवति। पचः। पठः। भवः ॥ पचादिग्रहणं बाधकबाधनार्थम्। तेन श्वपचः। आरभः इत्यण् न स्यात् ॥ देवः। सर्पः। मेघ इति को न स्यात्। एवमन्येऽप्यनुसर्त्तव्याः ॥

## नन्द्यादेर्युः ॥ ४९ ॥

नन्द्यादेर्नामगणनिर्दिष्टाद् युर्भवति। नन्दिवाशिमदिदूषिसाधिशोभिवर्धिभ्य इनन्तेभ्योऽसंज्ञायाम्। नन्दयतीति नन्दनः। एवं वाशनः। मदनः। दूषणः। साधनः। शोभनः। वर्धनः। सहितपिदमः संज्ञायामनिनन्तात्। सहनः। तपनः। दमनः ॥ एवं जल्पनः। दर्पणः। रमणः। चन्दनः। संहर्षणः। सङ्कर्षणः। जनार्दनः। मधुसूदनः। पवनः। लवणः। नामगणनिपात-

नाशत्वम् । विभीषणः । चित्तविनाशनः । कुलदमनः ॥ कर्मपूर्वाणामविषयेऽपि स्यात् ॥

### ग्रहादेर्णिन् ॥ ५० ॥

ग्रहादेर्नामगणनिर्दिष्टाण्णिन् भवति । गृह्णातीति ग्राही । स्थायी । निरक्षी । विश्रावी ॥ याचिव्रजवदवसो नञ्पूर्वात् । अयाची । अव्राजी । अवादी । अवासी ॥ स्वरान्तादपि विकल्पात् । अकारी धर्मस्य बाबातपः । विषयी देशे । विभावी । अभिभावी भूतेऽर्थे । परिभवी परिभावी । एते कृत्स्वलं निपातनात् ॥ कथम् उत्साही । उद्दाही । सम्मर्दी । निवेशी । अस्त्यर्थे इना सिद्धम् ॥ एवम् अध्याहारी । संव्याहारी । अपराधी । उपराधी ॥

### नाम्युपधप्रीकृगृज्ञां कः ॥ ५१ ॥

नाम्युपधात् प्रीणातेः किरतेर्गिरतेर्जानातेश्च को भवति । विक्षिपः । विलिखः । प्रियः । उत्किरः । गिरः । गिलः । ज्ञः ॥

### उपसर्गे त्वातो डः ॥ ५२ ॥

उपसर्गे उपपदे त्वाकारान्ताद्धातोर्डो भवति । सुग्लः । सुम्लः ॥ प्रह्वः । डे सति सम्प्रसारणमुव् च न स्यात् । गोसन्दाय इति परत्वादण् । कस्यापवादोऽयम् ।

### धेड्दृशिपाघ्राध्मः शः ॥ ५३ ॥

उपसर्गे उपपदे एभ्यः शो भवति । उद्धयः । उत्पश्यः ।

उत्पिब: । साहचर्य्यात् पिबते: । घेटष्टकार: सुखार्थ । उज्जिघ्र । उद्धम ॥ कथ धयः । अन्यत्रापीति वचनात् ॥ तथा व्याजिघ्रतीति व्याघ्रः ॥

## साहिसातिवेद्युदेजिचेतिधारिपारिलिम्पविन्दां त्वनुपसर्गे ॥ ५४ ॥

एषामुपसर्गाभावे शो भवति । साहयतीति साहयः । एव सातयः । विदिसामान्यं वेदयः । उदेजु उदेजयः । चेतयतीति चेतय: । धृञ् धृङ् धारयः । पृ पारयः । लिम्पतीति लिम्प । विन्दतीति विन्दः । साहचर्य्यात विदि अवयवे । बिन्दुरिति निपातनाद्वा ॥ कथ निलिम्पा नाम देवा अन्यत्रापीति वचनात् ॥ तथा गा विन्दतीति गोविन्दः । अरविन्द इत्यण् न स्यात् ॥ दद: । दध: । इति ददधोरप्या मिष्टम् ॥

## वा ज्वलादिदुनीभुवो णः ॥ ५५ ॥

ज्वलादिभ्यो दुनोतेर्नयतेर्भवतेश्चानुपसर्गे णो भवति वा । ज्वल: ज्वाल: । चल: चाल: । कसपर्य्यन्ता ज्वलादयो हलकरणात् । दव: दाव: । नय: नाय इति केचिदिच्छन्ति । भव: भाव: ॥ अनुपसर्गे इति किम ? प्रज्वल: । प्रदव: । प्रणय । प्रभव: ॥

## समाङोः स्रुवः ॥ ५६ ॥

समाङावुपपदयोः स्रवतेर्णो भवति । सं स्रावः ।

मस्राव । आस्राव ॥ समाङोरिति किम्? स्रव । परिस्रव ॥

## अवे हृग्रोः ॥ ५७ ॥

अव उपपदे हरते स्यतेश्च णो भवति । अवहार । अवसाय ॥ अव इति किम्? हर । विहरः ॥

## लिहिश्लिषिश्वसिव्यध्यतीण्श्यातां च ॥५८॥

एषां णो भवति । लेह । लेहः । श्लेष । श्ले मासे वचनम् । श्वास: । व्याधः । अत्याय । उपसर्गे इणाधिक्यायग्रहणम् । अवश्याय । दाय, । धाय ॥ प्रत्याय इत्यपि दृश्यते ॥ अवतार इति चकारात् ॥

## ग्रहेर्वा ॥ ५९ ॥

ग्रहेर्वा णो भवति । ग्राहो जलचरः । ग्रह सूर्यादि ॥

## गेहे त्वक् ॥ ६० ॥

ग्रहेर्गेहेऽभिधेये त्वग् भवति । गृह्णातीति गृहम् । गृहा ॥

## शिल्पिनि वुष् ॥ ६१ ॥

*शिल्पिन्यभिधेये वुष भवति । अभिधानाद् नृतिखनि-*रञ्जिभ्य एव । नर्त्तकः । नर्त्तकी । खनक । खनकी । रजक । रजकी । शिल्प विज्ञानकौशलम् । इतरस्य निकृष्टेऽभिधानात् ॥

**गस्थकः ॥ ६२ ॥**

गायतेः शिल्पिन्यभिधेये थकः प्रत्ययो भवति। गाथकः ॥

**ण्युट् च ॥ ६३ ॥**

गायतेः शिल्पिन्यभिधेये ण्युट् च भवति। गायनः। गायनी ॥ एतौ प्रत्ययावशिल्पिन्यपि दृश्येते ॥

**हः कालव्रीह्योः ॥ ६४ ॥**

जहातेः काले व्रीहौ चार्थे ण्युट् भवति। जहाति भावानिति हायनः संवत्सरः। जहत्युदकमिति हायना व्रीहयः ॥ कालव्रीह्योरिति किम्? हाता ॥

**आशिष्यकः ॥ ६५ ॥**

आशंसायां गम्यमानायां धातोरकः प्रत्ययो भवति। जीवतात् जीवकः ॥ नन्दतात् नन्दकः ॥

**प्रुसृल्वां साधुकारिणि ॥ ६६ ॥**

एषां साधुकारिण्यर्थेऽकः प्रत्ययो भवति। साधु प्रवते प्रवकः। सरकः। सरकः। लवकः ॥ साधुकरणं त्रिष्वमेव ॥ एतत् स्त्रियामप्यार्थं प्रयत्नार्थम् ॥ साधुकारिणीति किम्? प्रोता ॥

॥ इति दौर्गसिंह्यां वृत्तौ कृत्सु द्वितीयः पादः समाप्तः ॥

कर्मण्यण् ॥ १ ॥

कर्मण्युपपदे धातोरण् भवति। कुम्भं करोतीति कुम्भकारः। एवं काण्डकारः। शरलावः। वेदाध्यायः॥ आदित्यं पश्यति। हिमवन्तं शृणोति। ग्रामं गच्छतीत्यनभिधानाद्वाक्यमेव॥ महान्तं घटं करोतीति सापेक्षत्वात्॥ अघटं घटं करोतीति घटीकार इति च्व्यन्ते प्रागवस्थार्थमात्रापेक्षे त्वण् विधीयते॥

ह्वावामश्च ॥ २ ॥

एभ्यः कर्मण्युपपदेऽण् भवति॥ कायवायः॥ स्वर्गह्वायः। तन्तुवायः। धान्यमायः॥ वातिरकर्मकः॥ मीनातिमिनोत्योः के वृद्धिस्थे मारूपाभावः॥

शीलिकामिभक्ष्याचरिभ्यो णः ॥ ३ ॥

एभ्यः कर्मण्युपपदे णो भवति। शीलिभक्षी चुरादिनन्तौ। मांसशीला। कमेर्णिङ्। मांसकामा। मांसभक्षा॥ कल्याणमाचरति। कल्याणाचारा स्त्री। अणि हि स्त्रियामी स्यात्॥ शील्यत इति शीलम्। मांसं शीलमस्याः। मांसशीला॥ कल्याणप्रतीक्षा। दुःखचमेति यथानभिधानादण् नास्ति इतीहापि॥ यद्येवम् अश्वोऽभिगमोऽस्याः। अश्वोऽभिगमेति स्यात्। अश्वोऽभिगामी चेष्यते। समासेऽप्यभिधानं चेत् कष्टमिति वचनम्॥

आतोऽनुपसर्गात् कः ॥ ४ ॥

कर्मण्युपपदे आकारान्तादनुपसर्गाद्धातोः को भवति।

गोदः । अङ्गुलित्रं ॥ अनुपसर्गादिति किम् ? गोसन्दाय । उपसर्गेर्व्वधानत्वेऽण् ॥ ब्रह्मज्य: । मित्रह्न: । अन्यतोऽपि चेति ड ॥

## नाम्नि स्थश्च ॥ ५ ॥

नाम्न्युपपदे तिष्ठतेराकारान्ताच्च धातोः को भवति । अनुपसर्गादिति न वर्त्तते । कच्छेन पिबतीति कच्छप: । द्वाभ्यां पिबतीति द्विप: । समे तिष्ठतीति समस्थ: । ग्रामे सन्तिष्ठतीति ग्रामसंस्थ: ॥

## तुन्दशोकयोः परिमृजापनुदोः ॥ ६ ॥

तुन्दशोकयो कर्म्मणोरुपपदयो. परिमृजापनुदिभ्यां को भवति यथासंख्यम् । तुन्दं परिमार्ष्टि तुन्दपरिमृजः । अलस एवाभिधीयते । तुन्दपरिमार्जोऽन्य: ॥ शोकमपनुदति शोकापनुद: । आनन्दकर एव । अन्यत्र शोकापनोदो धर्मकथक एव ॥

## प्रे दाज्ञः ॥ ७ ॥

कर्मणि प्रे चोपपदे दाज्ञाभ्यां को भवति । प्रपाप्रदः । पथिप्रज्ञः ॥ दारूपमिह गृह्यते नसंज्ञा ज्ञा साहचर्य्यात् । तेन स्तनौ प्रधायतीति स्तनप्रधाय. ॥

## समि ख्य: ॥ ८ ॥

कर्म्मणि समि चोपपदे चक्षिङो धातो को भवति । गा सञ्चष्टे । गोसंख्य: । सोपसर्गत्वाद् वचनम् ॥ मूलानि विभुजतीति मूलविभुजो रथ: । नखमुचानि धनूंषि ।

अभिधानात् प्रातन एव क ॥ तथा काकेभ्यो गुहितव्याः । काकगुहास्तिला । कर्मण्यपि दृश्यते ॥

गः टक् ॥ ९ ॥

कर्मण्युपपदेऽनुपसर्गाद् गायतेष्टग् भवति । मधुरं गायतीति मधुरगी । सामगी ॥ अनुपसर्गादिति किम् ? सामसङ्गायः ॥ षडनुबन्धो नदादि. प्रपञ्चार्थः ॥

सुरासीध्वोः पिबतेः ॥ १० ॥

सुरासीध्वोः कर्मणोरुपपदयोरनुपसर्गात् पिबतेष्टग् भवति । सुरापी । सीधुपी ॥ सुरासीध्वोरिति किम् ? क्षीरपा ब्राह्मणी ॥ पिबतेरिति किम् ? सुरापा स्त्री ॥ अनुपसर्गादिति किम ? सुराप्रपायः ॥

हृञोऽज् वयोऽनुद्यमनयोः ॥ ११ ॥

अनुपसर्गादिति न स्मर्यते । कर्मण्युपपदे हरतेर्वयसि गम्यमानेऽनुद्यमने च वर्तमानाद् अज् भवति । ऊर्ध्वं यमनम उद्यमनम् । ततोऽन्यद् अनुद्यमनम । वयोग्रहण-मुद्यमनार्थं सम्भाव्यमानं चात्र वयो गम्यते ॥ कवचहरः क्षत्रियकुमारः । अस्थिहरः श्वा । अंशहरो दायादः । वातहरं तैलम ॥ उद्यमने तु । भारहारः ॥ अणोऽप-वादोऽयम ॥

आङि ताच्छील्ये ॥ १२ ॥

कर्मण्युपपदे आङि ताच्छील्ये गम्यमाने हृञोऽज् भवति । फलनिरपेक्षा प्रवृत्तिस्ताच्छील्यम् । पुष्पाण्याहर्तुं

शीलमस्येति पुष्पाहरो विद्याधरः॥ ताच्छील्य इति किम्? भाराहरः॥

अर्हश्च ॥ १३ ॥

ताच्छील्यमात्रं च न मन्यते। कर्मण्युपपदेऽर्हतेरज् भवति। पूजार्हा स्त्री॥

धृञः प्रहरणे चादण्डसूत्रयोः ॥ १४ ॥

दण्डसूत्रवर्जिते प्रहरणवाचके कर्मण्युपपदे धृञोऽज् भवति। वज्रं धरतीति वज्रधरः। एवं चक्रधरः॥ अदण्डसूत्रयोरिति किम्? दण्डधारः। सूत्रधारः॥ सूत्रप्रतिषेधादप्रहरणेऽपि। भूधरः॥ जटाधरः॥

धनुर्दण्डत्सरुलाङ्गलाङ्कुशयष्टितोमरेषु ग्रहेर्वा ॥ १५ ॥

एषु कर्मसूपपदेषु ग्रहेरज् भवति वा। धनुर्गृह्णातीति धनुर्ग्रहः धनुर्ग्राहः। दण्डग्रहः दण्डग्राहः। त्सरुग्रहः त्सरुग्राहः। लाङ्गलग्रहः लाङ्गलग्राहः। अङ्कुशग्रहः अङ्कुशग्राहः। यष्टिग्रहः यष्टिग्राहः। तोमरग्रहः तोमरग्राहः॥ घटग्रहः घटीग्रहः। पचादित्वादच्। घटग्राहः। घटीग्राहः इत्यपि॥ तथा सूत्रग्रह इति धारणे। अन्यत्र सूत्रग्राहः। पचादिप्रपञ्चार्थं ग्रहणमिदम्॥

स्तम्बकर्णयो रमिजपोः ॥ १६ ॥

स्तम्बकर्णयोर्नाम्नोरुपपदयो रमिजपिभ्यां यथासंख्यमच् भवति। स्तम्बे रमते। स्तम्बेरमो हस्ती। कर्णे जपतीति कर्णेजपः सूचक एवाभिधीयते। तथा समम्यासालुक्॥

## शम्पूर्वेभ्य संज्ञायाम्॥ १७॥

शम्पूर्वेभ्यो धातुभ्यः संज्ञायां गम्यमानायामच् भवति। शं करोतीति शङ्करः। शं भवतीति शम्भवः। शंवदः। शंवदः॥ शं पूर्वो येभ्यो धातुभ्य इति बहुव्रीहिणा हञो हेत्वादिष्वपि टो बाध्यते। तेन शङ्करा नाम परिव्राजिका॥

## शीङोऽधिकरणे च॥ १८॥

अधिकरणे च नाम्नुपपदे शेतेरच् भवति। खे शेते। खशयः॥ चकारात् पार्श्वादौ करणे। पार्श्वेन शेते। पार्श्वशयः। एवं पृष्ठशयः। उदरशयः॥ दिग्धेन सह शेते। दिग्धसहशयः। इति सहसहयम्॥ उत्तानादिषु कर्तृषु। उत्तानः शेते। उत्तानशयः॥

## चरेष्टः॥ १९॥

अधिकरणे नाम्नुपपदे च चरेष्टो भवति। कुरुषु चरतीति कुरुचरः। कुरुचरी॥ चकारादन्यत्रापि भवति। भिक्षां चरतीति भिक्षाचरः। भिक्षाचरी। सेनया चरतीति सेनाचरः। सेनाचरी। आदाय चरतीति आदायचरः॥

## पुरोऽग्रतोऽग्रेषु सर्तेः॥ २०॥

एषूपपदेषु सर्त्तेष्टो भवति । पुरः सरतीति पुरःसरः । पुरःसरी । अग्रतःसरः अग्रतःसरी । आद्यादित्वात् तस् ॥ अग्रेसरः अग्रेसरी । एकारान्तमव्ययं निपातनादलुग् वा ॥

पूर्वे कर्त्तरि ॥ २१ ॥

पूर्वशब्दे कर्त्तृवाचिन्युपपदे सर्त्तेष्टो भवति । पूर्वः सरतीति पूर्वसरः । पूर्वसरी । कस्मात् पूर्व इत्यविभक्तिकनिर्देशः ॥ कर्त्तरीति किम् ? पूर्वं सरतीति पूर्वसारः ॥

कृञो हेतुताच्छील्यानुलोम्येष्वशब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ॥ २२ ॥

अशब्दादिषु कर्मसूपपदेषु हेतौ ताच्छील्ये आनुलोम्ये च गम्यमाने कृञष्टो भवति । प्रतीतशक्तिकं कारणं हेतुरिह गृह्यते सम्बन्धोऽनिनन्तत्वात् । यशस्करी विद्या ॥ ताच्छील्ये । श्राद्धकरः ॥ आनुलोम्यमनुकूलता । वचनकरः । अशब्दादिष्विति किम् ? शब्दकारः । श्लोककारः । कलहकारः । गाथाकारः । वैरकारः । चाटुकारः । सूत्रकारः । मन्त्रकारः । पदकारः ॥ हेत्वानुलोम्ययोरविवक्षा स्थितैव । ताच्छील्ये त्वाण्विति वर्जनम् ॥ कथं कुम्भादिकारणशीलाः कुम्भकारादय इत्यभिधानात् ॥

तदाद्याद्यन्तानन्तकारबहुबाहुहर्दिवाविभानिशाप्रभाभाश्चित्रकर्तृनान्दीकिंलिपिलिबिबलिभक्तिचेत्रजङ्घाधनुररुःसंख्यासु च ॥ २३ ॥

अहेत्वाद्यर्थमिदम् । तदाद्यादिषु कर्मसूपपदेषु कृञष्टो

भवति। तत्काद्स्कान्तोऽयम्। तस्करोतीति तस्करः। तस्कर इति रूढित्वात् तस्य सकारः। एव यस्करः। आदिकरः। अन्तकरः। अनन्तकरः। कारकरः। बहुकरः। बाहुकरः। अहस्करः। दिवाकरः। विभाकरः। निशाकरः। प्रभाकरः। भास्करः। चित्रकरः। कर्तृकरः। नान्दीकरः। किङ्करः। लिपिकरः। लिबिकरः। बलिकरः। भक्तिकरः। क्षेत्रकरः। जङ्घाकरः। धनुष्करः। अरुष्करः॥ एककरः। द्विकरः। त्रिकरः। बहुकरः। किंयत्तद्बहुषु स्त्रियामप्यच् कार्यः॥ प्रकाराद् रजनीकरः। क्षपाकरः। सङ्गदाकरः। इत्यादयोऽप्यनुमन्तव्याः॥

## भृतौ कर्मशब्दे ॥ २४ ॥

कर्मशब्दे कर्मण्युपपदे कृञष्टो भवति भृतौ गम्यमानायाम्। भृतिः कर्ममूल्यम्। कर्मकरो भृतकः। कर्मकरी दासी॥ भृताविति किम्? कर्मकारः॥ शब्दग्रहणं प्रत्ययार्थम्। कर्मण्यादिति॥

## इः स्तम्बशकृतोः ॥ २५ ॥

स्तम्बशकृतोः कर्मणोरुपपदयोः कृञ इर्भवति। स्तम्बकरिर्व्रीहिः। स्तम्बकारोऽन्यः॥ शकृत्करिर्वत्स एवाभिधानात्। शकृत्कारोऽन्यः॥

## हरतेर्दृतिनाथयोः पशौ ॥ २६ ॥

दृतिनाथयोः कर्मणोरुपपदयोर्हरतेरिर्भवति पशौ कर्तरि। दृतिहरिः पशुः। नाथहरिः पशुः॥

फलेमलरजःसु ग्रहेः ॥ २७ ॥

एषु कर्मसूपपदेषु ग्रहेरिर्भवति । फलानि गृह्णातीति फलेग्रहिः । सूत्रनिपातनादेत्वम् ॥ मलं गृह्णातीति मलग्रहिः । रजो गृह्णातीति रजोग्रहिः ॥

देववातयोरापेः ॥ २८ ॥

देववातयोः कर्मणोरुपपदयोराप्नोतेरिर्भवति । देवानाप्नोतीति देवापिः । वातानाप्नोतीति वातापिः । विशिष्ट एव रूढित्वात् ॥

आत्मोदरकुक्षिषु भृञः खिः ॥ २९ ॥

एषु कर्मसूपपदेषु भृञः खिर्भवति । आत्मानमेव बिभर्ति । आत्मम्भरिः । एवम् उदरम्भरिः । कुक्षिम्भरिः ॥

एजेः खश् ॥ ३० ॥

कर्मण्युपपदे एजयतेः खश् भवति । अङ्गमेजयः । जनमेजयः खानुबन्धान्मोऽन्तः । शानुबन्धे सार्वधातुकत्वाद् विकरण इनो गुणः स्यात् ॥

शुनीस्तनमुञ्जकूलास्यपुष्पेषु धेटः ॥ ३१ ॥

एषु कर्मसूपपदेषु धेट खश् भवति । शुनीं धयतीति शुनिन्धयः । स्तनौ धयतीति स्तनन्धयः । एवं मुञ्जन्धयः । कूलन्धयः । आस्यन्धयः । पुष्पन्धयः ॥ मुञ्जादिषु केचिन्नेच्छन्ति ॥ पञ्चतामानर्थक्याद् धेटष्टकारो नदाद्यर्थो विज्ञायते । शुनिन्धयी । स्तनन्धयी ॥

नाडीकरमुष्टिपाणिनासिकासु ध्मश्च ॥३२॥

एषु कर्मसूपपदेषु धमतेर्धेटश्च खश् भवति । नाडिन्धमः । नाडिन्धयः । करन्धमः । करन्धय इति नेच्छन्त्येके । मुष्टिन्धमः । मुष्टिन्धयः । पाणिन्धमः पाणिन्धय इति नेच्छन्त्येके । नासिकन्धमः । नासिकन्धयः ॥ शुनीस्तनघटीखारीवातेषु धमतेरित्येके । शुनिन्धमः । स्तनन्धमः । घटिन्धमः । खारिन्धमः । वातन्धमः ॥

विध्वरुस्तिलेषु तुदः ॥ ३३ ॥

एषु कर्मसूपपदेषु तुदते खश् भवति । विधुन्तुदः । अरुन्तुदः । तिलन्तुदः ॥

असूर्योग्रयोर्दृशः ॥ ३४ ॥

असूर्योग्रयोः कर्मणोरुपपदयोर्दृशः खश् भवति । न सूर्यं पश्यन्ति । असूर्यम्पश्यानि मुखानि । असूर्यम्पश्या राजदाराः । सूर्यमपि न पश्यन्तीत्यर्थः । दृशिना सह सम्बद्धस्य नञः सूर्येण सह समासो गमकत्वात् ॥ उग्रम्पश्यः ॥

ललाटे तपः ॥ ३५ ॥

ललाटे कर्मण्युपपदे तपतेः खश् भवति । ललाटं तपतीति ललाटन्तपः ॥

मितनखपरिमाणेषु पचः ॥ ३६ ॥

एषु कर्मसूपपदेषु पचतेः खश् भवति । मितम्पचा

ब्राह्मणी । नखम्पचा यवागूः । प्रस्थम्पचो माणवकः । द्रोणम्पचा स्थाली । प्रस्थादय एव परिमाणान्यत्राभिधीयन्ते । न कालः संख्या च । तेन मासं पचति । एकं पचतीति । वाक्यमेव ॥

## कूल उद्रुजोद्वहोः ॥ ३७ ॥

कूले कर्मण्युपपदे उद्रुजोद्वहोः खश् भवति । कूलमुद्रुजा नदी । कूलमुद्वहः समुद्रः ॥

## वहंलिहाभ्रंलिहपरन्तपेरम्मदाश्च ॥ ३८ ॥

एते खश्प्रत्ययान्ता निपात्यन्ते । वहंलिहा गौः । अभ्रंलिहो वायुः । परं तापयतीति परन्तपः । इरया माद्यतीति इरम्मदो हस्ती ॥ चकाराद् वातमजन्तीति वातमजा मृगाः । शर्धं जहतीति शर्धञ्जहा माषाः ॥

## वदेः खः प्रियवशयोः ॥ ३९ ॥

प्रियवशयोः कर्मणोरुपपदयोर्वदेः खो भवति । प्रियंवदः । वशंवदः ॥ उत्तरार्थमिह प्रक्रियालाघवार्थं च खः क्रियते ॥

## सर्वकूलाभ्रकरीषेषु कषः ॥ ४० ॥

एषु कर्मसूपपदेषु कषतेः खो भवति । सर्वङ्कषः खलः । कूलङ्कषा नदी । अभ्रङ्कषो गिरिः । करीषङ्कषा वात्या ॥

## भयर्तिमेघेषु कृञः ॥ ४१ ॥

एषु कर्मसूपपदेषु कृञः खो भवति । भयं करोतीति

भवङ्करः। अभयङ्करः। भयेन तदन्तविधिरिष्टः। ऋतिङ्करः। सिवङ्करः॥

## क्षेमप्रियमद्रेऽण् च ॥ ४२ ॥

एषु कर्मसूपपदेषु कृञः खो भवति। अण् च। क्षेमङ्करः क्षेमकारः। प्रियङ्करः प्रियकारः। मद्रङ्करः मद्रकारः॥ वेति सिद्धेऽण्ग्रहणं हेत्वादिष्वपि टो बाधनार्थम्॥ एष्विति किम्? भद्रकारः॥

## भावकरणयोस्त्वाश्रिते भुवः॥ ४३ ॥

आश्रितशब्द उपपदे भवतेर्भावे करणे च खो भवति। आशनमाश्रितम्। आश्रितस्य भवनम्। आश्रितम्भवम्॥ आश्रितं भवत्यनया। आश्रितम्भवा पक्वपूली॥

## नाम्नि तृभृवृजिधारितपिदमिसहां संज्ञायाम्॥४४

नाम्न्युपपदे एभ्यः संज्ञायां खो भवति। रथेन तरतीति रथन्तरं साम॥ विश्वं बिभर्ति विश्वम्भरा अवनिः॥ पतिं वृणीते। पतिंवरा कन्या॥ धनं जितवान्। धनञ्जयोऽर्जुनः। वसु धारयतीति वसुन्धरा पृथ्वी। अभिधानात् क्रमः॥ शत्रुं तपतीति शत्रुन्तपः॥ अरिं दाम्यति दमयति वा। अरिन्दमः॥ शत्रुं सहते। शत्रुंसहः॥ नाम कर्म च यथासम्भवं संज्ञात्वाद् गमयति। नाम्नीति सुखार्थमेव॥

## गमश्च॥ ४५ ॥

नाम्न्युपपदे संज्ञायां गमश्च खो भवति। सुतङ्गमः।

भुजाभ्यां गच्छतीति भुजङ्गमः । मितं गच्छतीति मितङ्गमो हस्ती । पूर्वङ्गमाः पन्थानः । हृदयङ्गमा वाचः ॥

उरोविहायसोरुरविहौ च ॥ ४६ ॥

उरोविहायसोरुपपदयोर्गमश्च संज्ञायां खो भवति । तयोरुरविहौ च यथासंख्यं भवतः । उरसा गच्छतीत्युरङ्गमः । विहायसा गच्छतीति विहङ्गमः ॥

डोऽसंज्ञायामपि ॥ ४७ ॥

नाम्न्युपपदे गमेर्डो भवति संज्ञायामसंज्ञायामपि उरोविहायसोरुरविहौ च यथासंख्यं भवतः । भुजगः । तुरगः । प्लवगः । पतगः । अन्तगः । अत्यन्तगः । अध्वगः । दूरगः । पारगः । सर्वगः । सर्वत्रगः । पन्नगः । ग्रामगः । गुरुतल्पगः । सुगः । दुर्गः । निर्गो देशः । खगः । सौरगः । पीठगः । उरगः । विहगः ॥

विहङ्गतुरङ्गभुजङ्गाश्च ॥ ४८ ॥

एते डप्रत्ययान्ता निपात्यन्ते । संज्ञायामेव । विहायसा गच्छतीति विहङ्गः । तुरो गच्छतीति तुरङ्गः । भुजाभ्यां गच्छतीति भुजङ्गः । चकारात् । पतो गच्छतीति पतङ्गः । प्लवेन गच्छतीति प्लवङ्गः । प्रवेय गच्छतीति प्रवङ्गः ॥

अन्यतोऽपि च ॥ ४९ ॥

गमेरन्यस्मादपि संज्ञायामसंज्ञायामपि नाम्न्युपपदे डो भवति । वारि चरतीति वार्चो हंसः ॥ गिरौ शेते ।

गिरिशः ॥ वरानाहन्ति । वराहः ॥ परिखन्यते । प-रिखा ॥ कर्म्मण्यपि दृश्यते ॥

## हन्तेः कर्मण्याशीर्गत्योः ॥ ५० ॥

कर्मण्युपपदे आशिषि गतौ च वर्त्तमानाद् हन्तेर्डो भवति । शत्रुं बध्यात् । शत्रुहः ॥ क्रोशं हन्ति । क्रोशहः ॥ कर्मण्येव निरपेक्षत्वात् कर्मग्रहणं सुखार्थम् ॥

## अपात् क्लेशतमसोः ॥ ५१ ॥

क्लेशतमसोः कर्मणोरुपपदयोरपात्परस्य हन्तेर्डो भ-वति । क्लेशापहः । तमोऽपहः ॥ कथं सुखापहः । दुःखा-पहः । ज्वरापहः । वातपित्तकफापहः । विषाग्निदर्पापहः । अन्यतोऽपि चेति सिद्धं प्रपञ्चार्थं डविधानम् ॥ कथं दार्वा-घाटः । चार्वाघाटः । वर्णसङ्घाटः । घटतेर्भविष्यति । चार्वाहन्ति । चार्वाघाटः । एव वर्णसङ्घाटः ॥ दार्वा-घाटोऽपि तर्हि स्यात् । असंज्ञायामिष्यत एव ॥

## कुमारशीर्षयोर्णिन् ॥ ५२ ॥

शिरःपर्यायः शीर्षशब्दः । कुमारशीर्षयोः कर्म्मणोरुप-पदयोर्हन्तेर्णिन् भवति । कुमारघाटी । शीर्षघाटी ॥

## टग् लक्षणे जायापत्योः ॥ ५३ ॥

लक्षणयोगाल्लक्षणम् । जायापत्योः कर्म्मणोरुपपदयो-र्हन्तेः लक्षणवति कर्त्तरि टग् भवति । जायाघ्नो ब्राह्मणः पतिघ्नी वृषली ॥

भुजाभ्यां गच्छतीति भुजङ्गमः । मितं गच्छतीति मितङ्गमो हस्ती । पूर्वङ्गमाः पन्थानः । हृदयङ्गमा वाचः ॥

## उरोविहायसोरुरविहौ च ॥ ४६ ॥

उरोविहायसोरुपपदयोर्गमश्च संज्ञायां खो भवति । तयोरुरविहौ च यथासंख्यं भवतः । उरसा गच्छतीत्युरङ्गमः । विहायसा गच्छतीति विहङ्गमः ॥

## डोऽसंज्ञायामपि ॥ ४७ ॥

नाम्न्युपपदे गमेर्डो भवति संज्ञायामसंज्ञायामपि उरोविहायसोरुरविहौ च यथासंख्यं भवतः । भुजगः । तुरगः । प्लवगः । पतगः । अन्तगः । अत्यन्तगः । अध्वगः । दूरगः । पारगः । सर्वगः । सर्वत्रगः । पन्नगः । ग्रामगः । गुरुतल्पगः । सुगः । दुर्गः । निर्गो देशः । अगः । नीरगः । पीठगः । उरगः । विहगः ॥

## विहङ्गतुरङ्गभुजङ्गाश्च ॥ ४८ ॥

एते खप्रत्ययान्ता निपात्यन्ते । संज्ञायामेव । विहायसा गच्छतीति विहङ्गः । तुरो गच्छतीति तुरङ्गः । भुजाभ्यां गच्छतीति भुजङ्गः । चकारात् । पतो गच्छतीति पतङ्गः । प्लविन गच्छतीति प्लवङ्गः । प्लवेन गच्छतीति प्लवङ्गः ॥

## अन्यतोऽपि च ॥ ४९ ॥

गमेरन्यस्मादपि संज्ञायामसंज्ञायामपि नाम्न्युपपदे डो भवति । वारि चरतीति वार्चो हंसः । गिरौ शेते ।

गिरिघ्नः ॥ वरानाहन्ति । वराहः ॥ परिखन्यते । पः रिखा ॥ कर्मण्यपि दृश्यते ॥

## हन्तेः कर्मण्याशीर्गत्योः ॥ ५० ॥

कर्मण्युपपद आशिषि गतौ च वर्त्तमानाद् हन्तेर्डो भवति । शत्रुं बध्यात् । शत्रुहः । क्रोशं हन्ति । क्रोशहः ॥ कर्मण्येव निरपेक्षत्वात् कर्मग्रहणं सुखार्थम् ॥

## अपात् क्लेशतमसोः ॥ ५१ ॥

क्लेशतमसोः कर्मणोरुपपदयोरपात्परस्य हन्तेर्डो भवति । क्लेशापहः । तमोऽपहः ॥ कथं सुखापहः । दुःखापहः । ज्वरापहः । वातपित्तकफापहः । विषाग्निदर्पापहः । अन्यतोऽपि चेति सिद्धं प्रपञ्चार्थं डविधानम् ॥ कथं दार्वाघाटः । चार्वाघाटः । वर्णसङ्घाट । घटतेर्भविष्यति । चार्वाहन्ति । चार्वाघाटः । एव वर्णसङ्घाटः ॥ दार्वाघाटोऽपि तर्हि स्यात् । असंज्ञायामिष्यत एव ॥

## कुमारशीर्षयोर्णिन् ॥ ५२ ॥

शिरःपर्य्यायः शीर्षशब्दः । कुमारशीर्षयोः कर्मणोरुपपदयोर्हन्तेर्णिन् भवति । कुमारघाती । शीर्षघाती ॥

## टग् लक्षणे जायापत्योः ॥ ५३ ॥

लक्षणयोगाल्लक्षणम् । जायापत्योः कर्मणोरुपपदयोर्हन्तेर्लक्षणवति कर्त्तरि टग् भवति । जायाघ्नो ब्राह्मणः पतिघ्नी वृषली ॥

## अमनुष्यकर्तृकेऽपि च ॥ ५४ ॥

कर्मण्युपपदेऽमनुष्यकर्तृकेऽपि धात्वर्थे वर्तमानाद् हन्तेष्टग् भवति । जायाघ्नस्तिलकः । पतिघ्नी पाणिरेखा । श्लेष्मघ्नं त्रिकटुकम् । पित्तघ्नं घृतम् । वातघ्नं तैलम् ॥ अमनुष्यकर्तृक इति किम् ? आखुघातः शूद्रः । ब्राह्मणघातो वृषलः ॥ कथं चौरघातो गजः । शत्रुघातो वृषभः । अभिधानात् ॥ कृतघ्नः खलः । शत्रुघ्नः शूर इति च भवति ।

## हस्तिबाहुकपाटेषु शक्तौ ॥ ५५ ॥

एषु कर्मसूपपदेषु शक्तौ गम्यमानायां हन्तेष्टग् भवति । हस्तिघ्नः । बाहुघ्न इति मतम् । कपाटघ्नः ॥ नगरे त्वहस्तिन्यपि वचनात् । नगरघ्नोऽहिः । नगरघातो हस्ती चेत् ।

## पाणिघताडघौ शिल्पिनि ॥ ५६ ॥

एतौ शिल्पिनि कर्तरि निपात्येते । पाणिभ्यां पाणौ वा हन्ति । पाणिघः ॥ ताडं हन्ति । ताडघः ॥ शिल्पिनीति किम् ? पाणिघातः । ताडघातः ॥ राजानं हन्ति । राजघ इत्यप्यधिकारात् ॥

## नग्नपलितप्रियान्धस्थूलसुभगाढ्येष्वभूततद्भावे कृञः ख्युट् करणे ॥ ५७ ॥

अभूततद्भावे वर्तमानेषु नग्नादिषूपपदेषु कृञः ख्युट् भवति । करणे कारके । अनग्नो नग्नः क्रियतेऽनेनेति नग्नङ्करणं द्यूतम् । एवं पलितङ्करणं तैलम् । प्रियङ्करणं

शौलम। अन्धङ्करणः शोकः। स्थूलङ्करणं दधि। सुभगङ्करण रूपम्। आढ्यङ्करण वित्तम्॥ अनग्नङ्करणमित्यादि तदन्तविधिना॥ अभूततद्भाव इति किम्? आढ्यं करोति तैलेनाभ्यञ्जयतीत्यर्थः। कृत्याद्यर्थेऽप्यभूततद्भावस्याविवक्षितत्वात्। च्विर्विवक्षितत्वाच्च्वन्तेऽपि न भवति। उत्तरत्राप्येवं नग्नीकरोत्यनेन युडपि नैवा विशेषात्॥

## भुवः खिष्णुखुकञौ कर्त्तरि॥ ५८॥

अभूततद्भावे नग्नादिषूपपदेषु भुवः खिष्णुखुकञौ कर्त्तरि भवतः। नग्नम्भविष्णुः॥ नग्नम्भावुकः॥ पलितम्भविष्णुः। पलितम्भावुकः॥ प्रियम्भविष्णुः। प्रियम्भावुकः॥ अन्धम्भविष्णुः। अन्धम्भावुकः॥ स्थूलम्भविष्णुः। स्थूलम्भावुकः॥ सुभगम्भविष्णुः। सुभगम्भावुकः॥ आढ्यम्भविष्णुः। आढ्यम्भावुकः। अनग्नम्भविष्णुः। अनग्नम्भावुक इत्यादि॥ तदन्तविधिना च्व्यन्तेषु न भवति। आढ्योभविता॥ ताच्छीलिकत्वात्राप्यभूततद्भाव इति न पराविपोष्णु कञो ञकारः सुखार्थः। तथा कर्त्तरीति॥

## भजो विण्॥ ५९॥

कर्मण्युपपदे भजो विण् भवति। अर्धभाक्। पादभाक्॥ उपसर्गेऽपि केचित्। अर्धप्रभाक्॥

## सहश्छन्दसि॥ ६०॥

नाम्न्युपपदे सहश्छन्दसि सम्रायां विण् हहः क्त च

लोके प्रयुज्यत इति वचनम् ॥ तुराषाट् । तुरासाह पुरो भावेति ॥

वहश्च ॥ ६१ ॥

नाम्न्युपपदे वहेश्छन्दसि सञ्ज्ञाया विण् भवति । प्रष्ठवाट् । प्रष्ठौही । वाहेर्वाशब्दस्यौविति । इदमपि पूर्ववत् ॥

अनसि डश्च ॥ ६२ ॥

अनस्युपपदे वहेर्विण् भवति । अनसश्च डो भवति । अनो वहतीति । अनड्वान् । अनडुहो रूढित्वात् ॥

दुहः को घश्च ॥ ६३ ॥

कर्मण्युपपदे दुहः को भवति घश्चान्तादेशः । कामदुघा गौः ॥

गौर्गौः कामदुघा सम्यक्प्रयुक्ता स्मर्यते बुधैः ।
दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ॥

विट् क्रमिगमिखनिसनिजनाम् ॥ ६४ ॥

नाम्न्युपपदे एभ्यो विड् भवति ॥

अग्रेगा उदधिक्राश्च गोषाश्च विषखास्तथा ।
प्रियं दधतु राजेन्द्र तवाज्ञा सहिता इमे ॥

छन्दसि सञ्ज्ञाले न विश्रुता लोके प्रयुज्यन्त इति मतम् ॥

मन्त्रे श्वेतवहुक्थशंसपुरोडाशावयजिभ्यो विण् ॥ ६५ ॥

एभ्यो विण् भवति मन्त्रे । श्वेतवाः । श्वेतवा ।

छन्दः॥ उक्थान्युक्थैर्वा शंसति। उक्थशाः। यजमानः॥ पुरो दाशत्येनम्। पुरोडाः। दस्य डत्वं निपातनात्। पुरो दाश्यत इति वा। अकारान्तश्च निपात्यते। सदा पुरोडाशपविलिताधर इति॥ अवयजते। अवयाः॥ विरामे व्यञ्जनादौ चैषामन्तस्य डस्। श्वेतवोभ्याम्। पुरोडोभ्याम्। उक्थशोभ्याम्। अदन्तपक्षे पुरोडाशाभ्याम्। स्वरादौ तु। श्वेतवाहौ। उक्थशंसौ। अवयाजौ॥ अन्य रूढित्वाद् यथादर्शनं गम्यते। सम्बुद्धावालोके प्रयुज्यन्त इति मतम्॥

## आतो मन्क्वनिब्वनिब्विचः॥ ६६॥

आकारान्ताद्धातोर्मन्। क्वनिप्। वनिप्। विच्। इत्येते प्रत्यया भवन्ति॥ मन शोभनं ददाति। सुदामा। अश्व इव तिष्ठति। अश्वत्थामा॥ क्वनिप्। सुपीवा। सुधीवा॥ वनिप्। घृतपावा। भूरिदावा॥ विच्। कीलालपा॥

## अन्येभ्योऽपि दृश्यन्ते॥ ६७॥

अन्येभ्योऽपि धातुभ्य एते प्रत्यया दृश्यन्ते। मन। सुशर्मा॥ क्वनिप्। प्रातरित्वा॥ वनिप्। विजावा॥ विच्। रिश रुश हिंसायाम्। रेट्। रोट्॥ दृशिग्रहणं प्रयोगानुसारार्थम्।

## क्विप् च॥ ६८॥

धातोः क्विप् च दृश्यते। उखायाः स्रंसते। उखास्रत्।

पर्णानि ध्वंसते । पर्णध्वत् ॥ दिव । अक्षद्यूः ॥ क्रुड् । प्रत्यड् । ऊः । कीः । गीः । लूः ।

## वहे पञ्चम्यां भ्रंशेः ॥ ६९ ॥

वहे पञ्चम्यन्त उपपदे भ्रंशेः क्विब् भवति । वहाद् भ्रश्यति । वहभ्रट् ॥

## स्पृशोऽनुदके ॥ ७० ॥

अनुदके नाम्न्युपपदे स्पृशः क्विब् भवति । घृतं स्पृशतीति घृतस्पृक् । मन्त्रेण स्पृशतीति मन्त्रस्पृक् ॥ अनुदक इति किम् ? उदकस्पर्शः ॥

## अदोऽनन्ने ॥ ७१ ॥

अनन्ने नाम्न्युपपदेऽदः क्विब् भवति । आममत्ति । आमात् ॥ आममत्ति । आमात् ॥ अनन्न इति किम् ? अन्नादः ॥ कणाद इत्यपि दृश्यते ॥

## क्रव्ये च ॥ ७२ ॥

क्रव्ये चोपपदेऽदः क्विब् भवति । पुनर्वचनात् पक्षे । क्रव्यात् । अपक्षेऽणेव । क्रव्यादा राक्षसाः ॥ चतुःसूत्रीयं प्रपञ्चार्थेति ॥

## ऋत्विग्दधृक्स्रग्दिगुष्णिहश्च ॥ ७३ ॥

एते क्विबन्ता निपात्यन्ते । ऋतौ यजतीति । ऋत्विक् । ऋडित पश्च ॥ धृषो द्विर्वचनम् । दधृक् । धर्षणशीलः प्रगल्भः । कर्मणि क्विप् । सृजति तामिति स्रक् । दिशेः

कर्मणि क्विप् । दिशति तामिति दिक् ॥ ऊर्ध्वं स्निह्यति । उष्णिक् । उदो दलोपः षत्वं निपातनात् । गत्वं च दृगादित्वात् ॥

**सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि ॥ ७४ ॥**

एषामुपसर्गेऽनुपसर्गेऽपि नाम्न्युपपदेऽपि क्विब् भवति । उपसीदति । उपसत् । सत् । सभासत् ॥ द्विषः साहचर्यात् सूतेरादिः । प्रसूते । प्रसूः । सूः । अण्डसूः ॥ विद्विट् । द्विट् । मित्रद्विट् ॥ प्रध्रुक् । ध्रुक् । मित्रध्रुक् ॥ प्रधुक् । धुक् । गोधुक् ॥ प्रयुक् । युङ् । अश्वयुक् ॥ संवित् । वित् । वेदवित् । लाभार्थेऽपि दृश्यते ॥ प्रभित् । भित् । काष्ठभित् ॥ प्रच्छित् । छित् । रज्जुच्छित् ॥ अभिजित् । जित् । अरिजित् ॥ प्रणीः । नीः । सेनानीः ॥ विराट् । राट् । गिरिराट् ॥ प्रपञ्चार्थमिदम् ॥

**कर्मण्युपमाने त्यदादौ दृशष्टक्सकौ च ॥ ७५ ॥**

त्यदादावुपमान उपपदे उपमेयेऽर्थे कर्मणि दृशष्टक्सकौ च भवतः । क्विप् च । त्य इव दृश्यते । त्यादृशः । त्यादृशौ । त्यादृक्षः । त्यादृक् ॥ स इव दृश्यते । तादृशः । तादृशौ । तादृक्षः । तादृक् ॥ एषु समानस्य स इति सदृशः । सदृशौ । सदृक्षः । सदृक् ॥ आ सर्वनाम्नः [का० ४ ६. ६८] । अन्यादृशः । अन्यादृशौ । अन्यादृक्षः । अन्यादृक् ॥ त्यदादाविति किम् ? वृक्ष इव दृश्यते ॥ उप-

मान इति किम् ? स इष्यते । धर्मणीति किम् ? स इव पश्यति ॥

## नाम्न्यजातौ णिनिस्ताच्छील्ये ॥ ७६ ॥

तच्छब्देन धात्वर्थो निर्दिश्यते । तदेव शीलं यस्य कर्तुरिति विग्रहः । अजातिवाचके नाम्न्युपपदे धातोस्ताच्छील्ये गम्यमाने णिनिर्भवति । उष्णभोजी । धर्मावभाषी ॥ नाम्नीति किम् ? उपभोक्ता । सम्भोक्ता ॥ कथम् उदासारी । प्रत्यासारी । ब्रह्मवादी ॥ साधौ च । साधु ददातीति साधुदायी । साधुकारीति यथाप्राप्तमेव ॥ अजाताविति किम् ? ब्राह्मणानामन्त्रयिता ॥

आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥
प्रागुत्पत्तिविनाशाभ्यां सत्त्वस्थ युगपद्गुणैः ।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः ॥ इत्यन्ये ॥

तदा कुमारवादीति भवितव्यमेवाजातित्वात् ॥

## कर्तर्युपमाने ॥ ७७ ॥

उपमानेऽर्थे नाम्नि कर्तृवाचिन्युपपदे धातोर्णिनिर्भवति । जात्यर्थमताच्छील्याभेदार्थं च । उष्ट्र इव क्रोशति । उष्ट्रक्रोशी ॥ ध्वाङ्क्ष इव रौति । ध्वाङ्क्षरावी ॥ कर्तरीति किम् ? अपूपानिव कोद्रवान् भुङ्क्ते ॥ उपमान इति किम् ? उष्ट्रः क्रोशति ॥ उपपदवाच्यः कर्ता णिन्यर्थस्य कर्तुरुपमानं व्याख्यम् । उष्ट्रस्येव क्रोशनमस्येति वाक्ये । अन्तरङ्गसम्बन्धेऽपि गौणत्वमिति ॥

व्रताभीक्ष्ण्ययोश्च ॥ ७८ ॥

व्रतमिति शास्त्रविहितो नियमः। आभीक्ष्ण्यं पौनःपुन्यम् आसेवा वा। नाम्न्युपपदे व्रताभीक्ष्ण्ययोर्गम्यमानयोर्धातोर्णिनिर्भवति। श्राद्धभोजी। अलवणभोजी। अर्थित्वात् प्रवृत्तौ नियमः। सति भोजने श्राद्धमेव भुङ्क्ते। न श्राद्धमिति॥ आभीक्ष्ण्ये। क्षीरपायिण उशीनराः। सौवीरपायिणो वाह्लीकाः। तत्रान्यस्येयं नास्तीति कथं विना क्षीरे तात्पर्यमिति शीलादन्यदाभीक्ष्ण्यम्॥

मनः पुंवच्चात्र ॥ ७९ ॥

कर्मण्युपपदे मन्यतेर्णिनिर्भवति। अस्मिंश्च णिनिप्रत्ययान्ते धातौ पर उपपदस्य पुंवद्भावोपपत्तिश्चैव यथासम्भवम्॥ पटुं मन्यते। पटुमानी॥ पट्वीं मन्यते। पटुमानिनी॥ पुंवच्चेति पुंवदादिशास्त्रमत्राभिमतम्। तेन खट्वामानिनी। ब्रह्मबन्धूमानिनी। द्रोणीमानिनीति सिद्धम्॥

खश्चात्मने ॥ ८० ॥

कर्मण्युपपद आत्मार्थो यो मन्यतिस्तस्माण्णिनिर्भवति खश्च॥ विदुषीमात्मानं मन्यते। विद्वन्मानिनी। विदुषिम्मन्या। विद्वन्मानी। विद्वन्मन्यः॥ पट्वीमात्मानं मन्यते। पटुमानिनी। पट्विम्मन्या। पटुमानी। पटुम्मन्यः॥ तुल्याधिकरणत्वाण्णिनि पुंवद्भावः। तादर्थ्येनवार्थेद्वारेणात्मशब्दः कर्मभूतो वाच्ये सुखार्थः। कारकशक्तिभेदाद्भेद इति।

एक एव कर्त्ता कर्म च स्यात् । यथा पीयमानं मधु मदयति । बाह्योऽयात्मात्मवचनात् ।

करणेऽतीते यजः ॥ ८१ ॥

करणवाचिन्युपपदेऽतीते क्रियायां वर्त्तमानाद् यजतेर्णिनिर्भवति । अग्निष्टोमयाजी । वाजपेययाजी । अग्निष्टोमाख्यैर्यागैः स्वर्गाख्यं फलं भावितवानित्यर्थः । स्वर्गशब्दस्तु वृत्तावन्तर्भूतो न प्रयुज्यते । यदि विशेषव्यापारः सामान्यव्यापारस्य करणं कथम् अग्निहोत्रं जुहुयात् स्वर्गकामः । अपौरुषेयाणि वेदवाक्यानीति ॥ अतीत इति किम् ? अग्निष्टोमेन यजति ॥ करण इति किम् ? याने यजति स्म । अविवक्षितकरणात् ॥

कर्मणि हनः कुत्सायाम् ॥ ८२ ॥

कर्मण्युपपदेऽतीते वर्त्तमानाद् हन्तेः कुत्सायां गम्यमानायां णिनिर्भवति । पितृघाती । मातृघाती ॥ कुत्सायामिति किम् ? चौरं हतवान् । दण्डेन हतवान् पितृव्यमिति सापेक्षत्वात् ॥ कर्मग्रहणं सुखार्थम् ॥

क्विप् ब्रह्मभ्रूणवृत्रेषु ॥ ८३ ॥

ब्रह्मादिषु कर्मसूपपदेष्वतीते वर्त्तमानाद् हन्तेः क्विप् भवति । ब्रह्महा । भ्रूणहा । वृत्रहा । ब्रह्मादिष्वेव हन्तेरेवातीत एव क्विबेवेति चतुर्विधोऽत्र नियमः । तेन गां हतवान् ॥ ब्रह्माधीतवान् । ब्रह्म हन्ति । ब्रह्म हतवान् । अतो नाण् ॥ विनियमोऽपि दृश्यते । मधुहा ।

अहिहा । गोविंहा । वक्षघ्नः । वृत्रस्य हन्तुः । ब्रह्मवित् ॥

## कृञः सुपुण्यपापकर्म्ममन्त्रपदेषु ॥ ८४ ॥

एषु कर्म्मसूपपदेष्वतीते वर्त्तमानात् कृञः क्विप् भवति । सुष्ठु कृतवान् । सुकृत् ॥ पुण्यकृत् । पापकृत् । कर्मकृत् । मन्त्रकृत् । पदकृत् ॥ स्वादिषु कृञ एवातीत एव क्विबेवेति त्रिविधोऽत्र नियमः । तेन मन्त्रानधीतवान् । कर्म करोति । कर्म्म कृतवान् । अतो नाण् ॥ शास्त्रकृत् । सूत्रकृदिति भवत्येव ॥

## सोमे सुञः ॥ ८५ ॥

सोमे कर्मण्युपपदेऽतीते वर्त्तमानात् सुञः क्विब् भवति । सोमं सुतवान् । सोमसुत् ॥ चतुर्विधोऽत्रापि नियमः । तेन सुरां सुतवान् । सोमं विक्रीतवान् । सोमं सुनोति । सोमं सुतवान् । अतो नाण् ॥ अन्येभ्यः क्विबभावेऽण् स्यादेव ॥

## चेरग्नौ ॥ ८६ ॥

अग्नावुपपदेऽतीते वर्त्तमानाच्चिनोतेः क्विब् भवति । अग्निं चितवान् । अग्निचित् ॥ चतुर्विधोऽत्रापि नियमः । तेन पुष्पं चितवान् । अग्निं हुतवान् । अग्निं चिनोति । अग्निं चितवान् । अतो नाण् ॥ अन्यार्थं लिष्टकानां रचनाविशेषे गम्यमाने कर्मण्यपि दृश्यत एव । श्येन इव चीयते स्म । श्येनचित् । रथचक्रमिव चीयते स्म । रथचक्रचित् ॥ इयमपि चतुःसूत्री सप्रचारा ॥

## विक्रिय इन् कुत्सायाम् ॥ ८७ ॥

कर्मण्युपपदे, विपूर्वादतीते वर्त्तमानात् क्रीणातेः कुत्सायां गम्यमानायामिन् भवति। सोमं विक्रीतवान्। सोमविक्रयी। तैलविक्रयी॥ अलन्तादिना सिद्धं कुत्सायामण्बाधनार्थं वचनम्॥

## दृशेः क्वनिप् ॥ ८८ ॥

कर्मण्युपपदेऽतीते वर्त्तमानाद् दृशेः क्वनिप् भवति। मेरुं दृष्टवान्। मेरुदृश्वा॥ अतीते क्विबादीनां बाधकमिदम्॥

## सहराज्ञोर्युधः ॥ ८९ ॥

सहराज्ञोः कर्मणोरुपपदयोरतीते वर्त्तमानाद् युध्यतेः क्वनिप् भवति। सह युध्यते स्म। सहयुध्वा॥ राजानं युध्यते स्म। राजयुध्वा॥ अन्तर्भूतेऽनर्थः सकर्मकः। राजानं योधितवानित्यर्थः॥

## कृञश्च ॥ ९० ॥

सहराज्ञोः कर्मणोरुपपदयोरतीते वर्त्तमानात् कृञः क्वनिप् भवति। सह करोति स्म। सहकृत्वा॥ राजकृत्वा॥

## सप्तमीपञ्चम्यन्ते जनेर्डः ॥ ९१ ॥

सप्तम्यन्ते पञ्चम्यन्ते चोपपदेऽतीते वर्त्तमानाज्जनेर्डो भवति। जले जातम्। जलजम्। सरसिजम्। बुद्धिजम्। बुद्धिजः। संस्कारजः। क्रोधजम्। ब्राह्मणजो धर्मः। क्षत्रि-

यज युद्धम् । कथम् अश्वाज्जातः । हस्तिनो जात इति प्रायः पञ्चम्यामजाताविव दृश्यते ॥

## अन्यत्रापि च ॥ ६१ ॥

अन्यस्मिन्नुपपदेऽतीते वर्त्तमानाज्जनेर्डो भवति । न जातोऽजः । द्विर्जातो द्विजः । प्रजा । अभिजः । परिजः । पुमांसमनुजाता कन्या पुमनुजा । स्त्रियमनुजातः स्त्र्यनुज ॥

## निष्ठा ॥ ६३ ॥

अतीते वर्त्तमानाद्धातोर्निष्ठाप्रत्ययो भवति । कृतः । कृतवान् । शयितः । शयितवान् ॥

## ङ्वनिप् सुयजोः ॥ ६४ ॥

अतीते वर्त्तमानयोः सुयजोर्ङ्वनिब् भवति । सुतवान् । सुत्वा । इष्टवान् । यज्वा ॥ ङकारोऽगुणार्थः ॥

## जीर्य्यतेरन्तृन् ॥ ६५ ॥

अतीते वर्त्तमानाज्जीर्य्यतेरन्तृन् भवति । जरन् । जरती ॥ ऋकारो नकारश्चोच्चारणार्थः ॥

॥ इति दौर्गसिंह्यां वृत्तौ कृत्सु तृतीयः पादः समाप्तः ॥

---

## क्वन्सुकानौ परोक्षावच्च ॥ १ ॥

अतीते वर्त्तमानाद्धातोः क्वन्सुकानौ भवतः । तौ च

वा। सन् गुणः। अस्ति गुणः। विद्यमानो ब्राह्मणः। विद्यते ब्राह्मणः॥

## लक्षणहेत्वोः क्रियायाः॥ ३॥

आ भूताद् [का० ४. ४. ६७] वर्त्तमानाधिकारः। क्रियाया लक्षणे हेतौ चार्थे वर्त्तमानाद्धातोः शन्तृङानशौ भवतः। तिष्ठन्तोऽनुशासति गणकाः। शयाना भुञ्जते यवनाः॥ हेतौ च। अर्जयन् वसति। अधीयानो वसति॥ लक्षणं चिह्नम्। जनको हेतुः॥ लक्षणहेत्वोरिति किम्? पचति च पठति च॥ क्रियाया इति किम्? यः कम्पते सोऽश्वत्थः। यदुत्प्लवते तत्तृणम्॥

## वेत्तेः शन्तुर्वन्सुः॥ ४॥

वेत्तेः परस्य शन्तुर्वन्सुर्भवति वा। विद्वान्। विद्वांसौ। विदन्। विदन्तौ। तिब्निर्देशः सुखार्थः। वेत्तेरेवानन्तरः शन्तृङिति॥

## आनोऽप्यात्मने॥ ५॥

अत्र। एतेषु क्वन्सुप्रभृतिषु मध्ये। आन आत्मनेपदसंज्ञो भवति। इतरः परस्मैपदमर्थात्। पचमानम्। शयानम्। अधीयमानम्। रोचमानः। चक्राणः। अतिबभूवानः। आत्मनेपदत्वाद् भावकर्मणोः कर्त्तरि च यथादिभ्यश्च भवति॥

## ईं तदासः॥ ६॥

आसः परो य आनस्तस्यादिरीर्भवति। आसीनः।

तस्येति रूपमात्रानुकर्षणार्थम्। तेन शानङोऽपि। कतो-ऽत्रोदासीनाः सन्ति॥

आन्मोऽन्त आने॥ ७॥

अकारात् परो य आनस्तस्मिन् परेऽकारान्तस्य मकारोऽन्तो भवति। पचमानः। यजमानः। क्रियमाणः। करिष्यमाणः॥

पूङ्यजोः शानङ्॥ ८॥

पूङो यजश्च शानङ् भवति॥ पवते। पवमानः॥ यजते। यजमानः॥ आभ्यां कर्त्तर्य्येवानः स्यादित्यर्थं वचनमित्येके। भावकर्मणोरानशा भाव्यमिति। प्रथमैकाधिकरणप्रपञ्चार्थमित्यन्ये। वहिष्पवमानं मध्यन्दिनमित्यनवयवार्थ एवायं सञ्ज्ञाशब्दः॥

शक्तिवयस्ताच्छील्ये॥ ९॥

शक्त्यादिषु गम्यमानेषु धातोः शानङ् भवति। कतीह निघ्नानाः। कतीह कवचमुद्वहमानाः। कतीह भुञ्जमानाः॥ अभिधानाद् वासरूपः शन्तृङ् न स्यात्॥

इङ्धारिभ्यां शन्तृङ् कृच्छ्रे॥ १०॥

इङो धारेश्च शन्तृङ् भवति। अकृच्छ्रे गम्यमाने। अधीयन् पारायणम्। धारयन्नुपनिषदम्॥ इङ आनशि प्राप्ते धारेरुभयप्राप्तौ वावचनम्। वासरूपोऽपि नेष्टव्य एव॥ अकृच्छ्र इति किम्? कृच्छ्रेणाधीते।

### द्विषः शत्रौ ॥ ११ ॥

द्विषः शत्रौ कर्त्तरि शन्तृङ् भवति । द्विषन् । द्विषन्तौ ॥ शत्राविति किम् ? द्वेष्टि पतिं भार्या ॥

### सुञो यज्ञसंयोगे ॥ १२ ॥

यज्ञफलेन संयोगविषये वर्त्तमानात् सुञः शन्तृङ् भवति । सुन्वन्तो यजमानाः ॥ संयोगग्रहणं फलवत्-कर्त्रर्थप्रतिपत्त्यर्थम् ॥ यज्ञसंयोग इति किम् ? सुनोति सुराम् ॥

### अर्हः प्रशंसायाम् ॥ १३ ॥

प्रशंसायां गम्यमानायामर्हतेः शन्तृङ् भवति । अर्हन् भवान् विद्याम् ॥ प्रशंसायामिति किम् ? अर्हति चौरो वधम् ॥

### तच्छीलतद्धर्मतत्साधुकारिष्वा क्वेः ॥ १४ ॥

आ क्वेः [का० ४. ४. ५७] क्विपमभिव्याप्य तच्छीलादिषु कर्त्तृष्वितः प्रत्यया वेदितव्याः ॥

### तृन् ॥ १५ ॥

तच्छीले तद्धर्मे तत्साधुकारिणि च कर्त्तरि धातोस्तृन् भवति । वजाद्यपवादः । वदिता जनापवादान् । मुण्डयितारः श्राविष्ठायना वधूमूढाम् । साधु गच्छति गन्ता खेलम् । साधुः कुशलार्थे एवात्र ॥

### भ्राज्यलङ्कृञ्भूसहिरुचिवृतिवृधिचरिप्रज-

नापत्रपेनामिष्णुच् ॥ १६ ॥

एभ्य इष्णुज् भवति तच्छीलादिषु कर्तृषु। तृणोऽपवादः। भ्राजिष्णुः। अलङ्करिष्णुः। अलं भूषणपर्याप्तिवारणेषु। मण्डने युमपि बाधते। भविष्णुः। सहिष्णुः। रोचिष्णुः। वर्त्तिष्णुः। वर्धिष्णुः। चरिष्णुः। प्रजनिष्णुः। अपत्रपिष्णुः। इनन्तानां छन्दसीत्येके। धारयिष्णुः। निराकरिष्णुरिति वक्तव्यम्॥

मदिपतिपचामुदि ॥ १७ ॥

उदुपपद एभ्य इष्णुज् भवति तच्छीलादिषु कर्तृषु। उन्मदिष्णुः। उत्पतिष्णुः। उत्पचिष्णुः। यथासंख्यं नास्ति॥

जिभुवोः स्नुक् ॥ १८ ॥

आभ्यां स्नुग् भवति तच्छीलादिषु कर्तृषु। जिष्णुः। भूष्णुः॥

ग्लाम्लास्थाक्षिपचिपरिमृजां स्नुः ॥ १९ ॥

एभ्यः स्नुर्भवति तच्छीलादिषु कर्तृषु। ग्लास्नुः। म्लास्नुः। स्थास्नुः। क्षेष्णुः। पक्ष्णुः। परिमार्ष्णुः॥

त्रसिगृधिधृषिक्षिपां क्नुः ॥ २० ॥

एभ्यः क्नुर्भवति तच्छीलादिषु कर्तृषु। त्रस्नुः। गृध्नुः। धृष्णुः। क्षिप्नुः॥

शमामष्टानां घिनिण् ॥ २१ ॥

शमादीनामष्टानां घिनिण् भवति तच्छीलादिषु

कर्तृषु। शाम्यतीति शमी। एवं दमी। तमी। श्रमी। भ्रमी। क्षमी। क्लमी। उन्मादी। अष्टानामिति किम्? असिता॥

## युजभजभुजद्विषद्रुहदुहदुषाङ्क्रीडत्यजानुरुधाङ्यमाङ्यसरञ्जाभ्याङ्हनां च॥२२॥

एभ्यो घिनिण् भवति। तच्छीलादिषु कर्तृषु॥ युजिर् युज योगी॥ भज भागी॥ भुज भुजो। भोगी। द्विष। द्वेषी॥ द्रुह। द्रोही॥ दुह दोही॥ दुष दोषी॥ आङ् क्रीड। आक्रीडी॥ त्यज त्यागी॥ अनुरुध अनुरोधी॥ आङ् यम। आयामी॥ आङ् यस। आयासी। रञ्ज। रागी॥ अभ्याङ् हन। अभ्याघाती॥

## समि सृजिपृचिज्वरित्वराम्॥ २३॥

समि उपपदे एभ्यो घिनिण् भवति तच्छीलादिषु। संसर्गी। सम्पर्की। संज्वारी। संत्वारी॥ सानुबन्धत्वात् ह्रस्वः॥

## वौ विचकत्थस्रम्भुकषलपाम्॥ २४॥

वावुपपदे एभ्यो घिनिण् भवति तच्छीलादिषु। विवेकी। विकत्थी। विस्रम्भी। विकाषी। विलापी॥

## प्रे द्रुमथवद्वसलपाम्॥ २५॥

प्र उपपदे एभ्यो घिनिण् भवति तच्छीलादिषु। प्र-

द्रावी । प्रमाथी । प्रवादी ॥ वस निवास एव । प्रव,सी ॥ प्रलापी ॥

## परौ सृदहोः ॥ २६ ॥

परावुपपदे सृदहोर्घिनिण् भवति तच्छीलादिषु । परिसारी । परिदाही ॥ अस्तिविवक्षायामिना सिद्धम् । विनिण् किमर्थः । यथा प्रयामोऽस्यास्तीति प्रयामी । प्रयामी । विसारी । विदाही । विवादी । अनुवादी । मयादी । विवादी । भ्रशारी । व्यभिचारी । विचारी । विद्रावी । रोगीत्यादय ॥ तच्छीलादिविवक्षाया इन मा भूदिति वचनम् ॥

## क्षिपरटवद्वादिदेविभ्यो वुण् च ॥ २७ ॥

परावुपपदे एभ्यो वुण् भवति घिनिण् च तच्छीलादिषु ॥ परिक्षेपक । परिक्षेपी ॥ परिराटक. । परिराटी ॥ परिवादक । परिवादी । परिवादयतीत्यर्थेऽप्ये वम् ॥ परिदेवत इति परिदेवकः । परिदेवी ॥ कटि देविभ्यां विनिणेवेच्छेके ॥ वुण्ग्रहणं ताच्छील्येषु वास रूपविधिर्नास्तीति ज्ञापनार्थम् ॥

## निन्दहिंसक्लिशखादानेकस्वरविनाशिव्या-भाषासूया वुञ् ॥ २८ ॥

एभ्यो वुञ् भवति तच्छीलादिषु । निन्दक । हिंसक । क्लेशकः । खादक । मपाऊ' ॥ दरिद्रायकः । अनेक स्वरावेच्छन्त्येके ॥ विनाशयतीति विनाशक । व्याभा

यकः ॥ असूयकः । कण्ड्वादिभ्योऽसूयादेर्यगनेकस्वरादिति । पुनर्वुञ्ग्रहणं प्रकृतोऽपि णिनिर्न स्यादिति ॥

## देविक्रुशोश्चोपसर्गे ॥ २९ ॥

उपसर्गे उपपदे देवयतेः क्रुशश्च वुञ् भवति तच्छीलादिषु ॥ आदेवकः । परिदेवकः । क्रोडायामेवाभिधानम् ॥ आक्रोशकः ॥ उपसर्ग इति किम् ? देवयिता । क्रोष्टा ॥

## क्रुधिमण्डिचलिशब्दार्थेभ्यो युः ॥ ३० ॥

एभ्यो युर्भवति तच्छीलादिषु । अर्थशब्दः प्रत्येकमभिसम्बध्यते । क्रुध्यर्थात् । क्रोधनः । कोपनः ॥ मण्डार्थात् । मण्डनः । भूषणः ॥ चल्यर्थात् । चलनः । कम्पनः ॥ शब्दार्थात् । शब्द इति लिङ्गमिनन्तं चौरादिकमित्येके । शब्दनः । रवणः । कथम् ? पठिता विद्याम् । अभिधानाच्चलिशब्दार्थाभ्यामकर्मकाभ्यामिति ॥

## रुचादेश्च व्यञ्जनादेः ॥ ३१ ॥

रुचादेर्गणाद् व्यञ्जनादेर्युर्भवति तच्छीलादिषु । येभ्य आत्मनेभाषः श्रूयते ते रुचप्रकारा गणे ङानुबन्धवर्जिता इति । रोचनः । वर्तनः । वर्धनः ॥ रुचादेरिति किम् ? भविता । शयिता ॥ व्यञ्जनादेरिति किम् ? एधिता ॥ आदिग्रहणं किम् ? जुगुप्सनः । तितिक्षणः । मीमांसनः ॥ बीभत्सन इत्यत्रापि स्यात् । एभ्योऽन्ये रुचादयो व्यञ्जनान्ता इति ॥ कथम् ? वसिता वस्त्रम् । अभिधानादिहाप्यकर्मकेभ्य एव ॥

शॄकमगमहनवृषभूस्थालषपतपदामुकञ् ॥१५४॥

एभ्य उकञ् भवति तच्छीलादिषु । शारुकः । कामुकः । आगामुकः । आघातुकः । वर्षुकः । प्रभावुकः । उपस्थायुकः । अपलाषुकः । प्रपातुकः । प्रपादुकः ॥

वृङ्भिक्षलुण्टजल्पकुट्टां षाकः ॥१५५॥

एभ्यः षाको भवति तच्छीलादिषु । वराकः । वराकी । भिक्षाकः । भिक्षाकी । लुण्टाकः । लुण्टाकी । जल्पाकः । जल्पाकी । कुट्टाकः । कुट्टाकी ॥ वृञस्तु । वरिता ॥ षकारो ङीषर्थः ।

प्रे जुसुवोरिन् ॥१५६॥

प्र उपपदे जवतेः सवतेश्च इन् भवति तच्छीलादिषु । प्रजवी । षु प्रसवे । प्रसवी ॥

जीण्दृक्षिविश्रिपरिभूवमाभ्यमाव्यथां च ॥१५७॥

एभ्य इन् भवति तच्छीलादिषु । जि । जयी । इण् । अत्ययी ॥ दृङ् । आदरी ॥ क्षि । क्षयी ॥ विश्रि । विश्रयी ॥ परिभू । परिभवी ॥ टुवम । वमी ॥ अभ्यम । अभ्यमी ॥ न व्यथत इति । अव्यथी ॥ तच्छीलादिविवक्षायां इन् मा भूदिति वचनम् ॥

दयिपतिगृहिस्पृहिश्रद्धातन्द्रानिद्राभ्य आलुः ॥१५८॥

एभ्य आलुर्भवति तच्छीलादिषु । दय । दयालुः ॥

पतिगृहिस्पृहिश्रद्धादाविनन्ताः । पतयालुः । गृहयालुः ॥ स्पृहयालुः ॥ श्रत् पूर्वो धाञ् । श्रद्धालुः ॥ तन्द्रा इति सौत्रो धातुः । तन्द्रालुः ॥ निपूर्वो द्रा । निद्रालुः ॥ शयालुरिति वक्तव्यम् ॥ कथं हृदयालुः । हृदयमस्यास्तीति विवक्षायामालुरुचितो रूढितः ॥

### शदिसदिधेड्दासिभ्यो रुः ॥ ३९ ॥

एभ्यो रुर्भवति तच्छीलादिषु । शद्रुः । सद्रुः । धारुः ॥ ददाति दयते यच्छति द्यति वा । दारुः ॥ षिञ् बन्धने । सेरुः ॥

### सृघस्यदां मरक् ॥ ४० ॥

एभ्यो मरक् भवति तच्छीलादिषु । ससर्त्ति सरति वा । सृमरः । अद्मरः ॥ गुणरूपाविवचनात् । सरणः । सृत्वरः ॥ घस्मरः । घस्लृ प्रकृत्यन्तरम् ॥

### मिदिभासिभञ्जां घुरः ॥ ४१ ॥

एभ्यो घुरो भवति तच्छीलादिषु । मेद्यतीति मेदुरः । भासत इति भासुरः ॥ भज्यते स्वयमेवेति कर्मकर्त्तर्येवाभिधानात् । भङ्गुरं काष्ठम् । यस्तु परं भनक्ति ततस्तृन्नेव । भङ्क्ता ॥

### छिदिभिदिविदां कुरः ॥ ४२ ॥

एभ्यः कुरो भवति तच्छीलादिषु । छिदुरम् । भिदुरम् । वेत्तीति विदुरः ॥ छिदिभिदोः कर्मकर्त्तर्येवाभि-

भानात् ॥ केचिदकर्मकार्त्थेऽपि । दीपान्धकारभिदुरो हृता-
रिपक्षच्छिदुर इति ॥

## जागुरूकः ॥ ४३ ॥

जागर्त्तेरूको भवति तच्छीलादिषु । जागरूक ॥

## चेक्रीयितान्तानां यजिजपिदंशिवदाम् ॥४४॥

चेक्रीयितान्तानामेषामूको भवति तच्छीलादिषु । या
यजूक । जञ्जपूक । दन्दशूक । वावदूक ॥ सासद्यि-
चाचलिवावदिपापतयोऽपि चेक्रीयितान्ताः क्विप्रत्यये सति
निपात्यन्ते ॥

## तस्य लुगचि ॥ ४५ ॥

तस्य चेक्रीयितस्य लुग् भवति तच्छीलादिषु । यवि
पर । लोलुवः । पोपुव । व्यञ्जनान्तात् सिद्ध एव । केचि-
द्योग विभजन्ति । तेन बाभवीति । राराटीति सिद्धम् ॥

## ततो यातेर्वरः ॥ ४६ ॥

ततश्चेक्रीयितान्ताद् यातेर्वरो भवति तच्छीलादिषु ।
यायावर ॥ वरे विषयभूतेऽस्य च लोपे यस्य व्यञ्जने लोपः
स्यात् ॥

## कसिपिसिभासीशस्थाप्रमदां च ॥ ४७ ॥

एषां वरो भवति तच्छीलादिषु । कस्वर । पेस्वर ।
भास्वरः । ईश्वरः । स्थावरः । प्रमद्वर ॥

## इजोषनशां कुरप् ॥ ४८ ॥

एषां क्वरप् भवति तच्छीलादिषु । सृत्वरः । जित्वरः । इत्वरः । नश्वरः ॥ क्वरप् नदादौ । सृत्वरी ॥

**गमस्त च ॥ ४९ ॥**

गमः क्वरप् भवति तच्छीलादिषु तकारश्चान्तादेशः । गत्वरः । गत्वरी ॥

**दीपिकम्प्रजसिहिंसिकमिस्मिनमां रः ॥ ५० ॥**

एषां रो भवति तच्छीलादिषु । दीप्रः । कम्प्रः । नञ्पूर्वो जसु मोक्षणे । अजस्रः । हिंस्रः । कम्रः । स्मेरः । नम्रः ॥ युरपि दृश्यते । कम्पनः । कमनः ॥

**सनन्ताशंसिभिक्षामुः ॥ ५१ ॥**

सनन्तस्याशंसेर्भिक्षेश्च उर्भवति तच्छीलादिषु । चिकीर्षुः । आङः शसि इच्छायामिति न्याय्यः पाठः । आशंसुः । भिक्षुः ॥ सनन्तग्रहणं सनु दान इति धातुनिरासार्थम् ॥

**विन्दुरिच्छुश्च ॥ ५२ ॥**

विन्दुरिच्छुरिति निपात्येते तच्छीलादिषु । अभिधानाद् विद ज्ञाने । विन्दुः । इषु इच्छायाम् । इच्छुः ॥ कथम् ? बिदि अवयवे । बिन्दुः स्तोकपर्य्यायः । संज्ञाशब्द औणादिक इति ॥

**आदृवर्णोपधालोपिनां किर्द्वे च ॥ ५३ ॥**

आदन्तस्य । ऋवर्णान्तस्य । उपधालोपिनश्च कि-

वति तच्छीलादिषु । तत्सन्नियोगे च द्वे उसौ भवतः । डुधाञ् । दधिः ॥ ऋवर्णान्तस्य । चक्रिः । मम्रिः ॥ उपधालोपिनश्च । जनो जन । जज्ञिः ॥ एते भाषायां रूढाः । अन्ये प्रयोगादनुसर्त्तव्याः ॥

### तृषिधृषिस्वपां नजिङ् ॥ ५४ ॥

एषां नजिङ् भवति तच्छीलादिषु । तृष्णक् । धृष्णक् । स्वप्नक् ॥ धृषेर्नेच्छन्त्येके ॥

### शृवन्द्योरारुः ॥ ५५ ॥

शृणातेर्वन्दतेश्चारुर्भवति तच्छीलादिषु । शरारुः । वन्दारुः ॥

### भियो क्रुक्लुकौ च ॥ ५६ ॥

बिभेतेः क्रुक्लुकौ च भवतस्तच्छीलादिषु । भीरुः । भीलुः । भीरुकः । भीलुकः ॥ कौ बहुलार्थ एव ॥

### क्विब् भ्राजिपॄधुर्वीभासाम् ॥ ५७ ॥

एषां क्विब् भवति तच्छीलादिषु । विभ्राट् । विभ्राजौ ॥ पूः । पुरौ ॥ धूः । धुरौ ॥ भाः । भासौ ॥ तच्छीलिकबाधनार्थं पुनः क्विब्वचनम् ॥

### द्युतिगमोर्द्वे च ॥ ५८ ॥

द्युतेर्गमेश्च क्विब् भवति तच्छीलादिषु । द्वे चास्य भवतः । दिद्युत् । जगत् ॥

### भुवो डुर्विशंप्रेषु ॥ ५९ ॥

विशंप्रेषूपदेषु भुवो डुर्भवति । विभुः । शम्भुः । प्रभुः ॥ डकारोऽन्त्यस्वरादिलोपार्थः ॥

कर्मणि धेटः ष्ट्रन् ॥ ६० ॥

कर्मणि कारके धेटो धातोः ष्ट्रन् भवति । षकारो नदाद्यर्थः । धयति तामिति धात्री । स्तनदायिनी । आमलकी चोच्यते ॥ केचिद् दधातेरपीच्छन्ति । दधाति तां भैषज्यार्थमिति धात्री । संज्ञाशब्दत्वाद् विशेषाभावः ॥

नीदाप्शसुयुयुजस्तुतुदसिसिचमिहपतदंशनहां करणे ॥ ६१ ॥

एषां करणे कारके ष्ट्रन् भवति । णीञ् । नेत्रम् ॥ दाप् लवने । दात्रम् ॥ शसु हिंसायाम् । शस्त्रम् ॥ यु । योत्रम् ॥ युजिर् । योक्त्रम् ॥ ष्टुञ् । स्तोत्रम् ॥ तुद । तोत्त्रम् ॥ षिञ् । सेत्रम् ॥ षिच । सेक्त्रम् ॥ मिह । मेढ्रम् ॥ पतॢ । पत्त्रम् ॥ दन्श । दंष्ट्रा । सदैव स्त्रियामादेः ॥ णह । नद्ध्री ॥

हलसूकरयोः पुवः ॥ ६२ ॥

पूञ् पूङो वा करणे ष्ट्रन् भवति । तच्चेत् करणं हलसूकरयोरवयवः स्यात् । हलस्य पोत्रम् । सूकरस्य पोत्रम् । मुखमित्यर्थः ॥ सर्वधातुभ्यः ष्ट्रन्नित्यस्य प्रपञ्चार्थम् ॥

अर्तिलूधूसूखनिसहिचरिभ्य इत्रन् ॥ ६३ ॥

एभ्यः करणे इत्रन् भवति । अरित्रम् । लवित्रम् ॥ धू

विधूनने । धवित्रम् ॥ षू प्रेरणे । सवित्रम् ॥ खनित्रम् । सहित्रम् ॥ चर गत्यर्थः चरित्रम् ॥

## पुवः संज्ञायाम् ॥ ६४ ॥

पूञ् पूङ् वा करणे इत्रन् भवति संज्ञायां गम्यमानायाम् । पवित्रं यज्ञोपवीतम् । पवित्रा नाम नदी ॥

## ऋषिदेवतयोः कर्त्तरि ॥ ६५ ॥

पुव ऋषौ देवतायां च कर्त्तरि इत्रन् भवति । पुनातीति पवित्रोऽयमृषिः । पवित्रोऽयमग्निः ॥ केचित् करणमनुवर्त्य यथासंख्यसम्बन्धमिच्छन्ति विवक्षाया को विशेष इति ॥

## ञानुबन्धमतिबुद्धिपूजार्थेभ्यः क्तः ॥ ६६ ॥

मतिरिच्छा । बुद्धिर्ज्ञानम् । पूजा सत्कारः ॥ ञानुबन्धेभ्यो मतिबुद्धिपूजार्थेभ्यश्च वर्त्तमाने क्तो भवति । भावे कर्मणि कर्त्तरि च यथासम्भवम् । ञिमिदा । मिन्नः । ञिक्ष्विदा । क्ष्विण्णः । मत्यर्थात् । राज्ञां मतः । राज्ञामिष्टः ॥ बुद्ध्यर्थात् । राज्ञां बुद्धः । राज्ञां ज्ञातः । पूजार्थात् । राज्ञां पूजितः । राज्ञामर्चितः ॥ चान्यत्रापीति वचनात् ॥

शान्तितो रक्षितः शान्त आक्रुष्टो जुष्ट इत्यपि ।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ॥
हृष्टतुष्टौ तथा कान्तस्तथोभौ संयतोद्यतौ ।
कष्टं भविष्यतीत्याहुरमृताः पूर्ववत् स्मृताः ॥

तथा शप्तः । शयितः । शासितः । निघ्नः । स्निग्धः ।

त्वा इत्यादयः । वर्तमाने भूते भावी च क्रियाचर्याऽस्त्येव । विवक्षा गरीयसीति वचनम् ॥

## उणादयो भूतेऽपि ॥ ६७ ॥

उणादयः प्रत्यया वर्तमाने भूतेऽपि भवन्ति ॥ केचिद् वर्तमाने । करोतीति कारुः । वातीति वायुः ॥ केचिद् भूतेऽपि । वृत्तं तदिति वर्त्म । भसितं तदिति भस्म ॥ प्रकृतिप्रत्ययविगमौ व्युत्पत्तावपि रूढित एव ॥

## भविष्यति गम्यादयः ॥ ६८ ॥

गमीत्येवमादय शब्दा औणादिका भविष्यति काले साधवो भवन्ति । गमादिभ्यो भविष्यत्कालवृत्तिभ्य इन् स्यादित्यर्थः । ग्रामं गमी । ग्राममागामी । भावी ॥ श्वस्तनीविषयेऽपि भवन्ति । श्वो ग्रामं गमी । पदार्थश्वस्तने । श्वो ग्रामं गन्तेति भाष्यम् ॥

## वुण्तुमौ क्रियायां क्रियार्थायाम् ॥ ६९ ॥

क्रियायां क्रियार्थायामुपपदे भविष्यत्यर्थे वर्तमानाद् धातोर्वुण्तुमौ भवतः । पाचको व्रजति । पक्तुं व्रजति । पक्ष्यामीति कृत्वा व्रजतीत्यर्थः ॥ क्रियायामिति किम् ? भिक्षिष्य इत्यस्य जटाः ॥ क्रियार्थायामिति किम् ? धावतस्ते पतिष्यति दण्डः ॥ वुण्ग्रहणं ण्वुलादिनिवृत्त्यर्थम् । तुम्भावमेवाभिधत्ते ॥

## भाववाचिनश्च ॥ ७० ॥

क्रियायां क्रियार्थायामुपपदे भविष्यत्यर्थे वर्तमाना-

द्धातोर्भाववाचिनश्च प्रत्यया भवन्ति । पाकाय व्रजति । पक्तये व्रजति । पचनाय व्रजति ॥ तुमि नित्यप्राप्ते वचनमासरूपविधिरत्र प्रकरणे नास्तीति ॥

## कर्मणि चाण् ॥ ७१ ॥

क्रियायां क्रियार्थायां कर्मणि चोपपदे भविष्यदर्थे वर्त्तमानाद्धातोरण् भवति । काण्डलावो व्रजति । गोदायो व्रजति । गोसन्दायो व्रजति । सामगायो व्रजति । सुरापायो व्रजति ॥

## शन्त्रानशौ स्यसंहितौ शेषे च ॥ ७२ ॥

शन्तृङ्सहचरित आन इह गृह्यते ॥ क्रियायां क्रियार्थायां कर्मणि चोपपदे शेषे च भविष्यदर्थे वर्त्तमानाद्धातोः शन्तृङानशौ स्येन संहितौ भवतः । करिष्यन् व्रजति । करिष्यमाणो व्रजति ॥ कट करिष्यन् व्रजति । कट करिष्यमाणो व्रजति ॥ शेषे च । करिष्यन् । करिष्यमाणः । हे करिष्यन् । हे करिष्यमाणः ॥

॥ इति दौर्गसिंह्यां वृत्तौ कृत्सु चतुर्थः पादः समाप्तः ॥



## पदरुजविशस्पृशो घञ् ॥ १ ॥

एषां घञ् भवति । घानुबन्धयोः कगौ [ का० ४. ६. ५६ ] इति कत्वगत्वार्थः । ञनुबन्ध इञ्वद्भावार्थः ।

पच्यते । पक्ष्यति । अपाक्षि । पेचे वा । पाकः ॥ एवं रोगः । वेगः । सर्गो नाम यस्याधिष्य । शोकः ॥

## सृ स्थिरव्याध्योः ॥ २ ॥

सर्तेः स्थिरे व्याधौ च कर्तरि घञ् भवति । सरति कालान्तरमिति सारः । स्थिरोऽर्थः ॥ अतीसारो व्याधिः । इस्वस्य दीर्घता ॥ सरत्यनेनेति सारो बलम् । विसरत्यनेनेति विसारी मत्स्यः । संज्ञाशब्दात् करण एव सिद्धः ॥ यद्येवं पचतोऽनेनेति पाको भविष्यति । सत्यम् । प्रपञ्चार्थं पदिग्रहणम् ॥

## भावे ॥ ३ ॥

सर्वस्माद् धातोर्भावे घञ् भवति । पाकः । पाकौ । पाकाः ॥ भवत्यर्थः क्रियासामान्य इह हि सिद्धताप्यः सत्त्वभूत इति द्विवचनबहुवचने स्तः ॥

## अकर्तरि च कारके संज्ञायाम् ॥ ४ ॥

कर्तृवर्जिते कारके भावे च संज्ञायां गम्यमानायां घञ् भवति । प्रकुर्वन्ति तमिति प्राकारः । प्रास्यत इति प्रासः । आहरन्ति तमित्याहारः । प्रमोदन्त्यस्मिन् नयनमनांसीति प्रामादः । दीव्यन्ति एभिरिति दायाः । जायन्तेऽस्मिन्निति जारः ॥ अकर्तरीति किम् ? मदयतीति मदः सोमः ॥ असंज्ञायामपि । दायो दत्तः । लाभो लब्धः ॥ कारकग्रहणं प्रसज्य नञ्समासज्ञापनार्थम् ॥

## सर्वस्मात् परिमाणे ॥ ५ ॥

परिमेयत्वात् परिमाणम् । परिमाणविषये वर्त्तमाना सर्वस्माद्धातोर्घञ् भवति । कर्त्तृवर्जिते कारके भावे च संज्ञायां गम्यमानायाम् । संख्याप्रश्नादिर्वा परिमाणम् । एकस्तण्डुलनिश्चायः । द्वौ शूर्पनिष्पावौ । प्रस्थनिश्चयः । द्राणावचायः । अलो बाधकत्वात् सर्वस्माद्विध्यति । सर्वस्मादिति ज्ञापयति । धात्वाश्रितः प्रत्ययो घञा बाध्यते न त्वर्थाश्रित इति । तेन । एका तिलोच्छितिः । द्वे स्तुतौ तैलस्य । त्रिरव ॥ एकं स्तवनम । द्वे प्रस्थाने । युट् सिद्धः ॥ कथम एको नियमः । अप्यधिकारात् ॥

## इङाभ्यां च ॥ ६ ॥

इङ आकारान्ताच्च धातोर्घञ् भवति । अचोऽपवादः । भावेऽकर्तरि च कारके संज्ञायामित्यविशेषेऽधिकारो द्रष्टव्यः ॥ अध्ययनम् अधीयते वा । अध्यायः ॥ उपेत्याधीयते यस्मात् । उपाध्यायः । उपाध्याया । उपाध्यायी । इङो घञ् नदादौ विभाषयेति ॥ आकारान्ताच्च । दायः । धायः ॥

## उपसर्गे रुवः ॥ ७ ॥

उपसर्गे उपपदे रौतेर्घञ् भवति । संरावः । उपरावः ॥ उपसर्ग इति किम् ? रवः ॥ सांराविणमित्यत्र इनुण् बाधकः ॥

## समि द्रुवः ॥ ८ ॥

सम्युपपदे द्रुनातेर्घञ् भवति । सन्द्रावः ॥ समीति किम् ? द्रवः ॥

## युद्रुवोरुदि च ॥ ९ ॥

उद्युपपदे समि च युद्रुभ्यां घञ् भवति। उद्यावः। उद्द्रावः॥ संयावः। सन्द्राव एवेति केचित्॥ उदि चेति किम्? यवः। द्रवः॥ अध्यधिकाराद् यावः। द्रावः॥ दाव इति च स्यात्॥ तथा शारो वायुः। शारः शरलः। नीशारः प्रावरणम्। ह्रस्वस्य दीर्घता॥

## श्रिणीभूभ्योऽनुपसर्गे ॥ १० ॥

एभ्योऽनुपसर्गे घञ् भवति। श्रायः। नायः। भावः॥ अनुपसर्ग इति किम्? प्रश्रयः। प्रणयः। प्रभवः। कथं प्रकृष्टो भावः। प्रभावः। अनुगतो भावः। अनुभावः। विगतो भावः। विभावः॥ अध्यधिकारात्। नय इति च॥

## क्षुश्रुभ्यां वौ ॥ ११ ॥

वावुपपदे आभ्यां घञ् भवति। विक्षावः। विश्रावः॥

## स्तृञः प्रथनेऽशब्दे ॥ १२ ॥

प्रथनं विस्तीर्णता। स्तृणातेर्वावुपपदे घञ् भवति प्रथनेऽभिधेये। तच्चेत् प्रथनं शब्दविषये न स्यात्। पटस्य विस्तारः॥ अशब्द इति किम्? वाक्यस्य विस्तरः॥ प्रथन इति किम्? तृणस्य विस्तरः॥

## प्रे चायज्ञे ॥ १३ ॥

प्रे चोपपदे स्तृणातेर्घञ् भवति यज्ञादन्यत्र। प्रस्तारः॥ यज्ञे तु बर्हिःप्रस्तरः॥

## छन्दोनाम्नि च ॥ १४ ॥

छन्दसां संज्ञाविषये स्तृणातेर्घञ् भवति । प्रस्तारपङ्क्तिः । विष्टारपङ्क्तिः । आस्तारपङ्क्तिः ॥

## प्रे द्रुस्तुस्रुवः ॥ १५ ॥

प्र उपपदे एभ्यो घञ् भवति । प्रद्रावः । प्रस्तावः । प्रस्रावः ॥ कथं स्रावः । अप्यधिकारात् ॥

## नियोऽवोदोः ॥ १६ ॥

अवोदोरुपपदयोर्नियो घञ् भवति । अवनायः । उन्नायः । कथम् उन्नतो नयः । उन्नयः । अप्यधिकाराद् वा ॥

## निरभ्योः पूल्वोः ॥ १७ ॥

निरभ्योरुपपदयोर्यथासंख्यं पूल्वोर्घञ् भवति । निष्पावः । अभिलावः ॥

## यज्ञे समि स्तुवः ॥ १८ ॥

समि उपपदे स्तौतेर्घञ् भवति यज्ञविषये । समेत्य स्तुवन्ति यस्मिन् । संस्तावो देशः । संस्तवोऽन्यः ॥

## उन्न्योर्गिरः ॥ १९ ॥

उन्न्योरुपपदयोर्गिरतेर्घञ् भवति । उद्गारः । निगारः । उन्न्योरिति किम् ? गरः ॥

## किरो धान्ये ॥ २० ॥

उन्न्योरुपपदयोर्धान्यविषये वर्त्तमानात् किरतेर्घञ्

भवति । उत्कारो धान्यस्य । निकारो धान्यस्य ॥ धान्य इति किम् ? पुष्पोत्करः । पुष्पनिकरः ॥ किरतेरिति किम् ? कॄञ् हिंसायाम् । धान्यनिकरः ॥

नौ ष्टञः ॥ २१ ॥

नावुपपदे ष्टञो धातोर्घञ् भवति धान्येऽभिधेये । नीवारा व्रीहय । इकस्य दीर्घता ॥

उदि श्रिपुवोः ॥ २२ ॥

उदुपपदे श्रिपूञ्भ्यां घञ् भवति । उच्छ्रायः । उत्पावः ॥ कथम् उच्छ्रयः । अप्यधिकारात् ॥

ग्रहश्च ॥ २३ ॥

उदुपपदे ग्रहेश्च घञ् भवति । उद्ग्राहः । भाषायाम पीति मतम् ॥

अवन्योराक्रोशे ॥ २४ ॥

अवन्योरुपपदयोराक्रोशे गम्यमाने ग्रहेर्घञ् भवति अवग्राहस्ते वृषल । निग्राहस्ते वृषल ॥ आक्रोश इति किम् ? अवग्रहः पदस्य । निग्रहश्चौरस्य ।

प्रे लिप्सायाम् ॥ २५ ॥

प्र उपपदे लिप्सायां ग्रहेर्घञ् भवति । पात्रप्राहं चरति भिक्षुः ॥ लिप्सायामिति किम् । प्रग्रहः ।

यमि सुवौ ॥ २६ ॥

सम्युपपदे ग्रहेर्घञ् भवति मुष्ट्यर्थे । संग्राहो मल्लस्य ॥ मुष्टाविति किम् ? संग्रहः ॥ अङ्गुलीनां बन्धनविशेषो मुष्टिरिह गृह्यते । एवं शाकसंग्राहः । सर्वस्मात्परिमाणे [का० ४. ५. ५.] इति सिद्धम् ॥

परौ यज्ञे ॥ २७ ॥

पराबुपपदे यज्ञविषये ग्रहेर्घञ् भवति । उत्तरपरिग्राहः ॥ यज्ञ इति किम् ? परिग्रहः ॥

वावे वर्षप्रतिबन्धे ॥ २८ ॥

अव उपपदे ग्रहेर्घञ् भवति वा वर्षप्रतिबन्धेऽर्थे । अवग्राहो वर्षस्य । अवग्रहो वा ॥

प्रे रश्मौ ॥ २९ ॥

प्र उपपदे ग्रहेर्घञ् भवति वा रश्म्यर्थे । प्रग्राहः । प्रग्रहो वा ॥ रश्मिरिह रज्जुरुच्यते ॥

वणिजां च ॥ ३० ॥

वणिजां च सम्बन्धिनि तुलासूत्रेऽर्थे प्र उपपदे ग्रहेर्घञ् भवति वा । तुलाप्रग्राहेण चरति । तुलाप्रग्रहेण वा चरति वणिक् ॥

वृणोतेराच्छादने ॥ ३१ ॥

प्र उपपदे वृणोतेराच्छादनेऽर्थे घञ् भवति वा । प्रावारः । प्रावरः । आङ्पूर्वोऽयम् ॥

आङि रुप्लुवोः ॥ ३२ ॥

। आङ्युपपदे रौतिः प्लवतेश्च घञ् भवति वा । आ- रावः । आरवः । आप्लावः । आप्लवः ॥

## परौ भुवोऽवज्ञाने ॥ २३ ॥

परावुपपदे भवतेर्घञ् भवति वा । अवज्ञानेऽर्थे । परिभावः । परिभवः ॥ अवज्ञान इति किम् ? स र्वतो भवनं परिभवः ॥

## चेर्हस्तादाने ॥ २४ ॥

हस्तादानविषये चिनोतेर्घञ् भवति । पुष्पप्रचायः ॥ हस्तादानग्रहणं प्रत्यासत्त्युपलक्षणम् । तेन हस्ताग्रे फल प्रचयं करोति ॥ अभ्यधिकारात् स्तेये न स्यात् । हस्तेन फलप्रचयं करोति चौरः ॥

## शरीरनिवासयोः कश्चादेः ॥ २५ ॥

चिनोतेः शरीरनिवासे चार्थे घञ् भवति । आदेश्च को भवति । चीयतेऽसौ । कायः शरीरम् । निचीयतेऽस्मि- न्निति निकायो निवासः ॥ अभ्यधिकारान्निराशयोऽ- र्थि । आचीयतेऽसौ । आशावयिति । गोमयनिकायः ॥ अथ काठनिचयः । बहुत्वमात्रविवक्षयेति ॥

## सङ्घे चानौत्तराधर्ये ॥ २६ ॥

प्राणिनां समूहः सङ्घ उच्यते ॥ अनौत्तराधर्ये सङ्घे चार्थे चिनोतेर्घञ् भवति । कश्चादेः । वैयाकरणनिकायः ॥ अनौत्तराधर्य्य इति किम् ? शूकरनिचयः ॥

## परिन्योर्नीणोर्द्यूताभ्रेषयोः ॥ ३७ ॥

परिन्योरुपपदयोर्यथासंख्यं नी इण्भ्यां घञ् भवति द्यूतविषयेऽभ्रेषे चार्थे । अभ्रेषोऽचलनम् । यथाप्राप्तकरणमित्यर्थः । परिणायेन शारीन् हन्ति । सर्वतो नयनेनेत्यर्थः । एषोऽत्र न्यायः ॥

## व्युपयोः शेतेः पर्याये ॥ ३८ ॥

व्युपयोरुपपदयोः पर्यायविषये वर्त्तमानाच्छेतेर्घञ् भवति । तव राजविशायः । तव राजोपशायः । तव राजनि शयितुं पर्याय इत्यर्थः ॥ अस्मादेव ज्ञापकात् परिपूर्वादिणः क्रमेऽर्थे घञ् भवति ॥

## अभिविधौ भाव इनुण् ॥ ३९ ॥

अभिविधौ गम्यमाने धातोरिनुण् भवति । साङ्कोटिनं साराविणं वर्त्तते । क्रिययाभिव्याप्तिः । इनुणन्तात् स्वार्थेऽण् । युडपि दृश्यते । सङ्कूटनं वर्त्तते ॥

## कर्मव्यतीहारे णच् स्त्रियाम् ॥ ४० ॥

क्रियाविनिमये गम्यमाने धातोर्णच् भवति स्त्रियां भावे । व्यावक्रोशी । व्यावभाषी । णजन्तात् स्वार्थेऽण् ॥ क्वचिदधिकारात् तत्र क्रियाव्यतीहारेऽपि वृद्धिरागमः ॥ कथं व्यतीक्षा । व्यवक्रुष्टिरिति । अस्याधिकाराद्वासरूपता ॥

## स्वरवृदृगमिग्रहाम् अल् ॥ ४१ ॥

स्वरान्ताद् वृदृगमिग्रहिभ्यश्चाल् भवति । चयो॰

वादः । जयः । मायः । भयः । क्षयः ॥ दृङ् वृङ् वा । वरः ॥ दृङ् । दरः ॥ गमः । ग्रहः ॥ वृदृङोरिति नियमादन्येभ्य ऋकारान्तेभ्यो घञेव । कारः । हारः ॥ दीर्घादप्येव । कॄ कारः । गॄ गारः ॥ भीतिर्भयमित्यलेव ॥ न युवादयोऽपीति । वगः । रण इति रूढित्वादल् ॥

## उपसर्गेऽदेः ॥ ४२ ॥

उपसर्गे उपपदेऽदेरल् भवति । प्रघसः । विघसः ॥ घसॢ्लोर्घस्लृः ॥ उपसर्ग इति किम् ? घासः ॥

## नौ ण च ॥ ४३ ॥

नावुपपदेऽदेरल् भवति ण च । निघसः । न्यादः ॥

## मदेः प्रसमोर्हर्षे ॥ ४४ ॥

प्रसमोरुपपदयोर्मदेरल् भवति हर्षेऽर्थे । प्रमदः कन्यानाम् । सम्मदः कोकिलानाम् ॥

## व्यधजपोश्चानुपसर्गे ॥ ४५ ॥

अनुपसर्गे व्यधिजपिभ्यां मदेश्चाल् भवति । व्यधः । जपः । मदः ॥ अनुपसर्ग इति किम् ? आव्याधः । उपजापः । प्रमादः ॥

## स्वनहसोर्वा ॥ ४६ ॥

अनुपसर्गे आभ्यामल् भवति वा । स्वनः । स्वानः । हसः । हासः ॥ अनुपसर्ग इति किम् ? प्रस्वानः । प्रहासः ॥

## यमः सम्नुपविषु च ॥ ४७ ॥

अनुपसर्गे सम्नुपविषु च यमेरल् भवति वा । यमः । यामः । संयमः । संयामः । नियमः । नियामः । उपयमः । उपयामः । वियमः । वियामः ॥

## नौ गदनदपठस्वनाम् ॥ ४८ ॥

नावुपपदे एभ्योऽल् भवति वा । निगदः । निगादः । निनदः । निनादः । निपठः । निपाठः । निस्वनः । निस्वानः ॥ स्वनहसोर्वा [का० ४ ५, ४६] इति वचनादनुपसर्ग इह न वर्त्तते ॥

## क्वणो वीणायां च ॥ ४९ ॥

नावुपपदेऽनुपसर्गे च वीणाविषये क्वणतेरल् भवति वा । क्वणः । क्वाणः । निक्वणः । निक्वाणः ॥ चकारे सति वीणाग्रहणं सोपसर्गार्थम् प्रक्वणो वीणायाः । प्रक्वाणः ॥

## पणः परिमाणे नित्यम् ॥ ५० ॥

पणतेरल् भवति नित्यं परिमाणेऽर्थे । पणः । शाकादीनामपि परिमिता मुष्टिः पण उच्यते ॥ परिमाण इति किम् ? दास्याः पाणः ॥

## समुदोरजः पशुषु ॥ ५१ ॥

समुदोरुपपदयोः पशुषु वर्त्तमानादजेरल् भवति । समजः पशूनाम् । समूह इत्यर्थः ॥ उदजः पशूनाम् । प्रेर

णमित्यर्थः ॥ पशुष्विति किम्? समाजश्छात्राणाम्। उदाजः खगानाम् ॥

ग्लहोऽक्षेषु ॥ ५२ ॥

अक्षविषये वर्त्तमानाद् ग्रहेरल् लत्वं निपात्यते। अक्षाणां ग्लहः। ग्लहिः प्रकृत्यन्तरमित्येके। तदा प्रग्लाह इति घञि प्रत्युदाहरणम् ॥

सर्त्तेः प्रजने ॥ ५३ ॥

प्रजने गर्भग्रहणे वर्त्तमानात् सर्त्तेरल् भवति। गवामुपसरः। उपसारोऽन्यः ॥

ह्वो हुश्चाभ्युपनिविषु च ॥ ५४ ॥

एषूपपदेषु ह्वयतेरल् भवति हुरादेशश्च। अभिहवः। उपहवः। निहवः। विहवः ॥

आङि युद्धे ॥ ५५ ॥

आङ्युपपदे ह्वयतेरल् भवति युद्धेऽर्थे हुरादेशश्च। आहूयन्ते यस्मिन् योधाः स आहवः। कथम् आहूयन्ते पानाय गावो यस्मिन् स आहावो जलाधारः। अन्यत्रापीति घञि च हुरादेशः ॥

भावेऽनुपसर्गस्य ॥ ५६ ॥

अनुपसर्गस्य ह्वयतेरल् भवति भावे हुरादेशश्च। हवः। अनुपसर्गस्येति किम्? प्रह्वायः ॥

हन्तेर्वधिश्च ॥ ५७ ॥

अनुपसर्गस्य हन्तेरल् भवति भावे वधिरादेशश्च । हननं वधः ॥ अप्यधिकाराच्च घातः ॥ अनुपसर्गस्येति किम् ? विघातः ॥

मूर्तौ घनिश्च ॥ ५८ ॥

मूर्तिः काठिन्यम् । मूर्तावर्थे हन्तेरल् भवति घनिरादेशश्च । दधि घनः । घनं दधीत्यभेदात् ॥

प्राद् गृहैकदेशे घञ् च ॥ ५९ ॥

प्राद् हन्तेरल् भवति घञ् च घनिरादेशश्च गृहैकदेशेऽर्थे । प्रघणः । प्रघाणः । गृहस्य द्विभाकृतस्य द्वारप्रकोष्ठाभ्यां यो बहिर्भूतः । तत्रापीति वचनात्फलम् ॥

अन्तर्घनोद्घनौ देशात्याधानयोः ॥ ६० ॥

एतावलन्तौ निपात्येते देशात्याधानयोर्यथासंख्यम् । अन्तर्हन्यते यस्मिन् सोऽन्तर्घनो देशः । उद्धन्यते यस्मिन् स उद्घनः । यस्योपरि काष्ठानि हन्यन्ते तदत्याधानम् ॥

करणेऽयोविद्रुषु ॥ ६१ ॥

एषूपपदेषु हन्तेरल् भवति करणे घनिरादेशश्च । अयो हन्यतेऽनेनेति । अयोघनः । विहन्यतेऽनेनेति विघनः । एवं द्रुघणः । संज्ञायां णत्वम् ॥

परौ डः ॥ ६२ ॥

परावुपपदे हन्तेर्डो भवति करणे घनिरादेशश्च । परिहन्यतेऽनेनेति परिघः ॥ लत्वे पलिघः ॥

ट्वनुबन्धादथुः ॥ ६७ ॥

ट्वनुबन्धाद्धातोरथुर्भवति भाव एव। टुवेपृ। वेपथुः॥ टुओश्वि। श्वयथुः॥ टुदु। दवथुः॥ टुवम। वमथुः॥ वेपद्व इति नामरूपत्वात्॥

ड्वनुबन्धात् त्रिमक् तेन निर्वृत्ते ॥ ६८ ॥

ड्वनुबन्धाद्धातोस्त्रिमग् भवति। तेन धात्वर्थेन निर्वृत्तेऽर्थे॥ डुपचष्। पाकेन निर्वृत्तम्। पक्त्रिमम्॥ डुकृञ्। करणेन निर्वृत्तम्। कृत्रिमम्॥ निर्वृत्तमिति कर्तरि कर्मणि वा। तेनेति यथायोगं तृतीया॥

याच्विविच्छिप्रच्छियजिस्वपिरक्षियतां नङ् ॥ ६९ ॥

एभ्यो नङ् भवति। याच्ञा। विश्नः। प्रश्नः। यज्ञः। स्वप्नः। रक्ष्णः। यत्नः॥

उपसर्गे दः किः ॥ ७० ॥

उपसर्गे उपपदे दासंज्ञकात् किर्भवति। आधिः। निधिः॥ अप्यधिकाराद् अन्तर्धिः॥

कर्मण्यधिकरणे च ॥ ७१ ॥

कर्मण्युपपदे दासंज्ञकादधिकरणे च किर्भवति। वालधिः। जलधिः। उपसर्गैर्व्यवधानेऽपि। पयोनिधिः॥

स्त्रियां क्तिः ॥ ७२ ॥

स्त्रीलिङ्गे भावेऽकर्तरि च कारके संज्ञायां क्तिर्भवति।

क्षतिः । वृद्धि । इज्यतेऽनयेति । इष्टिः । एव स्तुतिः । स्तुतिः ।
करणेऽपि ॥

सातिहेतियूतिजूतयश्च ॥ ७३ ॥

एते क्तिप्रत्यया निपात्यन्ते स्त्रियाम् । सिनोतेः सनो-
तेर्वा सातिः । हिनोतेर्हेतिः । यौतेर्यूतिः । जवतेर्जूतिः ॥

भावे पचिगापास्थाभ्यः ॥ ७४ ॥

एभ्यो भावे स्त्रिया क्तिर्भवति । पचेः षानुबन्धत्वादङि
प्राप्ते । पक्तिः ॥ तथा । आतश्चोपसर्गे [का० ४ ५ ८४] ।
सङ्गीतिः । प्रपीतिः । सस्थितिः ॥ अप्यधिकारात् संस्था ।
व्यवस्था ॥

व्रज्यजोः क्यप् ॥ ७५ ॥

भावे स्त्रियामाभ्यां क्यप् भवति । व्रज्या । इज्या । इष्टि-
रित्यपि भावे ॥

समजासनिसदनिपतिशीङ्सुविद्यटिचरि-
मनिभृञिणा संज्ञायाम् ॥ ७६ ॥

एभ्यः संज्ञायां भावे क्यप् भवति स्त्रियाम् । समज्या ।
आस्या । निषीदन्त्यस्यामिति निषद्या । निपतन्त्यस्यामिति
निपत्या । शेरतेऽस्यामिति शय्या । अधिकरणेऽपि । सतन
सुत्या । विद्या । करणेऽपि । अटेर्येकीयितान्तादेवाभिधा
नाद् अटाट्या । परिपूर्वादेव चरेः परिचर्या । मन्या । भृत्या ।
इत्या ॥ अप्यधिकारात् । आसुतिः । भृतिः । समितिः ॥

भाव इति किम्? भार्या॥ संज्ञायामिति किम्? संवित्तिः॥

## कृञः श च॥ ७७॥

कृञः शो भवति क्ति क्यप् च। क्रियत इति क्रिया। भावे च। कृतिः। कृत्या॥

## सर्त्तेर्यश्च॥ ७८॥

अभिधानात् परिपूर्वात् सर्तेर्यो भवति। परिसर्या॥ चकाराज्जागर्तेश्च। जागर्या॥

## इच्छा॥ ७९॥

इषेरिच्छेति निपात्यते। इच्छा॥

## शंसिप्रत्ययादः॥ ८०॥

गन्तुर्निष्ठायामनिडिति वचनम्। शंसेः प्रत्ययान्ताच्च धातोरप्रत्ययो भवति स्त्रियाम्। प्रशंसा। पिपतिषा॥ इच्छार्थे यिन्। इगदा। अटाटा। कण्डूया। कण्डूतिरपी-ष्यते॥

## गुरोश्च निष्ठासेटः॥ ८१॥

गुरुमतो धातोर्निष्ठायां सेटोऽप्रत्ययो भवति। ईहा। ईक्षा। जागरा॥ गुरोरिति किम्? निष्ठीतिः॥ निष्ठा सेट इति किम्? नीतिः। राद्धिः॥

## षानुबन्धभिदादिभ्यस्त्वङ्॥ ८२॥

षानुबन्धेभ्यो भिदादिभ्यस्त्वङ् भवति। जृष्। जरा॥ डुपचष्। पचा॥ चिप। चिपा॥ भिदादयः षानुबन्धाः।

घटा । व्यथा ॥ क्षप क्षपायामिति निर्देशात् क्षपा । उपलब्धिरिति ज्ञापकात् । क्षान्तिरित्यपि स्यात् ॥ भिदादिभ्यो नाम गणनिर्दिष्टेभ्य इति भिदा विदारणे ॥ भित्तिरन्या ॥ छिदा द्विधाकरणे । छित्तिरन्या ॥ गुहा पर्वतैकदेशे । गूढिरन्या ॥ आङ्पूर्वाद् दृतेः । आदरा यत्नो । आदृतिरन्या ॥ धृङ् अवस्थाने । धारा । धृतिरन्या ॥ खिद । खिदा ॥ क्षिप । क्षिपा ॥ गुध । गोधा ॥ क्षर । क्षारा ॥ कृञ् । कारा ॥ लिख । लेखा । रत्वं चादेः । रेखा ॥ अनलुदपीडमृगयतिभ्य इनन्तेभ्यो यो प्रमि वचनम् । ऊर्जा । चूडा । दीर्घत्वं ऋत्वं च स्यात् । पीडा । मृगया ॥ वम्रा । रुजा । मृजा । सुपहद्रादिकमर्थविशेषाय गणपाठसामर्थ्यात् ॥

**भीषिचिन्तिपूजिकथिकुम्बिचर्चिस्पृहितोलिदोलिभ्यश्च ॥ ८३ ॥**

एभ्य इनन्तेभ्योऽङ् भवति । भियो हेतुभये षान्तः । भीषणा भीषा ॥ चिति स्मृत्याम् । चिन्ता । पूज पूजायाम् । पूजा ॥ कथ वाक्यप्रबन्धे । कथा ॥ कुबि आच्छादने । कुम्बा । चर्च अध्ययने । चर्चा ॥ स्पृह ईप्सायाम् । स्पृहा ॥ तुल उन्मादने । तोला ॥ दुल उत्क्षेपे । दोला ॥ कथं तुला । तुलया सम्मित इति निर्देशात् ॥

**आतश्चोपसर्गे ॥ ८४ ॥**

उपसर्गे उपपदे आकारान्ताद्धातोरङ् भवति । संस्था । उपदा । उपधा ॥ अन्तःपूर्वाच्च वक्तव्यम् । अन्तर्धा ॥ कथं

श्रद्धा । आ श्रद्धा [का० २. १. १०] इति निर्देशात् ॥ अत्य धिकारात् प्रमितिः ॥

## ईषिश्रन्थ्यासिवन्दिविदिकारितान्तेभ्यो युः ॥ ८५ ॥

एभ्यो युर्भवति ॥ ईष गतिहिंसादानेषु । ईषणा ॥ श्रन्थना । उपासना । वन्दना ॥ आसिसहचरितो वेत्तिः । वेदना ॥ कारणा ॥ चुरादौ घट्ट चलने । घट्टना । भीवादिकस्य तु अनभिधानात् ॥

## कीर्त्तीषोः क्तिश्च ॥ ८६ ॥

कीर्त्तयतेरिषेश्च क्तियुश्च भवति । कीर्त्तिः । सङ्कीर्त्तना ॥ इष गतौ । इष आभीक्ष्ण्ये वा । अन्विष्टि । परीष्टिः । अन्वेषणा । पर्य्येषणा ॥ इषु इच्छायामिति सानुबन्धः । इष्टिः ॥

## रोगाख्यायां वुञ् ॥ ८७ ॥

व्याधेराख्यायां धातोर्वुञ् भवति । प्रवाहिका । प्रच्छर्दिका । विचर्चिका ॥ अत्यधिकारात् । शिरोऽर्दनम् । शिरोऽर्त्तिः ॥

## संज्ञायां च ॥ ८८ ॥

संज्ञायां च विषये धातोर्वुञ् भवति । उद्यानपुष्पाणि भज्यन्ते यस्यां क्रीडायां सा उद्यानपुष्पभञ्जिका क्रीडा । क्रीडायां नित्यसमास एव । पुष्पभञ्जिका क्रीडेत्येवार्थवती संज्ञा । एवं वारणपुष्पप्रचायिका ॥

पर्यायार्हर्णोत्पत्तिषु च ॥ ८९ ॥

एषु वर्तमानाद्धातोर्वुञ् भवति । भवतः शायिका । अर्हति भवानिक्षुभक्षिकाम् । ऋणे । पायसभोजिकां मे धारयसि । चकारादुत्पत्तौ च । इक्षुभक्षिका म उदपादि न च भवति । चिकीर्षा जिहीर्षा म उत्पद्यते । भावमात्रे च दृश्यते । का नाम शायिका । अन्येष्वधीयमानेषु । का नामासिका । अन्येषु गच्छत्स्विति ॥

प्रश्नाख्यानयोरिञ् च वा ॥ ९० ॥

प्रश्न आख्याने च गम्यमाने धातोरिञ् वुञ् च भवति । वाग्रहणाद् यथाप्राप्तम् । कां त्वं कारिमकार्षीः कां कारिकां कां कृतिं कां क्रियां कां कृत्याम् । सर्वां कारिमकार्षं सर्वां कारिकां सर्वां कृतिं सर्वां क्रियां सर्वां कृत्याम् ।

नञ्यन्याक्रोशे ॥ ९१ ॥

नञ्युपपदे आक्रोशे गम्यमाने धातोरनिर्भवति । अकरणिस्ते वृषल भूयात् । एवम् अजीवनिः । नञीति किम् ? मृतिस्ते वृषल भूयात् । सम्पदादिभ्यः क्विब् भावे कारके चान्यत्रापीति बहुलत्वात् । स एव सम्पत् । प्रतिपत् । विपत् । सम्पत्तिरित्यपि स्यात् । सम्पदादिराकृतिगणोऽयम् ॥ इकिश्तिपौ धातोः स्वरूपेऽर्थे ज्ञापकादेव सिद्धौ ॥ वर्णात् कारः । अकार इत्यादिषु कारशब्देन वा समासः । यथा । एवंकारः । धौंकारः । चीत्कारः । मीत्कारः । स्मीत्कारः । ससुत्कारः । वषट्कारः । स्वाहाकार इत्यादि । रादिफः । रेफ इत्यौणादिकः ॥

## कृत्ययुटोऽन्यत्रापि च ॥ ९२ ॥

कृत्या युट् च यन्निदर्थं विहितास्ततोऽन्यत्रापि च भवन्ति बहुलम् । स्नानीयं चूर्णम् । दानीयो ब्राह्मणः । समावर्तनीयो गुरुः । प्रवचनीय उपाध्यायः । करणादिषु भवन्त्यमी । भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्याः कर्त्तर्य्यपि भवन्ति । आङ्पूर्वयोः प्लुङ्पत्योर्णिचि । राजभिर्भुज्यन्ते । राजभोजनाः शालयः । राजाच्छादनानि वासांसि । अवसेचनम् । अवस्रवणम् । दानम् । एते कर्मणि । प्रस्कन्दनम् । प्रपतनमित्यपादाने ॥ अपिशब्दोऽत्र बहुलार्थ इति ॥ ष्ठिवुसिव्वोर्दीर्घश्च वा । निष्ठीवनं निष्ठेवनम् । निषीवणं निषेवणम् ॥ करोतीति कारणम् ॥

## नपुंसके भावे क्तः ॥ ९३ ॥

नपुंसके भावेऽर्थे क्तो भवति । शयितम् । स्थितम् । भवता कृतम् । प्राप्तमनित्यविषयत्वात् कर्मत्वात् । युटा बाधितो नपुंसके क्तो यथा स्यादिति वचनम् । वासरूपत्वाच्च घञादयोऽपि स्युरिति ।

## युट् च ॥ ९४ ॥

नपुंसके भावे युट् च भवति । स्थानम् । गमनम् ॥

## करणाधिकरणयोश्च ॥ ९५ ॥

करणेऽधिकरणे च युट् भवति नपुंसके । इध्मव्रश्चनम् । पलाशशातनम् ॥ अधिकरणे च । गोदोहनी घटी । सक्तुधानी स्थाली ॥

## पुंसि संज्ञायां घः ॥ ८६ ॥

करणाधिकरणयोः पुंसि संज्ञायां घो भवति स्वरान्तात् । उरश्छाद्यतेऽनेनेति उरश्छदः ॥ कुर्वन्त्यनेनेति करः । श्रृणन्त्यनेनेति शरः ॥ अधिकरणेऽपि । लीयन्तेऽस्मिन्निति लयः । निलीयन्तेऽस्मिन्निति निलयः । विषिण्वन्त्यस्मिन्निति विषयः ॥

## गोचरसञ्चरवहव्रजव्यजक्रमापणनिगमाश्च ॥ ८७ ॥

एते घप्रत्ययान्ता निपात्यन्ते । गावश्चरन्त्यस्मिन्निति गोचरः । प्रत्यासत्तिरुपलक्ष्यते ॥ एवं सञ्चरः । वहन्त्यनेनेति वहो वृषभस्य । व्रजन्त्यस्मिन्निति व्रजः । विपूर्वोऽज । व्यजन्त्यनेनेति व्यजः । क्रामन्त्यनेनेति क्रमः ॥ आपणायन्तेऽनेनेति आपणः ॥ निगच्छन्त्यनेनेति निगमः ॥ चकारात् । भजन्त्यस्मिन्निति भगः । निकषन्त्यनेनेति निकषः ॥

## अवे स्तॄतोर्घञ् ॥ ८८ ॥

अव उपपदे तॄस्तृभ्यां घञ् भवति । अपवारः ॥ अवतरन्त्यनेनेति अस्मिन्निति वा अवतारः ॥ अवस्तृणन्त्यनेनेति अस्मिन्निति वा अवस्तारः ॥

## व्यञ्जनाच्च ॥ ८९ ॥

व्यञ्जनान्ताच्च धातोः करणाधिकरणयोः घञ् भवति । लिखन्त्यनेनेति लेखः । विदन्त्यनेनेति वेदः ॥ अपमृजन्त्यनेनेति अपा-

भार्यः । ह्रस्वस्य दीर्घता ॥ आचरन्त्यनेनेति । आचारः ॥ एवम् आभासः ॥ चकारात् अध्यायः । न्यायः । उद्यावः । संहारः । आधारः । आधाय इति च ॥

**उदङ्कोऽनुदके ॥ १०० ॥**

उदपूर्वस्याञ्चेरुदङ्क इति निपात्यतेऽनुदकविषये । ऊर्ध्वमञ्च्यतेऽनेनेति । उदङ्कः । घृतोदङ्कः ॥ अनुदक इति किम् ? उदकोदञ्चनः । घे त्वविशेषाद् युट् ॥

**जालमानायः ॥ १०१ ॥**

आनाय इति निपात्यते जालं चेत् । आनीयन्तेऽनेनेति आनायो मत्स्यानाम् ॥

आखन्यतेऽनेनेति आखनः । घोऽपि दृश्यते । आखानः । घञपि ॥ आखे इत्यन्यतोऽपि चेति डः । करणेऽपि । आखरः । आखनिकः । आखनिकबक इति अर-इकइकबका औणादिका इति ॥

**ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ १०२ ॥**

कृच्छ्रं दुःखं दुसोऽर्थः । अकृच्छ्रं सुखमितरयोरर्थः । एषूपपदेषु कृच्छ्राकृच्छ्रार्थेषु धातोः खल् भवति भावे कर्मणि च ॥ ईषद् अनायासेन क्रियते । ईषत्करः कटो भवता ॥ दुःखेनायासेन क्रियते । दुष्करः ॥ सुखेनानायासेन क्रियते । सुकरः ॥ कृच्छ्राकृच्छ्रार्थेष्विति किम् ? ईषल्लभ्यं धनम् । कृपणात्मनागित्यर्थः ॥

**कर्तृकर्मणोश्च भूकृञोः ॥ १०३ ॥**

ईषदादिषूपपदेषु कृच्छ्राकृच्छ्रार्थेषु कर्तृकर्मणोश्च भूकृञोः खल् भवति। खानुबन्धबलात् कर्तृकर्मणोरेवानन्तर्यम् ॥ ईषदाढ्येन भूयते। ईषदाढ्यम्भवं भवता। दुराढ्यम्भवम्। स्वाढ्यम्भवम्॥ ईषदाढ्यः क्रियते। ईषदाढ्यङ्करो भवान्। दुराढ्यङ्करः। स्वाढ्यङ्करः॥ यदेषदाढ्य एव सन् किञ्चित् क्रियते तदा न भवति। करोतेरिहाभूततद्भावार्थत्वात्॥ यथासङ्ख्याद् ईषदाढ्योऽनुभूयत इत्यत्र न भवति॥

## आद्भ्यो युदरिद्रातेः ॥ १०४ ॥

ईषदादिषु कृच्छ्राकृच्छ्रार्थेषूपपदेष्वाकारान्तेभ्यो युर्भवति। अदरिद्रातेः। ईषत्पानः। सुपानः। दुष्पानः॥ अदरिद्रातेरिति किम्? ईषद्दरिद्रः॥

## शासुयुधिदृशिधृषिमृषां वा ॥ १०५ ॥

ईषदादिषूपपदेषु कृच्छ्राकृच्छ्रार्थेष्वेषां युर्भवति वा। ईषच्छासनः। ईषच्छासः। दुःशासनः। दुःशासः। सुशासनः। सुशासः॥ ईषद्योधनः। ईषद्योधः। दुर्योधनः। दुर्योधः। सुयोधनः। सुयोधः॥ ईषद्दर्शनः। ईषद्दर्शः। दुर्दर्शनः। दुर्दर्शः। सुदर्शनः। सुदर्शः॥ ईषद्धर्षणः। ईषद्धर्षः। दुर्धर्षणः। दुर्धर्षः। सुधर्षणः। सुधर्षः॥ ईषन्मर्षणः। ईषन्मर्षः। दुर्मर्षणः। दुर्मर्षः। सुमर्षणः। सुमर्षः॥ भाषकारात् क्वचिदिकारात्परेण न दारुणपरिपिरिति॥

## इच्छार्थेष्वेककर्तृकेषु तुम् ॥ १०६ ॥

इच्छार्थेषु धातुष्वेककर्तृकेषूपपदेषु धातोस्तुमेव भवति। न तु तुमन्तौ क्रियायां क्रियार्थायामिति [का० ४ ४ ६८]। इच्छति भोक्तुम्। भोक्तुं कामयते। एककर्तृकेष्विति किम्? भिन्नकर्तृकेषु विधिर्मा भूत्। छात्रो भोजनमिच्छति। इच्छन् करोतीत्यपि स्यात्। इच्छार्थेष्विति किम्? पाचको व्रजति।

### कालसमयवेलाशक्त्यर्थेषु च ॥ १०७ ॥

एषूपाधिष्वप्युपपदेषु धातोस्तुमेव भवति। कालो भोक्तुम्। भोक्तुं कालः। समयो भोक्तुम्। वेला भोक्तुम्। समर्थो भोक्तुम्। भोक्तुं शक्तः। प्रभुर्भोक्तुम्। पर्याप्तो भोक्तुम्। अलं भोक्तुम्। अपरेष्वपि तादर्थ्यस्य प्रतीयमानत्वात्। यथा भोक्तुं मनः। गन्तुं कामः। श्रोतुं श्रोत्रम्। द्रष्टुं चक्षुः। योद्धुं धनुः। वक्तुं जडः। वधार्थं तु वचनायत्तमिति। तथा गत्यर्थात्। गच्छति भोक्तुम्। पारयति भोक्तुम्। शक्नोति भोक्तुम्। जानाति भोक्तुम्। ग्लायति भोक्तुम्। घटते भोक्तुम्। आरभते भोक्तुम्। लभते भोक्तुम्। प्रक्रमते भोक्तुम्। उत्सहते भोक्तुम्। अर्हति भोक्तुम्। अस्ति भोक्तुम्। विद्यते भोक्तुम्। क्रियायां क्रियार्थायामिति तुम् सिद्ध एव। तुल्याभिधानाद् द्रष्टव्यः।

### अर्हे तृच् ॥ १०८ ॥

अर्हत्वविशिष्टाद्धातोस्तृच् भवति। कन्यायाः खलु भवान् वोढा। अध्येता खलु भवाञ्छास्त्रस्य। प्रयोगत-

सेति ॥ अर्हे शक्तौ च सप्तमी सा बाधिका यथा स्यादिति वचनम् । भवान् खलु कन्यामुद्वहेत । अर्हः शक्त इत्यर्थः ॥

## शक्ति च कृत्याः ॥ १०९ ॥

शकनं शक् । शक्त्यर्थविशिष्टादर्हत्यर्थविशिष्टाच्च धातोः कृत्या भवन्ति । भवता खलु कन्या वोढव्या । वहनीया । वाह्या । उह्येतेति च ॥

## प्रैष्यातिसर्गप्राप्तकालेषु ॥ ११० ॥

प्रैष्यादिषु गम्यमानेषु धातोः कृत्या भवन्ति । प्रेषितस्त्वं भवता ग्रामो गन्तव्यः । गमनीयः । गम्यः ॥ अतिसर्गोऽनुमतिः । गुरुणानुज्ञातस्त्वं भवता कटः कर्त्तव्यः । करणीयः । कार्यः । कृत्यः ॥ प्राप्तस्ते कालः कटकरणे कर्त्तव्यः । करणीयः । कृत्यः । कार्यः कटो भवता ॥ ऊर्ध्वमुहूर्त्तात् कटः कर्त्तव्य इत्यपि वक्तव्यम् ॥ प्रैष्यादिषु पञ्चमीसप्तम्युक्ता सा बाधिका स्यादिति वचनम् ॥

## आवश्यकाधमर्ण्योर्णिन् ॥ १११ ॥

अवश्यंभावे गम्यमानेऽधमर्णे च कर्त्तरि धातोर्णिन् भवति । अवश्यं दायी । अवश्यं कारी ॥ अधमर्णे च । शतं दायी । सहस्रं दायी । दायी मे शतं भवान् ॥

## तिक्कृतौ संज्ञायामाशिषि ॥ ११२ ॥

आशीर्विषये संज्ञायां गम्यमानायां धातोस्तिक्कृतौ भवतः । तनुतात् । तन्तिः ॥ देवायैनं देयात् । देवदत्तः ।

एव यज्ञदत्तः । वीरो भूयादिति वीरभूतिः । मित्रभूतिः । अग्निरस्य भूयादित्यग्निभूतिः । संज्ञाशब्दा यथाकथञ्चिद् व्युत्पाद्याः ॥

## धातुसम्बन्धे प्रत्ययाः ॥ ११२ ॥

धात्वर्थानां सम्बन्धे विशेषणविशेष्यभावलक्षणे स्वकालात्मका विशेष्यस्य धात्वर्थस्य काले कृत्प्रकाः प्रत्ययाः साधवो भवन्ति न तु त्यादयः साध्यविहितत्वात् । सुखं लिड् सुखार्थमेव । अग्निष्टोमयाजी पुत्रोऽस्य जनिता । अग्निष्टोमयाजीति भूते णिनिः । जनितेत्यनेन सम्बन्धे भविष्यति साधुर्भवति । एवं कृतः कटः श्वो भविता । भावि कृत्यमासीत् । भविष्यति विहितो णिनिर्भूते सिद्धः । प्रकरणात् कृतो लभ्याः । प्रत्ययग्रहणं सामान्यार्थम् । गोमानासीत् । गोमान् भवितेति । गोमानिति वर्तमाने मन्तुः । आसीदित्यनेन सम्बन्धेऽतीते सिद्धः । भवितेत्यनेन भविष्यतीति ॥

॥ इति दौर्गसिंह्यां वृत्तौ कृत्सु पञ्चमः पादः समाप्तः ॥

---

## अलंखल्वोः प्रतिषेधयोः क्त्वा वा ॥ १ ॥

अलंखल्वोः प्रतिषेधार्थयोरुपपदयोर्धातोः क्त्वा भवति वा । अलं कृत्वा । खलु कृत्वा । अलं भोजनेन । खलु भोजनेन । अलंखल्वोरिति किम् ? मा कार्षीत् । प्रतिषेधार्थयोरिति किम् ? अलङ्कारो विभक्तः । खलु दाव कन्यायाः । निश्चयेन वस्तुबन्धः ।

मेङः ॥ २ ॥

मयतेः क्त्वा भवति वा । अपूर्वकालार्थं वचनम् । अपमाय । अपमित्य याचते । यपीत्य निर्यते । न याचेः क्त्वा । अभिधानाच्च ॥ अ[illegible] याचते । याचित्वापमयते ॥

एककर्तृकयोः पूर्वकाले ॥ ३ ॥

एककर्तृकयोर्धात्वर्थयोर्मध्ये यः पूर्वक्रियाकालस्तस्मिन् वर्तमानाद्धातोः क्त्वा भवति । शक्तिशक्तिमतोरभेदविवक्षयैककर्तृकता । भुक्त्वा व्रजति ॥ द्विवचनस्यातन्त्रत्वात् परापेक्षया वा । भुक्त्वा पीत्वा व्रजति । एककर्तृकयोरिति किम् ? भुक्तवति गुरौ शिष्यो व्रजति । पूर्वकाल इति किम् ? पचति च पठति च ॥ कथम् अक्षिणी निमील्य हसति । मुखं व्यादाय स्वपिति । मुहूर्तादिकालस्य विवक्षितत्वात् ॥ कथं मृतं दृष्ट्वा दुःखं भवति । प्रियं दृष्ट्वा सुखं स्यात् । भिन्नकर्तृकत्वाच्चिन्त्यमेतत् ॥

परावरयोगे च ॥ ४ ॥

परस्यावरेण योगेऽवरस्य च परेण योगे सति धातोः क्त्वा भवति । अप्राप्य नदीं पर्वतः । [illegible]शस्थः पर्वतो विशिष्यते । अतिक्रम्य पर्वतं नदी । अवरपर्वतयोगेन परदेशस्था नदी विशिष्यते । भवति भवत्वभावादेककर्तृकता पूर्वकालता च न तु [illegible]ति वचनम् ॥

णम् चाभीक्ष्ण्ये द्विश्च पदम् ॥ ५ ॥

एककर्तृकयोर्धात्वर्थयोः पूर्वकाले वर्तमानाद्धातोर्णम् भवति क्त्वा चाभीक्ष्ण्ये पदं च द्विर्भवति। भोजं भोजं व्रजति। भुक्त्वा भुक्त्वा व्रजति॥ द्विश्च पदमिति स्वार्थमेवेदम्॥ लुनीहि लुनीहीति लोकतो दर्शनात्॥ यदयं भुङ्क्ते ततो व्रजति। यच्छब्दप्रयोगे ततःशब्देन क्रमस्याभिधानात् क्त्वा न भवति। आभीक्ष्ण्याभावार्थं णम् न स्यात्॥ यदयं पुनःपुनर्भुङ्क्ते ततो व्रजति। पुनः पुनः शब्देनाभीक्ष्ण्यस्याभिधानात्। यदयं भुङ्क्त्वा गच्छति ततोऽधीत इति भोजनगमनयोः क्रमे क्त्वा। गमनाध्ययनयोस्तु क्रमस्य ततःशब्देनाभिधानात्॥

## विभाषाग्रेप्रथमपूर्वेषु॥ ६॥

एषूपपदेषु विभाषा धातोर्णम् भवति। अग्रे भोजं व्रजति। अग्रे भुक्त्वा व्रजति। प्रथमं भोजं व्रजति। प्रथमं भुक्त्वा व्रजति। पूर्वं भोजं व्रजति। पूर्वं भुक्त्वा व्रजति॥ पूर्वं भुङ्क्ते ततो व्रजतीति ततःशब्देन क्रमस्याभिधानात्॥

## कर्मण्याक्रोशे कृञः खमिञ्॥ ७॥

कर्मण्युपपदे कृञः खमिञ् भवति। आक्रोशे गम्यमाने। चौरंकारमाक्रोशति। करोतिरुच्चारणे। आक्रोशेन क्रियैव कर्म॥ आक्रोश इति किम्? साधु कृत्वा स्तौति॥ खानुबन्धो मागमार्थः॥

## स्वादौ च॥ ८॥

स्वादर्थे स्वादुः। तस्मिन्नुपपदे कृञः खमिञ् भवति।

स्वादुङ्कारं भुङ्क्ते । सम्पन्नङ्कारं भुङ्क्ते ॥ लवणङ्कारं भुङ्क्ते । स्वादाविति किम् ? रूपमिदमदीर्घान्ततां गमयति । तेन स्वादूकृत्य स्वाद्वीं कृत्वा भुङ्क्ते यवागूम् ॥

**अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ॥ ९ ॥**

एषूपपदेषु कृञः णम् भवति सिद्धाप्रयोगश्चेत् करोतिर्वर्त्तते । यस्मादन्यथादयः शब्दाः प्रकारमाचक्षते । एतेष्वपि प्रयोगाविर्भावायेति करोतिः प्रयुज्यते । अन्यथाकारं भुङ्क्ते । एवङ्कारं भुङ्क्ते । कथङ्कारं भुङ्क्ते । इत्थंकारं भुङ्क्ते ॥ सिद्धाप्रयोगश्चेदिति किम् ? अन्यथा कृत्वा शिरो भुङ्क्ते ॥

**यथातथयोरसूयाप्रतिवचने ॥ १० ॥**

पौरस्त्य सूत्रत्वात् [आ० २. १. २०] । असूयाऽक्षमा तदर्थं प्रतिवचनम् । यथातथयोः कृञः णम् भवति । असूयाप्रतिवचने गम्यमाने । सिद्धाप्रयोगश्चेत् करोतिर्भवति । यथाकारमहं भोक्ष्ये तथाकारमहं भोक्ष्ये किं तवानेन ॥ असूयाप्रतिवचन इति किम् ? यथा कृत्वाहं भोक्ष्ये । तथा कृत्वाहं शिरो भोक्ष्ये किं तवानेन ॥

**दृशो णम् साकल्ये ॥ ११ ॥**

साकल्यविशिष्टे कर्मण्युपपदे दृशेः णम् भवति । कन्यादर्शं वरयति । यां यां कन्यां पश्यति तां सर्वां वरयतीत्यर्थः ॥ विदेर्वक्तव्यम् । ब्राह्मणवेदं भोजयति । यं यं ब्राह्मणं जानाति लभते विचारयति तं सर्वं भोजयतीत्यर्थः ॥ साकल्य इति किम् । कञ्चिद् ब्राह्मणं दृष्ट्वा भोजयति ॥

यावति विन्दजीवोः ॥ १२ ॥

यावदित्यनिर्दिष्टार्थवाची। यावदित्युपपदे विन्दतेर्जीवतेश्च णम् भवति। यावद्वेदं भुङ्क्ते। यावद् यावन्तं वा लभते तावत् तावन्तं वा भुङ्क्त इत्यर्थः॥ यावज्जीवमधीते। यावज्जीवति तावदधीत इत्यर्थः॥

चर्मोदरयोः पूरेः ॥ १३ ॥

पूरिरिजन्त एव सकर्मकः। चर्मोदरयोः कर्मणोरुपपदयोः पूरयतेर्णम भवति। चर्मपूरं ददाति। उदरपूरं भुङ्क्ते॥

वर्षप्रमाण ऊलोपश्च वा ॥ १४ ॥

कर्मण्युपपदे पूरयतेर्णम् भवति वर्षप्रमाणे गम्यमाने। पूरयतेरूलोपश्च वा। गोष्पदपूरं वृष्टो देवः। गोष्पदप्रं वृष्टो देव॥

चेलार्थे क्नोपेः ॥ १५ ॥

चेलार्थे कर्मण्युपपदे क्नोपयतेर्णम् भवति। वर्षप्रमाणे गम्यमाने। चेलक्नोपं वृष्टो देवः। वस्त्रक्नोपं वृष्टो देवः। वसनक्नोपं वृष्टो देवः॥

निमूलसमूलयोः कषः ॥ १६ ॥

निमूलसमूलयोः कर्मणोरुपपदयोः कषतेर्णम् भवति। निमूलकाषं कषति। समूलकाषं कषति। निमूलं समूलं कषतीत्यर्थः॥

शुष्कचूर्णरूक्षेषु पिषः ॥ १७ ॥

एषु कर्मसूपपदेषु पिषेर्णम् भवति। शुष्कपेषं पिनष्टि। चूर्णपेषं पिनष्टि। रूक्षपेषं पिनष्टि। शुष्कं पिनष्टीत्यर्थः।

जीवे ग्रहः ॥ १८ ॥

जीवे कर्मण्युपपदे ग्रहेर्णम् भवति। जीवग्राहं गृह्णाति। जीवं गृह्णातीत्यर्थः

अकृते कृञः ॥ १९ ॥

अकृते कर्मण्युपपदे कृञो णम् भवति। अकृतकारं करोति। अकृतं करोतीत्यर्थः॥

समूले हन्तेः ॥ २० ।

समूले कर्मण्युपपदे हन्तेर्णम् भवति। समूलघातं हन्ति। समूलं हन्तीत्यर्थः॥

करणे ॥ २१ ॥

करणवाचिन्युपपदे हन्तेर्णम् भवति। पादघातं भूमिं हन्ति। पादेन हन्तीत्यर्थः॥ मुष्टिघातं चौरं हन्ति। मुष्टिना चौरं हन्तीत्यर्थः॥ परमपि हिंसार्थानामेककर्मकादिति वचनं बाधते करणस्य व्याप्तित्वात्॥

हस्तार्थे ग्रहवर्तिवृताम् ॥ २२ ॥

हस्तार्थे करण उपपद एषां णम् भवति। हस्तेन गृह्णाति। हस्तग्राहं गृह्णाति॥ एवं करग्राहं गृह्णाति॥

हस्तेन वर्त्तयति । हस्तवर्त्तं वर्त्तयति ॥ हस्तेन वर्त्तते । हस्तवर्त्तं वर्त्तते ॥

**स्वार्थे पुषः ॥ २३ ॥**

स्वान्यात्मात्मीयज्ञातिवित्तानि । स्वाभिधेयेषु करणेषूपपदेषु पुषो णम् भवति । स्वेन पोषति पुष्यति पुष्णाति वा । स्वपोषं पोषति । एवम् आत्मपोषम् । आत्मीयपोषम् । गोपोषम् । महिषीपोषम् । पितृपोषम् । मातृपोषम् । वित्तपोषम् । रैपोषम् ॥

**स्नेहने पिषः ॥ २४ ॥**

स्निह्यते सिच्यतेऽनेनेति स्नेहनमुदकादि । स्नेहवाचिनि करण उपपदे पिषो णम् भवति । उदकेन पिनष्टि । उदपेषं पिनष्टि । एवं तैलपेषम् । घृतपेषम् ॥ उदकस्योद. पेषवासवाहनधिषु च निपात्यते ॥

**बन्धोऽधिकरणे ॥ २५ ॥**

अधिकरणे नाम्न्युपपदे बध्नातेर्णम् भवति । चक्रे बद्धः । चक्रबन्धं बद्धः । मुष्टिबन्धं बद्धः । हस्तबन्धं बद्धः ॥

**संज्ञायां च ॥ २६ ॥**

अधिकरणेऽनधिकरणे चोपपदे बध्नातेर्णम् भवति संज्ञायां गम्यमानायाम् । क्रौञ्चे क्रौञ्चेन वा बद्धः । क्रौञ्चबन्धं बद्धः ॥ एवं मयूरिकाबन्धम् । अट्टालिकाबन्धम् ॥ बन्धविशेषाणामियं संज्ञा ॥

## कर्त्रोर्जीवपुरुषयोर्नशिवहिभ्याम् ॥ २७ ॥

जीवपुरुषयोः कर्त्रोरुपपदयोर्नशिवहिभ्यां णम् भवति यथासंख्यम्। जीवनाशं नष्टः। जीवो नष्ट इत्यर्थः। पुरुषवाहं वहति। पुरुषो वहतीत्यर्थः॥ कर्त्रोरिति किम्? जीवेन नष्टः। पुरुषेणोढः॥

## ऊर्ध्वे शुषिपूरोः ॥ २८ ॥

ऊर्ध्वे कर्तृवाचिन्युपपदे शुषेः पूरेश्च णम् भवति। ऊर्ध्वशोषं शुष्कः। ऊर्ध्वपूरं पूर्णः। ऊर्ध्वः सन्नित्यर्थः॥

अन्यथाकारं भुङ्क्त इत्यादिषु किमर्थं णमो विधानम्? व्याप्यत्वाद् द्वितीया भविष्यति। यथा। ओदनपाकं शेते॥ यद्येवं वक्ष्यति कर्तव्यमेव॥ गोष्पदं प्रातीति गोष्पदप्रमिति क्रियाविशेषणत्वात्। तदयुक्तम्। यतो णमो चेष्यतेऽव्ययत्वात् पूर्वकालोऽपि यथाभिधानं प्रतिपाद्य एव। तथा च विकल्पाधिकारे क्वापि दृश्यते। अन्यथाकारं भुज्यत ओदन इति द्वितीया न स्यात्। यथा। ओदनः पक्त्वा भुज्यते। कृत्यक्तयोर्हि भावेऽभिधानात् प्रधानशक्त्यभिधाने गुणशक्तिरभिहितवत् प्रकाशते॥

## कर्मणि चोपमाने ॥ २९ ॥

कर्तरि कर्मणि चोपमानवाचिन्युपपदे धातोर्णम् भवति। चूडक इव नष्टः। चूडकनाशं नष्टः॥ कर्मणि च। सुवर्णमिव निहितम्। सुवर्णनिधायं निहितम्। ओदनपाचं पक्वः॥ उपमान इति किम्? चूडको नष्टः। सुवर्णं निहितम्॥

### कषादिषु तैरेवानुप्रयोगः ॥ ३० ॥

कषादिषु णमौ विषयभूतेषु तैरेव कषादिभिरनुप्रयोगः कर्त्तव्यो नान्यैरिति । अनुप्रयोगश्च पूर्वकालतामभिदधात्येव । निमूलकाषं कषति ॥ कषादिष्विति किम् ? चेलक्नोपं वृष्टो देवः ॥

### तृतीयायामुपदंशेः ॥ ३१ ॥

तृतीयान्त उपपद उपपूर्वाद् दंशेर्णम् भवति । मूलकेनोपदंशं भुङ्क्ते । मूलकादिकरणतया भुजिना युक्तमप्युपदंशिना व्याप्तमित्युपपदं स्यात् । वाधिकाराद् मूलकेनोपदश्य भुङ्क्ते ॥ तृतीयायामिति किम् ? मूलकमुपदश्य भुङ्क्ते ॥

### हिंसार्थाच्चैककर्मकात् ॥ ३२ ॥

तृतीयान्त उपपदे हिंसार्थाद्धातोरनुप्रयोगेण समानकर्मकाण्णम् भवति । दण्डेनोपघातं दण्डोपघातं गाः कालयति ॥ एककर्मकादिति किम् ? दण्डेनाहत्य भूमिं गोपालको गाः सादयति ॥

### सप्तम्यां च प्रमाणासत्त्योः ॥ ३३ ॥

तृतीयान्ते सप्तम्यन्ते चोपपदे धातोर्णम् भवति प्रमाणे गम्यमाने प्रत्यासत्तौ च । सम्बन्धाविवक्षाया न यथासंख्यम् । द्व्यङ्गुलेनोत्कर्षम् । द्व्यङ्गुल उत्कर्षम् । द्व्यङ्गुलोत्कर्षं गण्डिका छिनत्ति ॥ केशैर्ग्राहम् । केशेषु ग्राहम् । केशग्राहं युध्यन्ते ॥

## उपपीडरुधकर्षश्च ॥ ३४ ॥

तृतीयान्ते सप्तम्यन्ते चोपपदे उपपूर्वेभ्य एभ्यो णम् भवति । पार्श्वाभ्यामुपपीडम् । पार्श्वयोरुपपीडम् । पार्श्वोपपीडं शेते ॥ व्रजेनोपरोधं व्रज उपरोधम् । व्रजोपरोधं गाः सादयति ॥ पाणिनोपकर्षम् । पाणावुपकर्षम् । पाण्युपकर्षम् धाना भक्षयति ॥

## अपादाने परीप्सायाम् ॥ ३५ ॥

परि समन्तादाप्तुमिच्छा परीप्सा त्वरेत्यर्थः । अपादान उपपदे धातोर्णम् भवति परीप्सायां गम्यमानायाम् । शय्या या उत्थायम् । शय्योत्थाय धावति ॥ रन्ध्रादुपकर्षम् । रन्ध्रोपकर्षं पयः पिबति ॥ परीप्सायामिति किम् ? आसनादुत्थाय गच्छति ॥

## द्वितीयायां च ॥ ३६ ॥

द्वितीयान्ते चोपपदे धातोर्णम् भवति परीप्सायां गम्यमानायाम । लोष्टं ग्राहम् । लोष्टग्राहं युध्यन्ते । एवं नाम त्वरन्ते येनायुधमपि नाद्रियन्ते ॥

## स्वाङ्गेऽध्रुवे ॥ ३७ ॥

स्वमङ्गं स्वाङ्गम् । स्वाङ्गसंज्ञकेऽध्रुवे द्वितीयान्त उपपदे धातोर्णम् भवति । भ्रुवौ विक्षेपम् । भ्रूविक्षेपं जल्पति ॥ अक्षिणी काणम् । अक्षिकाणं हसति ॥ अध्रुव इति किम् ? उत्क्षिप्य शिरः कथयति ॥ यस्मिन्नङ्गे छिन्ने प्राणी न म्रियते तदध्रुवम् ॥

## परिक्लिश्यमाने च ॥ ३८ ॥

परि समन्तात् क्लिश्यमाने स्वाङ्गे च द्वितीयान्त उपपदे धातोर्णम् भवति। उरांसि प्रतिपेषम्। उरःप्रतिपेषम्। युध्यन्ते। कृत्स्नमुरः पीडयित्वा युध्यन्त इत्यर्थः॥

## विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ॥ ३९ ॥

व्याप्यमान आसेव्यमाने च द्वितीयान्त उपपद एभ्यो धातुभ्यो णम् भवति॥ श्रुतत्वाद् विशादिक्रियाभिः साकल्येन द्रव्याणामेव सम्बन्धो व्याप्तिरीप्सा। अतो द्रव्यस्य द्विर्वचनम्॥ आसेवा तात्पर्यम् आभीक्ष्ण्यं तच्च क्रियाया एवेति॥ विशादीनां णमन्तानां द्विर्वचनं भवति। गेहं गेहमनुप्रवेशमास्ते। गेहमनुप्रवेशमनुप्रवेशमास्ते॥ गेहं गेहमनुप्रपातमास्ते। गेहमनुप्रपातमनुप्रपातमास्ते॥ गेहं गेहमनुप्रपादमास्ते। गेहमनुप्रपादमनुप्रपादमास्ते॥ गेहं गेहमवस्कन्दमास्ते। गेहमवस्कन्दमवस्कन्दमास्ते॥ समास एव वीप्साभीक्ष्ण्यार्थमभिधत्ते शब्दशक्तित्वात्। गेहानुप्रवेशम्। गेहानुप्रपातम्। गेहानुप्रपादम्। गेहावस्कन्दमास्ते इति॥ व्याप्यमानासेव्यमानयोरिति किम्? गेहमनुप्रविश्य भुङ्क्ते॥ आभीक्ष्ण्ये णम् सिद्ध एव। उपपदसमासविभाषार्थमिदम्॥

## तृष्यस्योः क्रियान्तरे कालेषु ॥ ४० ॥

कालेषु द्वितीयान्तेषूपपदेषु क्रियान्तरे गम्यमाने तृष-

लोर्णम् भवति। द्वाहं तर्षम्। द्व्याहतर्षं गाः पाययति॥ द्वाहमभ्यासम्। द्वाहाभ्यासं गाः पाययति। अत्र यत्पानं यस्य द्वाहेऽतीते भविष्यति तन्मध्यपातिना तर्षेणाभ्यसनेन च गवां पानक्रिया व्यवधीयते॥ तृष्यत्योरिति किम्? द्वाहमुपोष्य भुङ्क्ते॥ क्रियान्तर इति किम्? अहरत्यस्यन्निषून् गतः। अभ्यसनेनेषवः कालाश्च व्याप्यन्ते न गतिर्व्यवधीयते॥ कालेष्विति किम्? योजनमभ्यस्य गाः पाययति॥ क्रियाग्रहणं सुखार्थम्॥

## नाम्न्यादिशिग्रहोः॥ ४१॥

नाम्नि कर्मणि द्वितीयान्त उपपदे आदिशिग्रहोर्णम् भवति। नामादेशम्। नामादेशं ददाति॥ नामानि ग्राहम्। नामग्राहमाह्वयति॥

## कृञोऽव्ययेऽयथेष्टाख्याने क्त्वा च॥ ४२॥

यथेष्टमिति वीप्सायामव्ययीभावः। अव्यय उपपदे कृञो णम् भवति क्त्वा च। अयथेष्टाख्याने गम्यमाने। ब्राह्मण! पुत्रस्ते जातः। नीचैःकारम्। नीचैःकृत्य नीचैः कृत्वाचष्टे। उच्चैर्नाम प्रियमाख्येयम्॥ ब्राह्मण! कन्या ते गर्भिणी। किं तर्हि? उच्चैःकारम्। उच्चैःकृत्य। उच्चैः कृत्वाचष्टे। नीचैर्नामाप्रियमाख्येयम्॥ अयथेष्टाख्यान इति किम्? ब्राह्मण! पुत्रस्ते जातः। उच्चैः कृत्वाचष्टे॥ अव्ययग्रहणमिह स्पार्थमाख्यानम्॥

## तिर्यच्यपवर्गे॥ ४३॥

तिर्यक्शब्द उपपदे कृञो णमुल् भवति क्त्वा च। अपवर्गे गम्यमाने तिर्यक्कारम्। तिर्यक्कृत्य। तिर्यक्कृत्वा गतः। परिसमाप्य गत इत्यर्थः॥ अपवर्ग इति किम्? तिर्यक्कृत्वा काष्ठं गतः॥

## स्वाङ्गे तसि॥ ४४॥

स्वाङ्गसंबन्धे तस्प्रत्ययान्त उपपदे कृञो णमुल् भवति। मुखतःकारम्। मुखतःकृत्य। मुखतः कृत्वास्ते॥ स्वाङ्ग इति किम्? सर्वतः कृत्वा गतः। अव्ययाधिकारान्मुखे तस्यतीति मुखतः कृत्वा गत इति॥

## भुवस्तूष्णीमि च॥ ४५॥

स्वाङ्गे तस्प्रत्ययान्ते तूष्णीम्शब्दे चोपपदे भुवो धातोर्णमुल् भवति क्त्वा च॥ मुखतो भावम्। मुखतोभूय। मुखतो भूत्वास्ते॥ तूष्णीम्भावम्। तूष्णीम्भूय। तूष्णीं भूत्वास्ते॥ कथं नानाकारम्। नानाकृत्य। नाना कृत्वा भुङ्क्ते॥ विनाकारम्। विनाकृत्य। विना कृत्वा गत इति क्रियाविशेषणमेव। नाना युक्तार्थत्वाद्वा समासः। नाना कृत्वा काष्ठानि गत इति सापेक्षत्वान्न समासः। एवं नानाभावम्। नानाभूय। नाना भूत्वास्ते॥ विनाभावम्। विनाभूय। विना भूत्वा गत इति॥ तथा अन्वग्भावम्। अन्वग्भूय। अन्वग् भूत्वास्ते। आनुकूल्य एव समासोऽभिधानात्। तेनान्वग् भूत्वा तिष्ठति शत्रुः॥

## कर्तरि क्तः॥ ४६॥

कृत्संज्ञकाः प्रत्ययाः कर्त्तरि वेदितव्याः। करोतीति कर्त्ता कारकः। पचः। नन्दनः॥ निराकाङ्क्षेषु वाक्येषु परिभाषेयं शेषभूता वा। ल्युट्करणेनाज्ञातत्वाद् न पाणिनी वृत्तिः॥

## भावकर्मणोः कृत्यक्तखलर्थाः॥ ४७॥

पूर्वस्यापवादोऽयम्। भावे कर्मणि च कृत्याः क्तः खलर्थाश्च वेदितव्याः। शयितव्यं भवता। भोक्तव्य ओदनो भवता। आसितं भवता। कृतः कटो भवता। ईषदाढ्यंभवं भवता। ईषत्करः कटो भवता। ईषत्पानं भवता ईषत्पानः सोमो भवता॥ अकर्मकेभ्यो भावे सकर्मकेभ्यश्च कर्मणीति॥

## आदिकर्मणि क्तः कर्तरि च॥ ४८॥

आदिक्रियायां यः क्तो विहितः स कर्त्तरि कारके वेदितव्यो यथाप्राप्तं च। प्रकृतः कटं भवान्। प्रकृतः कटो भवता। प्रसुप्तो भवान्। प्रसुप्तं भवता। प्रशब्द आदिक्रियाद्योतकः। बहूनां क्रियाक्षणानामादिक्रियाक्षणोऽतीत एव। भविष्यति कटे कटशब्दस्तादर्थ्यात्॥

## गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च॥ ४९॥

गत्यर्थेभ्योऽकर्मकेभ्यः श्लिषादिभ्यश्च कर्त्तरि क्तो वेदितव्यः। चकाराद् यथाप्राप्तं च॥ गतो ग्रामं भवान्। ग्रामो

ग्रामं भवान् । गतो ग्रामो भवता । प्राप्तो ग्रामो भवता । गतमनेन । प्राप्तमनेन ॥ अकर्मकेभ्यः । ग्लपितो भवान् । ग्लपितं भवता ॥ श्लिषादयः सोपसर्गाः सकर्मकाः । श्लिष आलिङ्गनार्थः । आश्लिष्टो गुरुं भवान् । आश्लिष्टो गुरुर्भवता ॥ अधिशयितः खट्वां भवान् । अधिशयिता खट्वा भवता ॥ उपस्थितो गुरुं भवान् । उपस्थितो गुरुर्भवता ॥ उपासितो गुरुम्भवान् । उपासितो गुरुर्भवता ॥ वस निवासार्थ एव । अनूषितो गुरु भवान् । अनूषितो गुरुर्भवता ॥ अनुजातो माणवको माणविकाम् । अनुजाता माणविका माणवकेन ॥ आरूढो वृक्षं भवान् । आरूढो वृक्षो भवता ॥ अनुजीर्णो वृषली भवान् । अनुजीर्णा वृषली भवता ॥

## दाश्गोघ्नौ सम्प्रदाने ॥ ५० ॥

एतौ सम्प्रदाने निपात्येते ॥ दाश्ट दाने । दाशन्ति यस्मै स दाश्‌ । गां हन्ति यस्मा आगताय स गोघ्नोऽतिथिः । निपातनादचटकौ ॥ अर्घ्यार्हा ऋत्विगादय एव तथोच्यन्तयाप्युच्यन्ते ॥

## भीमादयोऽपादाने ॥ ५१ ॥

एते निपात्यन्तेऽपादाने । बिभेत्यस्मादिति भीमः । एवं भीष्म. । चरु. । प्रस्कन्दन. । प्रपतन. । समुद्रः । स्रुवः ॥ एत औणादिका व्युत्पत्तिश्च यथाकथञ्चित् ॥

## ताभ्यामन्यत्रोणादयः ॥ ५२ ॥

ताभ्यां सम्प्रदानापादानाभ्यामन्यत्र कारके उणादयो भवन्ति। कृत्यादुणादयः कर्त्तरि प्राप्ताः कर्मादिष्वपि कथ्यन्ते॥ करोतीति कारुः। वातीति वायुः। कृष्यत इति कृषिः। तन्यत इति तन्तुः॥

## क्तोऽधिकरणे ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ॥ ५३ ॥

ध्रुवो निश्चलः स च क्रियाविशेषणम्। तस्य भावो ध्रौव्यम्। अचलात्मकक्रियात्मकत्वाद् ध्रौव्यार्था अकर्मका उच्यन्ते। प्रत्यवसानं भोजनम्॥ ध्रौव्यार्थेभ्यो गत्यर्थेभ्यः प्रत्यवसानार्थेभ्यश्च क्तोऽधिकरणे वेदितव्यो यथाप्राप्तं च। इदमेषामासितम्। आसितमेभिः। आसितो भवान्॥ इदमेषां यातम्। इह तैर्यातम्। ग्रामस्तैर्यातः। ग्रामं ते याताः॥ अधिकरणं कर्मकर्त्ता च नोक्तमिति लिङ्गार्थमात्रे प्रथमैव॥ इदमेषां भुक्तं पीतम्। इह तैर्भुक्त ओदनः पीतं पयः। भोजनार्थात् कर्त्तर्यपि स्यादिति व्यवहितः पाठः। कथं भुक्ता विप्राः पीता गाव इति। अन्यत्रापीति वचनात्। तद्योगाद् अर्श आदित्वाद् वा। देवबोद् दृष्टं सम्प्राप्ताः गालव इति शालिङ्कितवः सम्पन्ना इत्यतीतता॥

## युवुझामनाकान्ताः ॥ ५४ ॥

एषां स्थानेऽन अक अन्त इत्येत आदेशा भवन्ति यथासंख्यम्। नन्दनः। पाचकः। गण्डयन्तः। मण्डयन्तः। गण्डिमण्डिजिनन्दिभ्यो झच्॥ कथं भुज्युः। मृत्युः। भुजि-

## चजोः कगौ धुड्घानुबन्धयोः ॥ ५६ ॥

चजोः कगौ भवतः । धुटि घानुबन्धे च प्रत्यये परे । निमित्तेन तु सम्बन्धस्याविवक्षितत्वान्न यथासंख्यम् । पक्ता । भोक्ता । पाकः । भोगः ॥ रुग्णः । भुग्न इति नित्यमपि नत्वं बाधित्वाऽन्तरङ्गत्वाच्च वर्गस्य क्विरस्ति ॥ घानुबन्धे कृति व्यावृत्तिः स्यादिति धुड्ग्रहणम् ॥

## न्यङ्क्वादीनां हश्च घः ॥ ५७ ॥

न्यङ्कु । इत्येवमादीनां चजोः कगौ भवतः । हश्च घो भवति ॥ नावञ्चेः । न्यङ्कुः ॥ भृमृतृचरित्सरितनिमस्जि भ्य उः । मद्गुः ॥ प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च । भृगुः ॥ स्फायितञ्चिवञ्चीत्यादि रक् । तक्रम् । वक्रम् ॥ असुन् । उच्यतेऽस्मिन्निति । ओकः ॥ व्यतिषङ्गः । अवसर्गः । सञ्जेः सृजेश्च ॥ पचाद्यच् । श्वपाकः । मांस पाकः । कपालपाकः । उलूकपाकः । कर्मण्यण् । दूरे पच्यते स्वयमेव । फले पच्यते स्वयमेव । पचाद्यच् । गणनिपातना-दुपधाया दीर्घत्वं सप्तम्याश्चालुक् । दूरेपाकः । फलेपाकः । क्षणेपाक इति केचित् ॥ मेहतीत्यच् । मेघो जलद एव ॥ अवदाघः । निदाघः ॥ अर्हते । अर्घः ॥ घञि संज्ञायाम् । अन्यत्रावदाहः । निदाहः । अर्हः ॥

## न कवर्गादिव्रज्यजाम् ॥ ५८ ॥

कवर्गादेर्व्रजेरजेश्च चजोः कगौ न भवतः । कूजः । खर्जः । गर्जः । परिव्राजः । उदाजः । 'भाष्यं' हतम् ॥

वञ्चेर्गताविति वक्तव्यम् । वञ्च्यत इति वञ्च्यं गता वणिजः । गन्तव्यं गता इत्यर्थः ॥ गताविति किम् ? वञ्च्यं काष्ठम् । वञ्चिरत्र कौटिल्ये ॥

**घ्यण्यावश्यके ॥ ५९ ॥**

अवश्यंभावे गम्यमाने घ्यणि चजोः कगौ न भवतः । अवश्यपाच्यम् । अवश्यभोज्यम् ॥ आवश्यक इति किम् । पाक्य ओदनः ॥

**प्रवचर्चिरुचियाचित्यजाम् ॥ ६० ॥**

अनावश्यकार्थं वचनम् । एषां चजोः कगौ न भवति । घ्यणि परे । प्रवाच्यः पाठविशेषः । तद्वान् ग्रन्थोऽप्युच्यत इति शब्दविषयता ॥ ऋच स्तुतौ । अर्च्यः ॥ रोच्यः । याच्यः । त्याज्यः ॥ कथं शोच्यः । इविनन्तत्वात् ॥

**वचोऽशब्दे ॥ ६१ ॥**

वचेर्घ्यणि को न भवति । अशब्दविषये । वाच्यम् ॥ अशब्द इति किम् ? वाक्यं पदसमुदायः ॥ वक्तवाक्यरचनारमणीय इत्यपि स्यात् ॥

**निप्राभ्यां युजः शक्ये ॥ ६२ ॥**

निप्राभ्यां परस्य युजः शक्येऽर्थे घ्यणि गो न भवति । नियोक्तुं शक्यः । नियोज्यो भृत्यः । एवं प्रयोज्यः ॥ शक्य इति किम् ? नियोक्तुमर्हति । नियोग्यः । प्रयोग्यः प्रभुः ॥

**भुजोऽन्ने ॥ ६३ ॥**

भुजो भक्ष्येऽर्थे घ्यणि गो न भवति । भोज्यमन्नम् । भोज्य पयः ॥ भक्ष इति किम् ? भोग्यः कम्बलः । भोग्या भूः ॥

## भुजन्युब्जौ पाणिरोगयोः ॥ ६४ ॥

भुजन्युब्जौ घञन्तौ पाणिरोगयोरर्थयोर्यथासंख्यं निपात्येते । भुज्यतेऽनेनेति भुजः पाणिः । न्युब्जितः शेतेऽस्मिन्निति न्युब्जो रोगविशेष । व्यञ्जनाच्च [का० ४. ५. ८८] इति घञ् ॥ पाणिरोगयोरिति किम् ? भोगः । न्युद्गः । गले दीपध इष्यते ॥

## दृग्दृशदृक्षेषु समानस्य सः ॥ ६५ ॥

समानस्य दृगादिषु सो भवति । वचनात् क्विप्टक्सक ॥ सदृक् । सदृश । सदृक्षः ॥ योगविभागात् पक्षादिषु च । सपक्षः । सज्योतिः । इत्यादि यथेष्ट समास । पक्ष । ज्योतिः । जनपद । रात्रि । नाभि । बन्धु । पत्नी ॥ रूपादौ वा । समानो रूप' । सरूप. । रूप । नाम । गोत्र । स्थान । वर्ण । वय' । धर्म । जातीय । उदर । उदर्य ॥ सब्रह्मचारीति नित्यम् ॥

## इदमी ॥ ६६ ॥

इदम् दृगादिष्वीर्भवति । ईदृक् । ईदृश' । ईदृक्षः । अभेदबलात् सर्वस्य ॥

## किम् की ॥ ६७ ॥

किम् दृगादिषु कीर्भवति । कीदृक् । कीदृशः । कीदृक्षः ॥ इदं किं परिमाणमस्य । इयान् । कियान् । मध्यमादात्वात् ॥

## अदोऽमूः ॥ ६८ ॥

अदो दृगादिष्वमूर्भवति । अमूदृक् । अमूदृशः । अमूदृक्षः ॥ केचिद् अमूकादृक् । अमुकादृशः । अमुकादृक्ष इति तदायत्त एव ॥

## आ सर्वनाम्नः ॥ ६९ ॥

सर्वनाम्नो दृगादिष्वा भवति । तादृक् । तादृशः । तादृक्षः ॥ भवादृगित्यन्तरङ्गत्वान्नलोपः ॥ अन्यादृगिति सर्वनाम्न इति वचनादन्यशब्दादपि दृशः क्विपट्कशगिति ॥ यत्तदेतत् परिमाणमस्य । यावान् । तावान् । एतावान् । इति मध्यमाद्यत्वात । परिमाणे वन्तुरात्त्वं चेति ॥

## विष्वग्देवयोश्चान्त्यस्वरादेरद्र्यञ्चतौ क्वौ ॥७०॥

विष्वग्देवयोः सर्वनाम्नश्चान्त्यस्वरादेरवयवस्याञ्चतौ क्विबन्ते परेऽद्रिरादेशो भवति । विष्वगञ्चतीति विष्वद्र्यङ् । देवद्र्यङ् ॥ यद्र्यङ् । तद्र्यङ् । सर्वद्र्यङ् । अद्र्यङ् । अमुद्र्यङ् ॥

## सहसन्तिरसां सध्रिसमितिरयः ॥ ७१ ॥

एषां सध्रि समि तिरि । इत्येत आदेशा यथासङ्ख्यं भवन्ति । अञ्चतौ क्विबन्ते । सहाञ्चतीति सध्र्यङ् । समञ्चतीति सम्यङ् । तिरोऽञ्चतीति तिर्यङ् ॥

## वहेर्धो वा ॥ ७२ ॥

वहेर्धो भवति वा क्वौ परे। विरोहतीति वीरुत्। वीरुधौ। वीरुट्। वीरुहौ। येङ्स्वरस्य दीर्घता॥ व्यवस्थितविभाषया विपूर्वस्यैव। तेन भूरुट्। भूरुहौ

## मो नो धातोः॥ ७३ ॥

धातोर्मकारस्य नकारो भवति क्वौ परे। प्रशु। प्रशान्॥ तमु। प्रतान्॥ नोऽदन्त इत्यस्य च लोपः। क्वौ स्थानिवद्भावाल्लिङ्गान्तनकारस्य नलोपो न स्यात्॥ धातुग्रहणं वानिष्ट्यर्थम्॥

## वमोश्च ॥ ७४ ॥

वमोश्च परयोर्धातोर्मो नो भवति। जगन्वान्। गन्मा। सर्वधातुभ्यो मन्॥

## स्वरे धातुरनात् ॥ ७५ ॥

नकारान्तः स्वरे परे धातुरेव भवति। अनात्। आकारो न निवर्तत इत्यर्थः। प्रशामौ। प्रतामौ। जग्मुषः जग्मुषो॥ तदाश्रित एव स्वरे। तेन प्रशानश्चेति॥ स्वर इति किम्? प्रशान्भ्याम्॥ ये चेष्यते। प्रशाममिच्छति। प्रशाम्यति। प्रशामे हितम्। प्रशाम्यम्।

## अतोऽग्रघसैकस्वरातामिड् वन्सौ ॥ ७६॥

अतोऽग्रघसैकस्वराद्न्तानामेव वन्साविड् भवत्यादिः॥ स्वादिनियमेन पराचावन्नावादिट् सिद्धो नियम्यते [का० ३. ७. २५]॥ आरिवान्। ईयिवान्। जक्षिवान्। आटिवान्।

पेचिवान् । ददिवान् । पपिवान् ॥ दरिद्राञ्चकृवानित्यामा भाव्यम् ॥ घस्यादिग्रहणादेव वन्सौ द्विर्वचने सत्येकस्वरा ग्रहीतव्या नेकत्वं वचनादिमः ॥ घसामिति किम्? बभस्वान् । जजागर्वान् ॥

## गमहनविदविशदृशां वा ॥ ७७ ॥

अप्राप्ते विभाषेयम् । एषां वन्साविड् वा भवति । जग्मिवान् । जगन्वान् । जघ्निवान् । जघन्वान् । विविदिवान् । विविद्वान् । बहुभिः स्वविकरणैः साहचर्याल्लाभार्थस्य विदेर्ग्रहणम् ॥ विविशिवान् ॥ विविश्वान् । ददृशिवान् । ददृश्वान् ॥

## दाश्वान् साह्वान् मीढ्वांश्च ॥ ७८ ॥

इति निपात्यन्ते ।

द्विर्वचनमनिट्त्वं च सहेर्दीर्घो निडेरपि ।
ढत्वं च खलु तन्वत्वात् सर्वाणि वचनानि च ॥

## न श्व्यवर्णवृतां कानुबन्धे ॥ ७९ ॥

श्वयतेरवर्णान्तस्य वृङ्वृञोर्ऋकारान्तस्य च कानुबन्धे सार्वधातुके नेड् भवति । श्वितः । श्वितवान् । श्वित्वा ॥ युतः । युतवान् । युत्वा ॥ वृतः । वृतवान् । वृत्वा ॥ लूनः । लूनवान् । लूत्वा ॥ हृतः । हृतवान् । हृत्वा ॥ कीर्णः । कीर्णवान् । कीर्त्वा ॥ वचनाद् विकृतेऽपि स्यात् । शेश्वियितः । लोलुयित इति सिद्धये ॥ एकस्वरमनुवर्तयन्त्यन्ये । तेषाम् ऊर्णोतेर्वक्तव्यमिह । प्रोर्णुतः । प्रोर्णुतवान् ॥

घोषवत्योश्च कृति ॥ ८० ॥

घोषवति तौ च कृत्संज्ञके नेड् भवति। ईश्वरः। दीप्रः। शर्म। दीप्तिः। जागर्तिः। क्षुधिः॥ तिक् च। तन्तिः। सन्तिः॥ कथं निगृहीतिः। निपठितिः। निकुचितिः। आलोचितिः। उपस्निहितिः। अवड्कप्रतिबाधिकाराद् ग्रहादेरिड् भवति॥ अपचितिरिति पूजायां निष्कृतौ च॥ कथं शस्त्रम्। आगमस्यानित्यत्वात्॥ पतमिति युक्त पते [का० ४. २ ३२] इति वचनात्॥

वेपुसहलुभरुषरिषां ति ॥ ८१ ॥

एषां तकारादावसार्वधातुके इड् भवति वा। एष्टा। एषिता॥ सोढा। सहिता॥ लोब्धा॥ लोभिता॥ रोष्टा। रोषिता॥ रेष्टा। रेषिता॥ उदनुबन्धः किम्? इष गतौ। आभीक्ष्ण्ये एषिता नित्यम्॥

रधादिभ्यश्च ॥ ८२ ॥

तीति न वर्तते पृथग्वचनात्॥ ठानुबन्धलिङ्गाद् रधादिभ्यश्च परस्यासार्वधातुकस्य व्यञ्जनादेरयकारादेरिड् भवति वा। रत्स्यति। रधिष्यति॥ नङ्क्ष्यति। नशिष्यति॥ आहत्करणे रधादिः। ररन्धिव। ररन्धिम। इति क्रादि नियमान्नित्यमिट्॥

स्वरतिसूतिसूयत्यूदनुबन्धात् ॥ ८३ ॥

स्वरतेः सूतेः सूयतेरूदनुबन्धाच्च परस्यासार्वधातुकस्य व्यञ्जनादेरयकारादेरादिरिड् भवति वा। स्वर्ता।

स्वरिता ॥ सोता । सविता ॥ सूयतेस्तु नित्यम् । सविता ॥ निगोढा । निगूहिता ॥ विधोता । विधवितेति धुञा धूञा च सिद्धम् ॥ स्वरिष्यतीति परत्वाद्विकल्पो न स्याद् व्यवस्थितवाविधानात् ॥ तथा सूसूङोश्च कानुबन्धे नित्यं स्यात् । सूत्वा । सूत्वेति ॥ अपतिनिष्कुषोरिति [का० ४, ६, ८०] वचनाद् निष्कुषोर्वेडस्तीति गम्यते । असार्वधातुकस्य व्यञ्जनादेरयकारादेरिति निष्कोष्टा । निष्कोषिता ॥

उदनुबन्धपूक्लिशां क्त्वि ॥ ८४ ॥

उदनुबन्धात् पूङः क्लिशश्च क्त्वो इड् भवति वा । शमु । शान्त्वा । शमित्वा ॥ पूङ् पूञ् वा । पूत्वा । पवित्वा ॥ क्लिष्ट्वा । क्लिशित्वा ॥ उदनुबन्धस्य क्लिशश्च प्राप्ते विभाषा । पूङः कानुबन्धेऽप्राप्त एव ॥

जॄव्रश्च्योरिट् ॥ ८५ ॥

जॄव्रश्चिभ्यां क्त्व इड् भवति । जरित्वा । जरीत्वा । व्रश्चित्वा । लाक्षणिकत्वाद् जॄष जीर्त्वा । व्रश्चेर्वचनान्नित्यमिडिति ॥ पुनरिड्ग्रहणमुत्तरत्र वानिवृत्त्यर्थम् ॥

लुभो विमोहने ॥ ८६ ॥

विमोहने लुभः क्त्व इड् भवति । लुभित्वा ॥ गार्ध्ये तु । लुब्ध्वा । लुभित्वा ॥

क्षुधिवसोश्च ॥ ८७ ॥

चकारेण लुभो विमोहने इत्यनुकृष्यते उत्तरार्थम् ।

क्षुधिवसोश्च क्त्वीड् भवति। क्षुधित्वा। उषित्वा। प्रतिषेध-
बाधकमिदम्॥

निष्ठायां च॥ ८८॥

क्षुधिवसिभ्यां विमोहने लुभश्च निष्ठायामिड् भवति।
क्षुधितः। क्षुधितवान्। उषितः। उषितवान्। लुभितः।
लुभितवान्॥ शास्त्रे व्याप्त्या विभाषापि बाध्यते। लुब्धः।
लुब्धवान्॥

पूक्लिशोर्वा॥ ८९॥

पुवः क्लिशश्च निष्ठायामिड् भवति वा। पवितः।
पवितवान्। पूतः। पूतवान्॥ क्लिश क्लिशू। क्लिशितः।
क्लिशितवान्। क्लिष्टः। क्लिष्टवान्॥

न डीश्वीदनुबन्धवेटामपतिनिष्कुषोः॥९०॥

एभ्यो धातुभ्यः पतिनिष्कुषवर्जितेभ्यो निष्ठायां नेड्
भवति। उड्डीनः। उड्डीनवान्। शूनः। शूनवान्॥
दीपी। दीप्तः। दीप्तवान्॥ ओलस्जी। लग्नः। लग्न-
वान्॥ लस्जेरीदनुबन्धत्वादिड्भावे नत्वं स्याच्चेद् ईदनु-
बन्धः किम्? सविकल्पकं वा ज्ञापकं स्यादिति। तथा डो
ढौ च कर्तव्यौ॥ विकल्पेटा च। गुहू। गूढः। गूढवान्॥
शमु। शान्तः। शान्तवान्॥ अपतिनिष्कुषोरिति किम्?
पतितः। पतितवान्। निष्कुषितः। निष्कुषितवान्॥
कथं दरिद्रितः। दरिद्रितवान्। एकस्वरोऽस्य स्यार्त्य।
अपतिनिष्कुषोरिति पर्युदासाद्वा॥

## आदनुबन्धाच्च ॥ ८१ ॥

आदनुबन्धाच्च धातोर्निष्ठायां नेड् भवति । ञिमिदा । मिन्नः । मिन्नवान् ॥ ञिक्ष्विदा । क्ष्विण्णः । क्ष्विण्णवान् ॥ चकारोऽनुक्तसमुच्चयार्थः । तेन जपिवमिभ्यां वा । जप्तः । जपितः । वान्तः । वमितः । व्याङ्भ्यां श्वसः । विश्वस्तः । विश्वसितः । आश्वस्तः । आश्वसितः । कर्तरि कर्मणि चायं प्रतिषेधः । भावादिकर्मणोर्वेति वक्ष्यति ॥

## भावादिकर्मणोर्वा ॥ ८२ ॥

आदनुबन्धाद्धातोर्भाव आदिक्रियायां च निष्ठायामिड् भवति वा । मिन्नं मेदितमनेन । प्रमिन्नः प्रमेदितो भवान् । वेट्त्वात् सिद्धो योगविभागो ज्ञापयति यदर्थस्य विभाषा तदर्थस्यैव प्रतिषेध इति । तेन गमहनविदविशदृशां वा [का० ४,६ ७७] इति लाभार्थस्य विदेर्वेट्त्वे ज्ञानार्थस्य प्रतिषेधो न स्यात् । विदितः । विदितवान् ॥

## क्षुभिवाहिस्वनिध्वनिफणिकषिघुषां क्ते नेड् मन्थभृशमनस्तमोऽनायासकृच्छ्राविशब्दनेषु ८३

एभ्यो मन्थादिष्वर्थेषु क्ते नेड् भवति यथासङ्ख्यम् । क्षुब्धो मन्थः । चलितो मन्थ इत्यर्थः । मन्थ इति द्रवद्रव्यालोडिताः सक्तव उच्यन्ते ॥ वाहृ प्रयत्ने । बाढं भृशम् । प्रयत्नादत्यतिशयोऽभ्युपगमश्च गृह्यते । न तु योगार्थः ॥ स्वान्तं मनः । बाह्यव्यविचितमित्यर्थः ॥ ध्वान्तं तमः ॥ फण गतौ । फाण्टम् । अनायासनिर्यातत्वात् सद्यो भिषज्ञोद्धृतौषधं द्रवद्रव्यमेवेष्यते ॥ कष शिष । कष्टोऽग्निः । कष्टः

पर्वतः । कृच्छ्रहेतुत्वात् कृच्छ्रमशनमप्युच्यते । कृच्छ्रं दुःखम् । सति मुख्ये गौणेऽप्यभिधानम् ॥ घुषिरशब्द इत्यादौ । घुष्टा रज्जुः । घुष्टं शरीरम् । घुषिरविशब्दन इ चुरादौ, विशब्दने तु भ्वादिः । अवघुषितं वाक्यमाह विशब्दन इति प्रतिषेधाच्चुरादावित् स्याद् विभाषयो तेनेदं सिद्धम् । महीपालवचः श्रुत्वा जुघुषुः पुष्यमाणवा अनेकार्थत्वाद् भौवादिक एव वा विशब्दनेऽपि । स्वाभिप्रायं शब्दैराविष्कृतवन्त इत्यर्थः ॥ मन्थादिष्विति किम् क्षुभितः । वाचितः । स्वनितः । ध्वनितः । फाणितः कषितः । घुषितः ॥ तथा भिन्नाधिकरणेऽपि । क्षुभितं मन्थेन । वाचितं भयेन । स्वनितं मनसा । ध्वनितं तमसा फाणितमनायासेन । कषितं कृच्छ्रेण । घुषितं शरीरेण कथम् उद्घुष्टं कोकिलयेति प्रकृत्यर्थविशेषणात् । कथं क्षुब्धसमुद्र इत्युपमानाद्भविष्यति ॥

**लग्नम्लिष्टविरिब्धाः सक्ताविस्पष्टस्वरेषु ॥ ८४**

लग्नादयः क्तान्ताः सक्तादिष्वर्थेषु यथासंख्यं निपत्यन्ते । लगे लग्नं सक्तम् । लगितमन्यत् ॥ म्लेच्छ । म्लिष्टमविस्पष्टम् । म्लेच्छितमन्यत् ॥ रेभृ । विरिब्धः स्वरः स्वरो ध्वनिरत्र । विरेभितमन्यत् । अन्ये तु विरिभितमिमत्वा दाधर्त्ति रिभिं सौत्रं धातुं मन्वते ॥ स्पष्टो विस्पष्टः स्पशेरादनुबन्धात् । शमोरीदनुबन्धाद् वेडिति प्रतिषेध प्रागप्राप्त एव रूढः । अन्यो स्पशितः । विस्पशित इत्यभिधानात् सोऽनित्यत्वाद् वा ॥

## परिवृढदृढौ प्रभुबलवतोः ॥ ८५ ॥

एतौ प्रभुबलवतोरर्थयोर्यथासङ्ख्यं निपात्येते । परिपूर्वस्य बृंहेरिड्भावो नलोपश्च । तथा दृंहेश्च । दृहदृढौ प्रकृत्यन्तरे तयोरपीत्येके । परिवृढः प्रभुः । दृढो बलवान् । स्थूलोऽपि । दृढो बलवानेवाभिधीयते ॥ कथं परिवृढय्य गतः । परिवृढादिन् समासाभावाद् यब् न स्यात् । सत्यम् । तत्करोतीति सिद्धं । मर्यादमतुष्ट इति गणपाठो ज्ञापयति । नामसमासादिन ॥ अपचायितः । अपचित इति चायिना चिक्या च पूजार्थस्तेना सिद्धम् ॥ कथं दृढं पारायणं विधेय । सत्ता गुणस्थानेनेति । अन्यम् तेऽनर्थदृतेर्भवि-ष्यति । दृनन्तसापि । वर्तितो गुणोऽनेनेति भवितव्यमिति मतम् । अन्ये विनीतोऽध्ययने वृत्तमिति निपातयन्ति ॥

## संनिविभ्योऽर्देः ॥ ८६ ॥

सन्निविभ्य परस्यार्देते इ नेड् भवति । समर्णः । न्यर्णः । व्यर्णः ॥ निष्ठायामनिपातेष्वित्यन्ये ॥

## सामीप्येऽभेः ॥ ८७ ॥

अभे परस्यार्देते इ नेड् भवति सामीप्येऽर्थे । अभ्यर्णो सेना । सामीप्य इत्यर्थः ॥ अनतिदूर इत्येकेऽभिधानात् ।

## वा रुष्यमत्वरसंघुषास्वनाम् ॥ ८७ ॥

एभ्य इ नेड् भवति वा । रुष्ट । रुषित । वैयुषव्हनुनगपलादिना वेटत्वात् प्रतिषेधः प्राप्तः ॥ अम गतौ न तस्य

योग इनन्तत्वात् । अभ्यान्तः । अभ्यमितः ॥ तूर्णः । त्वरितः । आदनुबन्धाच्चेति प्रतिषेधः प्राप्तः ॥ सङ्घुष्टं । सङ्घुषितं वाक्यमाह ॥ सङ्घुष्टौ । सङ्घुषितौ दम्यौ ॥ सम्पूर्वो घुषिर्विशब्दनेऽपि परत्वादयमेव ॥ आङ्पूर्वस्य स्वन । आस्वान्तः । आस्वनितो मृदङ्गः । आस्वान्तं । आस्वनितं मनः । परत्वान्मनोऽभिधानेऽप्ययमेव ॥

## हृषेर्लोमसु ॥ ९९ ॥

लोमसु वर्त्तमानाद् हृषेः क्ते नेड् भवति वा । हृष्टानि । हृषितानि लोमानि ॥ हृष्टम् । हृषितं लोमभिः ॥ हृष्टाः । हृषिताः केशाः ॥ हृषु अलीके इत्युदनुबन्धत्वाद् निष्ठायामनिट् ॥ हृष तुष्टावित्ययं तु सेट् । उभयोरपि विभाषेयम् ॥ लोमान्यङ्गजानि मूर्धजानि च कथ्यन्ते । यथा लोम नखं स्पृष्ट्वा शौचं कर्त्तव्यमिति ॥ हृषिर्लोमसु वर्त्तमानो लोमकर्त्तृक एव ॥ लोमस्विति किम् ? हृष्टश्चैत्र इत्यलीकार्थस्य । हृषितश्चैत्र इति तुष्टार्थस्य ॥ लोमस्वित्युपलक्षणं विस्मयप्रतिघातयोर्वा स्यात् । हृष्टो हृषितश्चैत्रः । विस्मित इत्यर्थः ॥ हृष्टा हृषिता दन्ताः । प्रतिहता इत्यर्थः ॥

## दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताश्चेनन्ताः ॥ १०० ॥

एते इनन्ता वा निपात्यन्ते । दान्तः । दमितः ॥ शान्तः । शमितः ॥ पूरी दैवादिकश्चौरादिकश्च । पूर्णः ।

पूरित ॥ दस । दस्तः । दासितः ॥ स्पष्टः । स्पाशितः ॥ छद स्पट सम्वरणे । छन्नः । छादित ॥ ज्ञारयतीषवनिशामनेषु ज्ञा मातुबन्धश्च । ज्ञप्तः । ज्ञपितः । इट्प्रतिषेधे इणो लुग निपात्यते । ज्ञपेर्वेट्त्वाद् नित्यं प्रतिषेधे प्राप्ते ॥

## रदाभ्यां निष्ठातो नः पूर्वस्य च दः ॥ १०१ ॥

रेफात्परस्य निष्ठातकारस्य नकारो भवति । न तु पूर्मूर्छिमदिख्याध्याभ्यः । शीर्ण । शीर्णवान् ॥ गुरी । अवगूर्णं अवगूर्णवान् ॥ यदि रश्रुतिरपि स्यात्ततमिति । न नत्वम् ऋकारावयवेन व्यवधानात् । चरितमित्यत्र निष्ठावयवेनेटा व्यवधानात् । कृतस्यापत्यं कार्त्तिरित्यसिद्धं बहिरङ्गमन्तरङ्ग इति ॥ प्रतिषेधः किम् ? पृ । पूर्ण ॥ मूर्छा । मूर्तः ॥ मदिख्याध्याभ्यः पराभ्यां प्राप्ते । मत्त. । ख्यात. । ध्यात ॥

## दाद् दस्य च ॥ १०२ ॥

दकारात्परस्य निष्ठातकारस्य नकारो भवति दकारस्य च । भिन्नः । भिन्नवान् ।

## आतोऽन्तःस्थासंयुक्तात् ॥ १०३ ॥

अन्तःस्थासंयुक्तादाकारात्परस्य निष्ठातकारस्य नकारो भवति । ग्लान । ग्लानवान् । विश्राण । विश्राणवान् । म्लान । म्लानवान् ॥ धात्वधिकारात् । निर्यातः । निर्यातवान् ।

## ल्वादिभ्योदनुबन्धाच ॥ १०४ ॥

लूञादिभ्य ओदनुबन्धेभ्यश्च परस्य निष्ठातकारस्य

नकारो भवति । लूञ् । लूनः । लूनवान् ॥ ज्या । जीनः । जीनवान् ॥ वलो । वग्नः । वग्नवान् ॥ भुजो । भुग्नः । भुग्नवान् ॥ स्वादय ओदनुबन्धाः । षूङ् प्राणिप्रसवे । सूनः । सूनवान् ॥ दूङ् । दूनः । दूनवान् । गणकृतस्यानित्यत्वात् ॥ पूञो नाशे । पूना यवाः । विनष्टा इत्यर्थः । नाश इति किम् ? पूतं धान्यम् । कम्पितमित्यर्थः ॥ दुग्वोर्दीर्घश्च । विदूनः । विदूनवान् । विगूनः । विगूनवान् ॥ चकारोऽनुक्तसमुच्चयार्थः ॥ ऋल्वादिभ्यश्च क्तिः । कीर्णिः । गीर्णिः । लूनिः । पूनिः । धूनिः ॥ क्तौ चेति यावल्लूयादिस्ततो हल्करणात् ॥ ह्लाग्याम्लाभ्यश्च । ह्लानिः । ग्लानिः । म्लानिः ॥

## क्षेः क्ष च ॥ १०५ ॥

क्षेः परस्य निष्ठातकारस्य नकारो भवति कादेशश्चान्ते । क्षेरेव सुतत्वाच्छोपधस्य क्षेर्धुट्यन्तलोपे सति सत्त्वबाधकं कत्वं स्यात् । क्षणः क्षणवान् ॥

## क्षेदीर्घात् ॥ १०६ ॥

दीर्घान्तात् परस्य क्षेर्निष्ठातकारस्य नकारो भवति । क्षीणः । क्षीणवान् ॥ दीर्घादिति किम् ? क्षितायुर्जाल्मः । क्षितकस्तपस्वी ॥

## श्योऽस्पर्शे ॥ १०७ ॥

अस्पर्शे वर्त्तमानाच्छ्यायतेर्निष्ठातकारस्य नकारो भवति । शीनं घृतम् । शीनवद् घृतम् ॥ अस्पर्श इति प्रसज्यो ऽयं नञ् । शीतं जलम् । गुणभूतोऽपि स्पर्शे नत्वमतिषे

धस्य सम्प्रसारणस्य च निमित्तम्। न तु येति। तेन प्रति-
शीनमिति नत्वं भवत्येव॥

## अनपादानेऽञ्चेः ॥ १०८ ॥

अनपादाने वर्त्तमानादञ्चतेः परस्य निष्ठातकारस्य नकारो भवति। समक्नः। समक्नवान्। समक्त इत्यर्थः॥ अनपादान इति किम्? उदक्तमुदकम्। कूपादुद्धृतमित्यर्थः॥ व्यक्तमित्यनञ्जे रूपम्॥ अञ्चितः। अञ्चितवानिति। इटा व्यवहितत्वात्। पूजायामञ्चतेरिड्भावो नलोपश्च नेष्यते॥

## अविजिगीषायां दिवः ॥ १०९ ॥

अविजिगीषायां वर्त्तमानाद् दिवः परस्य निष्ठातकारस्य नकारो भवति। आद्यूनः। आद्यूनवान्। अविजिगीषायामिति किम्? द्यूतं वर्त्तते। विजिगीषया अक्षपातः क्रियते॥ सिनोतेः कर्मकर्त्तरि ग्रासे वक्तव्यम्। सिनो ग्रासः स्वयमेव। बद्ध इत्यर्थः॥

## क्षीघ्रात्रोन्दनुदविन्दां वा ॥ ११० ॥

एभ्यः परस्य निष्ठातकारस्य नकारो भवति वा। क्षीणः। क्षीणवान्। क्षीतः। क्षीतवान्॥ घ्राण। घ्राणवान्। घ्रातः। घ्रातवान्॥ त्राणः। त्राणवान्। त्रातः त्रातवान्॥ उन्दी। समुन्नः। समुन्नवान्। समुत्तः। समुत्तवान्॥ नुद। नुन्नः। नुन्नवान्। नुत्तः। नुत्तवान्॥ विद विचारे। विन्नः। विन्नवान्। वित्तः। वित्तवान्॥ अनवस्थितविभा-

यथा नित्यं संज्ञायाम् । द्रैववात: ॥ तथा ।

विचारार्थाद्विभाषैव ज्ञानार्थान्नित्यमिष्यते ।
भोगादन्यत्र लाभार्थात्सत्तार्थाच्च विदेः सदा ॥

## क्षैशुषिपचां मकवाः ॥ १११ ॥

एभ्यस्त्रिभ्यो यथासंख्यं निष्ठातकारस्य मकवा भवन्ति । क्षामः । क्षामवान् ॥ शुष्कः । शुष्कवान् ॥ पक्वः । पक्ववान् ॥ द्वयोर्विभाषयोर्मध्ये यो विधिः स नित्य एव ॥

## वा प्रस्त्यो मः ॥ ११२ ॥

प्रपूर्वस्य स्त्यायतेर्वा निष्ठातकारस्य मकारो भवति । प्रस्तीमः । प्रस्तीमवान् । प्रस्तीतः । प्रस्तीतवान् । मत्वान्नित्यं सम्प्रसारणम् ॥

## निर्वाणोऽवाते ॥ ११३ ॥

निर्वाण इति निपात्यते वातविषये चेत्तदर्थो न भवति । निर्वाणोऽग्निः । दीप्त उपरमे वर्तते ॥ निर्वाणो भिक्षुः । रागादिप्रशमनेऽत्र ॥ अवात इति किम् ? निर्वातो वातः । विरोधेऽत्र ॥ कथं निर्वाणो दीपो वातेन ? अत्र वातः करणं न त्वाधारः । निर्वातं वातेनेति भावेऽपि वात एव कर्त्ता ॥

## भित्तवित्ताः शकलाधमर्णभोगेषु ॥ ११४ ॥

भित्तादयः शब्दाः शकलादिष्वर्थेषु यथासंख्यं निपात्यन्ते । भित्तं शकलमिति पर्यायः ॥ ऋ गतौ । ऋण मोच्यम् । ऋणेऽधमोऽधमर्णः । तद्विषये निपातनम् ॥

अधमर्णग्रहणं कालान्तरादिविनियमोपलक्षणं तेनोत्तमर्णविषयेऽपि स्यात् ॥ विदृष्ट । वित्तं द्रव्यम् । भुज्यत इति भोग उच्यते । वित्तमिव वित्तमित्युपचारात् प्रतीतेऽप्यभिधीयते ॥

## अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः ॥ ११५ ॥

एते क्तान्ता निपात्यन्ते न चेदुपसर्गात्परे भवन्ति । इह ञिफला विशरणे निष्ठातकारस्य लत्वम् । फुल्लः ॥ क्तवन्तोरपि लत्वमिच्छन्त्यन्ये । फुल्लवान् ॥ क्षीबृकृशिभ्यामुत्पूर्वाच्च लाघेः परस्यैव निष्ठातकारस्यैव लोप इड्भावश्च । क्षीबः । कृशः । उल्लाघः ॥ अनुपसर्गादिति किम् ? प्रफुल्लितः । प्रक्षीबितः । प्रकृशितः । प्रोल्लाघितः ॥ कथं सम्प्रफुल्लः । उत्फुल्लः । फुल्ल विकसनेऽचा सिद्धम् ॥ परिकृश इति केन सिद्धम् । वचनं तु रूपान्तरं स्यादिति ॥

## अवर्णादूठो वृद्धिः ॥ ११६ ॥

धातोरधातोर्वाऽवर्णात्परस्योठो वृद्धिर्भवति ॥ शव । शौः । शावौ । शावः ॥ धावु । धौतः । धौतवान् । अवनम् । ऊतिः ॥ पटौतिः ॥ जनानवति । जनौः । जनावौ ॥ ऊट इति किम् ? अयोढा । कटोढा ॥ औरिति सिद्धे वृद्धिग्रहणं मङ्गलार्थम् ॥

॥ इति दौर्गसिंह्यां वृत्तौ कृत्सु षष्ठः पादः समाप्तः ॥

॥ इति कातन्त्रं समाप्तम् ॥

